समुद्रयात्रा, कमण्डलुधारणम्, असवर्णकन्योपयमः, देवरेण सुतोत्पत्तिः, मधुपर्के गोघातनं, श्राद्धे मांसदानं, वानप्रस्थाश्रयः, दत्ताक्षतायाः कन्यायाः पुनर्दानं, दीर्घकालं ब्रह्मचर्य्यं, नरमेधाश्वमेधयोरनुष्ठानं, महाप्रस्थानगमनं, गोमेधयज्ञानुष्ठानञ्च इत्येते धर्म्मा न करणीयाः। देशाचारस्तु तत्तद्देशीयैर्ग्राह्य एव। ततः सूतेन ब्राह्मणादीनां वर्णानां क्रियाश्च यथाक्रममुक्ताः। यथा ब्राह्मणादीनां त्रयाणां वर्णानां दानं वेदाध्ययनं यजनञ्चेति त्रीणि कर्म्माणि साधारणान्येव, ब्राह्मणानां विशेषकर्म्माणि त्वध्यापनं याजनं दानग्रहणञ्चेति त्रीणि, क्षत्रियाणां विशेषकर्म्माणि च शस्त्राजीवित्वं, दुष्टानां दमनं, शिष्टानां पालनञ्चेति त्रीणि, वैश्यानां विशेषकर्म्माणि च कृषिर्वाणिज्यं पाशुपाल्यञ्चेति त्रीणि। शूद्राणान्तु द्विजानां शुश्रूषेत्येकङ्कर्म्म प्रधानं, तेषां दानेऽप्यधिकारोऽस्ति। ऋतुकाले स्वभार्य्याभिगमनं, सर्व्वलोकहितैषित्वं, मङ्गलं प्रियवादिता, अनायासो महोत्साहस्तितिक्षाऽनभिमानितेत्येतानि सर्व्ववर्णानां सामान्यानि कर्म्माणि। ब्राह्मणेनापत्काले क्षत्रियाचारः, क्षत्रियेणापत्काले वैश्यधर्म्मो ग्राह्यः, परमत्यापद्यपि द्विजेन न शूद्रवृत्तिर्ग्राह्या। शूद्राचारी द्विजस्तु चण्डालतुल्यो भवति। ब्राह्मणादीनां त्रयाणां वर्णानां चत्वार एवाश्रमा भवन्ति। ब्रह्मचर्य्यं गार्हस्थ्यं वानप्रस्थ्यं भिक्षाश्रमश्चेति। एतैश्चतुर्भिराश्रमैरेव परमो धर्म्मः साध्यते विष्णुश्च तुष्यति। अत्रैव द्वाविंशाध्यायावसानम्।

त्रयोविंशाध्याये सूतेन विशेषतो वर्णाश्रमाचारविधिरुक्त-स्तथाहि वर्णाश्रमाचारिभिः सर्व्वैरेव स्वकर्म्माणि कर्त्तव्यानि, तेषु यः स्वकर्म्म परित्यज्य परकर्म्म निषेवते स सर्व्वधर्म्मवहिष्कृतः पाषण्ड इति कथ्यते। द्विजानां हि गर्भाधानादिसंस्काराः समन्त्रकं यथाकालं यथाशास्त्रञ्च कार्य्याः, स्त्रीणां शूद्राणान्त्वमन्त्रकम्। तत्तु गर्भाधानं स्त्रीणां प्रथमरजोदर्शने कर्त्तव्यम्। अथ प्रथमे गर्भे सीमन्तं कुर्य्यात्तस्य मुख्यः कालश्चतुर्थो मासः, अन्यत्रापि षष्ठे, सप्तमे, अष्टमे वा मासि सीमन्तं कुर्य्यात्*। अथ पुत्रे जाते पिता सचेलं स्नात्वा जातकर्म्म कुर्य्यात्। ततः सूतकान्ते नाम कुर्य्यात्, तच्च नाम नास्पष्टमर्थहीनमतिगुर्व्वक्षरान्वितं विषमाक्षरं वा भवेत्। ततः स्वगृह्योक्तमार्गतस्तृतीये, पञ्चमे, षष्ठे, सप्तमेऽष्टमे वा चूड़ाकर्म्म कुर्य्यात्†। दैवयोगाद्गर्भाधानादिषु कर्म्मसु नानुष्ठितेषु चूड़ाकाले कृच्छ्रपादं तदर्द्धं वा प्रायश्चित्तं विधाय तानि पूर्व्वं कर्त्तव्यानि। अथ ब्राह्मणस्य गर्भाष्टमेऽष्टमे वाऽब्दे उपनयनस्य मुख्यः कालः, गौणकालस्त्वाषोड़शाब्दपर्य्यन्तमस्ति। क्षत्त्रियस्योपनयनस्य मुख्यकालः गर्भैकादशाब्दः गौणकालस्तु द्वाविंशाब्दपर्य्यन्तम्। वैश्यस्योपनयनस्य मुख्यः कालः द्वादशवत्सरः, गौणकालस्तु चतुर्विंशाब्दपर्य्यन्तम्। यस्य द्विजस्य गौणकालावधेरप्यतिक्रमो जातस्तं सावित्रीपतितं विद्यात्, तेन सहालापश्च न विधेयः। द्विज-

---

* धर्म्मनिबन्धकृद्भिः सीमन्तात् प्राक् पुंसवनं नाम संस्कारान्तरं कर्त्तव्यतया विहितम्।

† नामकरणादनन्तरमन्नप्राशनसंस्कारो विहितोऽन्यत्र धर्म्मशास्त्रेषु।

स्योपनयने मुख्यकालस्यातिक्रमे यथाक्रमं द्वादशाब्दं, कृच्छ्रं, चान्द्रायणं, सान्तपनद्वयञ्च कृत्वा उपनयनमारभेत, अन्यथा पातित्यं, संस्कारकर्त्तुरपि ब्रह्महत्यासमं पापं भवति। उपनयनकाले विप्रस्य मेखला मौञ्जी, क्षत्रियस्य धनुर्ज्या, वैश्यस्य शावी भवति, अजिनमपि ब्राह्मणस्यैणेयं, क्षत्रियस्य रौरवं, वैश्यस्याजं ; एवं प्रतिवर्णं दण्डस्यापि पृथक्त्वं यथा ब्राह्मणस्य पालाशं, क्षत्रियस्यौडुम्बरं, वैश्यस्य वैल्वं दण्डं कुर्य्यात् । विप्रदण्डः केशप्रमाणः, क्षत्रियदण्डो ललाटमानः, वैश्यदण्डश्च नासाग्रसम्मितो भवति। एवं वासोऽपि तेषां यथाक्रमं यथा विप्रस्य काषायं, क्षत्रियस्य माञ्जिष्ठं, वैश्यस्य हारिद्रमिति। उपनीतो द्विजो वेदग्रहणपर्य्यन्तं गुरोः परिचर्य्यापरो भूत्वा गुरुवेश्मनि निवसेत्। स ब्रह्मचर्य्यमाचरन् प्रातःस्नानञ्च कुर्व्वन् नित्यं कल्यं कल्यं गुर्व्वर्थं समित्कुशफलादीनि यज्ञोपवीतमजिनं दण्डञ्चाहरेत्। वर्णिनो भिक्षान्नेनैव वर्त्तनं विहितम्। भिक्षा च प्रयतेन्द्रियेण तेन श्रोत्रियागारादेवाहर्त्तव्या। वर्णिना जितेन्द्रियेण सता प्रतिदिनं सायं प्रातरग्निकार्य्यं तथा यथाकालं ब्रह्मयज्ञस्तर्पणञ्च कर्त्तव्यम्, अग्निकार्य्यपरित्यागी हि पण्डितैः पतित इति कथ्यते ब्रह्मयज्ञविहीनश्च ब्रह्महेति। स ब्रह्मचारी भिक्षान्नमाहृत्य सर्व्वं गुरवे निवेदयेत्। ततो गुर्व्वनुज्ञया वाग्यतोऽश्नीयात्। स मधु, स्त्रीं, मांसं, लवणं, ताम्बूलं, दन्तधावनम्, उच्छिष्टभोजनं, दिवास्वापञ्च वर्ज्जयेत्। तथा तेन छत्रगन्धपादुकानुलेपनानि जलकेलिद्यूतगीत-

वाद्यानि, परीवादा रोषस्तोषो विप्रलापश्च वर्ज्जनीयाः। स पाषण्डजनसंसर्गं शूद्रसङ्गञ्च वर्ज्जयेत्। नित्यं वृद्धेष्वभिवादनशीलो भवेत्, वृद्धाश्च त्रिविधा ज्ञानवृद्धास्तपोवृद्धा वयोवृद्धाश्चेति। यश्च वेदशास्त्रोपदेशेनाध्यात्मिकानि दुःखानि वारयति तं गुरुं प्रथममभिवादयेत्, अभिवादनसमये चाऽसावहमिति ब्रूयात्। विप्रेण क्षत्रियाद्याः कदाचन नाभिवाद्याः। तथा नास्तिकं, भिन्नमर्य्यादं, कृतघ्नं, ग्रामयाजकं, पातकिनं, पाषण्डं, पतितं, मूर्खं, नक्षत्रपाठकम्, उन्मत्तं, शठं, धूर्त्तं, धावन्तम्, अशुचिम्, अभ्यक्ताङ्गशिरसं, जपन्तं, स्नानमाचरन्तं, समित्पुष्पकरम्, उदपात्रधरं, भुञ्जानं, विवादशीलिनं, चण्डं, रममाणं, जलमध्यगं, भिक्षान्नधारिणं, शयानञ्च नाभिवादयेत्। स्त्रियमपि भर्त्तृघ्नीं, पुष्पिणीं, सजारां, सूतिकां, गर्भपातिनीं, कृतघ्नीं, चण्डाञ्च कदाचिन्नाभिवादयेत्। सभायां, यज्ञशालायां, देवतायतनेष्वपि स्थितानां नमस्यानां प्रत्येकं नमस्कारो हि पुराकृतं पुण्यं हन्ति। तथा श्राद्धं, व्रतं, दानं, देवताभ्यर्च्चनं, यज्ञं, तर्पणञ्चैव कुर्व्वन्तं नाभिवादयेत्। अभिवादने कृते तु यः प्रत्यभिवादनं न कुर्य्यात् स पुनर्नाभिवाद्यो यतः स शूद्रसदृश एव। ततः परं सूतेनाध्ययनविधिरभिहितः। यथा शिष्यः पादौ प्रक्षाल्याचम्य गुरोरभिमुखीनस्तस्य पादौ च संगृह्याधीयीत। परम् अष्टकासु, चतुर्द्दश्यां, प्रतिपदि, पर्व्वणि (अमावस्या-पूर्णिमयोः), महाभरण्यां, श्रवणाद्वादशीदिने, भद्रिपदापरपक्षे, तदनन्तरद्वितीयायाञ्च, शयनोत्थानद्वादश्योः,

श्रोत्रियमरणे, चान्द्राषाढ़-कार्त्तिक-फाल्गुन-शुक्लपक्षीयद्वितीयासु, माघसप्तम्यामाश्विनशुक्लनवम्यां, सूर्य्यस्य परिवेशाधिक्ये, श्रोत्रिये पूजितब्राह्मणे च गृहमागते, प्रवृद्धकलहे, सन्ध्यायां मेघगर्ज्जने, चाकालमेघगर्ज्जने, उल्काशनिप्रपाते, ब्राह्मणाऽवमानने, मन्वन्तरेषु, युगाद्यासु चाध्ययनं न कर्त्तव्यं, युगाद्याश्च वैशाखी शुक्लतृतीया, प्रेतपक्षीयत्रयोदशी, कार्त्तिकशुक्लनवमी, माघी पूर्णिमा चेति चतस्रः। मन्वन्तरदिनानि च आश्विनशुक्लनवमी, कार्त्तिकशुक्लद्वादशी, चैत्रभाद्रपदयोस्तृतीया, आषाढ़शुक्लदशमी, माघस्य शुक्लसप्तमी, श्रावणस्य कृष्णाष्टमी, आषाढ़ी, कार्त्तिकी, फाल्गुनी, चैत्री, ज्यैष्ठी च पूर्णिमा, फाल्गुनस्यामावास्या, पौषस्य शुक्लैकादशी चेति चतुर्दश। एषु दिनेषु दत्तं ह्यक्षयं भवति। मन्वन्तरदिनेषु युगादिषु चन्द्रसूर्य्ययोर्ग्रहणे च ब्राह्मणैः श्राद्धं कर्त्तव्यम्। एवमयनादौ, शवानुगमने, आरण्यकमधीत्य, सूतके, सर्पादिदंशने, भूमिकम्पने चाऽनध्यायः प्रशस्तः। अनध्यायेष्वधीतानां हि यमः स्वयं प्रजाः, प्रज्ञाः, यशः, श्रियम्, आयुष्यं, बलमारोग्यञ्च निकृन्तति, ये त्वनध्यायेष्वध्ययनं कुर्व्वन्ति ते ब्रह्मघातिन एव तैः सह नालपेन्न संवसेदपि। केचित्कुण्डगोलकयोर्व्रात्यादीनाञ्चोपनयनं व्यवस्थापयन्ति, अपरे च तत्पुत्रादीनाम्। यो यथाविध्यनधीत्य वेदाङ्गशास्त्राणि च पठते स शूद्रतुल्य एवान्ते च नरकं भजते। अनधीयानविप्रस्य नित्यं, नैमित्तिकं, काम्यं सर्व्वमेव कर्म्म निष्फलं भवति।

चतुर्विंशाध्याये स एवाश्रमाचारः सूतेन निःशेषतः कथितः। यथा वेदाध्ययनसमाप्तिपर्य्यन्तं ब्रह्मचारी गुरुशुश्रूषानिरतो भवेत्। ततस्तेनानुज्ञातस्तस्मै दक्षिणां दत्त्वा च गृही भवेत्। सुलक्षणां सुरूपां सुकुलोद्भवां सुशीलां धर्म्मचारिणीमसपिण्डामसगोत्राञ्च कन्यामुद्वहेत्। रोगिणीं, वृत्ताक्षीं, सरोगकुलसम्भवाम्, अतिकेशामकेशां वा, वाचालां, कोपनां, वामनां, दीर्घदेहां, विरूपां, न्यूनाधिकाङ्गीम्, उन्मत्तां, पिशुनां, स्थूलगुल्फां, दीर्घजङ्घां, पुरुषाकृतिं, श्मश्रुव्यञ्जनसंयुतां, विकारां, वृथाहास्यमुखीं, सदाऽन्यगृहवासिनीं, विवादशीलां, निष्ठुरां, बह्वशनीं, स्थूलदन्तां, स्थूलौष्ठीं, घर्घरस्वनाम्, अतिकृष्णां, रक्तवर्णां, धूर्त्तां, सदा रोदनशीलां, पाण्डुवर्णां, कुत्सितां, श्वासकासादिसंयुक्ताम्, अनर्थभाषिणीं, लोकद्वेषपरायणां, परनिन्दारतां, तस्करां, दीर्घनासां, कितवां, लोमावृततनुं, वकवृत्तिं, खर्व्विकाञ्च सर्व्वथा नोद्वहेत् यदि कदाचिद्बालभावादविज्ञातस्वभावामुद्वहेदथ तां प्रगल्भामगुणां ज्ञात्वा परित्यजेत्। या नारी सर्व्वदा भर्त्तरि पुत्रेषु च निष्ठुरा पराऽनुकूलिनी च भवेत् साऽपि सर्व्वथा परित्याज्या। विवाहस्त्वष्टविध एव—तथाहि ब्राह्मो, दैवः, आर्षः, प्राजापत्यः, आसुरो, गान्धर्व्वो, राक्षसः, पैशाचश्च, एषु पूर्व्वः पूर्व्वो वरः पैशाचस्तु निकृष्ट एव। ब्राह्मो, दैव आर्षश्च विवाहो विप्राणामगर्हितः प्राजापत्यादयः पञ्च गर्हिता एव। ततो गृहिणां वेशभूषादीनि कथितानि यथा—गृही कृत्तकेशनखः शुचिरनुलेपनलिप्ताङ्गश्च भूत्वा सोत्तरीयं

यज्ञोपवीतद्वयं, सुवर्णकुण्डले, धौतवाससी, वैणवं दण्डं, सोदकं कमण्डलुं, निर्म्मलमुष्णीषं, छत्रं, पादुकेऽप्युपानहौ, सुगन्धे पुष्पमाल्ये च धारयेत्। अथ गृहस्थानामाचारः कथितो यथा—नित्यमध्यायशीलो भवेत्, सदाचारमाचरेत्, परान्नं न भुञ्जीत, परदारान् वर्ज्जयेत्, पादेन पादं नाक्रमेत्, नोच्छिष्टं लङ्घयेत्, पूज्यं देवालयञ्च नाऽपसव्यं व्रजेत्। शुष्कवादं, पैशुन्यमसूयां, मत्सरं, दिवास्वापञ्च वर्ज्जयेत्। परपापानि न वदेत्, स्वपुण्यञ्च नैव कीर्त्तयेत्, दुर्ज्जनैः सह न वसेदशास्त्रञ्च न शृणुयात्, असारगीतेषु द्यूतेषु च न रतिं कुर्य्यात्, तथा यथाकालं श्राद्धादिकं कुर्य्यात्, अशुचिस्पर्शे च स्नानमाचरेत्।

पञ्चविंशाध्याये सूतेन गृहस्थानां सदाचारः कथितः यथा—ब्राह्मे मुहूर्त्ते समुत्थानं, जगदीश्वरस्मरणपूर्व्विका वृत्तिचिन्ता, पुरीषत्यागः स च कर्णस्थयज्ञोपवीतेन सन्ध्यासु दिवा चोदङ्मुखेन रात्रौ च दक्षिणमुखेन वस्त्रेण शिरः प्रावृत्य तृणैश्च भूमिमन्तर्धाय कर्त्तव्यस्तावन्मौनिना च भवितव्यम्। पथि, गोष्ठे, नदीतीरे, तड़ागकूपसन्निधौ, वृक्षच्छायायां, कान्तारे, वह्निसन्निधौ, देवालये, उद्याने, कृष्टभूमौ, चतुष्पथे, ब्राह्मणगोऽश्वत्थयोषितां समीपे, तुषाङ्गारकपालेषु, तथा जलमध्ये एवमादिषु देशेषु, मलमूत्रं न त्यजेत्। शौचे सर्व्वदा यत्नः कार्य्यः, शौचं हि द्विजानां द्विजत्वस्य मूलं, शौचाचारविहीनस्य निखिलं कर्म्म निष्फलं भवति। शौचं हि प्रथमतो द्विविधं वाह्यमाभ्यन्तरञ्चेति। तत्र वहिःशुद्धिर्मृज्जलाभ्यां भवति, अन्तःशुद्धिश्च

भावेशुद्धैव। पुरीषत्यागानन्तरं गन्धलेपापनुत्तये शौचं कुर्व्वीत, गृहस्थानां यच्छौचं, ब्रह्मचारिणां ततो द्विगुणं, वनस्थानां त्रिगुणं, यतीनान्तु चतुर्गुणम्। स्वग्रामे पूर्णाचारं कुर्य्यात् पथि चार्द्धम्, आतुरे शौचनियमो नास्ति, तथा महापदि च। सर्व्वेषां व्रतस्थानां विधवानाञ्च यतिवच्छौचं कीर्त्तितम्। शौचं निर्व्वर्त्त्य सुसमाहितः प्राङ्मुख उदङ्मुखो वाऽपि आचामेत्। ततः स्नानं कुर्य्यात्, तदनन्तरं मार्ज्जनं तिलतर्पणञ्च कुर्य्यात् ततः सन्ध्यामुपासीत। गृहस्थः प्रातर्मध्यन्दिने चैव स्नानमाचरेत्। सन्ध्योपासना च मध्याह्ने, सायाह्ने च कार्य्या ततो ब्रह्मयज्ञं वेदोदितानि कर्म्माणि च कुर्य्यात्। यो द्विजः सन्ध्यां नोपास्ते स सर्व्वकर्म्मवहिष्कृतः पाषण्डश्च विज्ञेयः। यस्तु कूटयुक्तिवादेन सन्ध्यादिकर्म्माणि परित्यजति तं महापातकिनां वरं विद्यात्। ततो देवार्च्चनं, वैश्वदेवम्, अतिथिपूजनञ्च कुर्य्यात्। यस्य गृहादतिथिर्भग्नाशः प्रतिनिवर्त्तते सोऽतिथिस्तस्मै गृहस्थाय स्वदुष्कृतं दत्त्वा गृहस्थस्य पुण्यमादाय गच्छति। अज्ञातगोत्रनामा भिन्नग्रामनिवासी चातिथिर्भवति। स्वग्रामवासी केवलं श्रोत्रिय एवातिथिर्भवितुमर्हति। गृहस्थो हि प्रयत्नतः पञ्चयज्ञान् कुर्य्यात्। पञ्चयज्ञा यथा—देवयज्ञः, भूतयज्ञः, पितृयज्ञः, नृयज्ञो, ब्रह्मयज्ञश्चेति। ततो भृत्यमित्रादिसंयुक्तः स्वयं वाग्यतो भुञ्जीत। अभोज्यं नाश्नीयात्, पात्रं नैव परित्यजेत्, पथ्यमन्नं प्रभुञ्जीत, न वाऽन्नं कुत्सयेत्। भोजनानन्तरमाचम्य शास्त्रचिन्तापरो भवेत्। रात्रावपि यथा-

शक्ति शयनाशनभोजनैरायातमतिथिं पूजयेत्। गृही प्रत्यह-मेवं सदाचारं कुर्य्यात्, सदाचारपरित्यागी हि प्रायश्चित्तार्हो भवति। अथ गृही पलिताद्यैः स्वतनुं दूषितां दृष्ट्वा पुत्रेषु भार्य्यां निक्षिप्य तया सह एव वा वनं गच्छेत्। वनं गत्वा च त्रिषवणस्नायी, नखश्मश्रुजटाधरः, तृणशायी, ब्रह्मचारी, पञ्च-यज्ञपरायणः, सर्व्वभूतेषु दयावान्, नारायणपरायणः, स्वाध्याय-निरतश्च भवेत्। ग्रामजातानि पुष्पाणि फलानि च वर्ज्जयेत्। अष्टौ ग्रासान् भुञ्जीत, रात्रिभोजनं न कुर्य्यात्। वानप्रस्थो मृषावादं परीवादं मिथ्यावादं निद्रामालस्यञ्च वर्ज्जयेत्। स शङ्खचक्रगदापाणिं नारायणं नित्यं स्मरन् तपश्चान्द्रायणा-दिकं प्रकुर्व्वीत, शीतातपादिकं सहेत, वह्निञ्च परिचरेत्। यदा मनसि वैराग्यं जायेत, तदैव सन्न्यसेदन्यथा पतितो भवेत्। सन्न्यासी हि सर्व्वदा शान्तो दान्तो जितेन्द्रियो निर्द्वन्द्वो निरह-ङ्कारो निर्म्ममश्च भवेत्। स शत्रौ मित्रे च मानापमानयोः समो भवेत्, एकान्नाशी जितेन्द्रियो नारायणपरायणश्च स्यात्। स सर्व्वदा वेदार्थानुपनिषद्वाक्यञ्च पठेत्, तथा सहस्रशीर्षं देवे-शञ्च ध्यायेत्, एवं तस्य परब्रह्माधिगमो भवति।

षड्‌विंशाध्याये सूतेन श्राद्धविधिरुक्तस्तथाहि श्राद्धकर्त्ता पित्रादिमृततिथेः पूर्व्वेद्युः स्नात्वैकाहारी भूत्वा विप्रान्निमन्त्र-येत्, निशि ब्रह्मचर्य्यमधःशयनञ्च कुर्य्यात्। श्राद्धकर्त्ता दन्तधावनं, ताम्बूलं, तैलाभ्यङ्गं, स्वाध्यायं, परान्नानि च वर्ज्जयेत्। श्राद्ध-कर्त्ता श्राद्धभोक्ता एताभ्यामुभाभ्यामप्यध्वगमनं कलहः क्रोधो

व्यवायो दिवास्वापश्च परिवर्ज्जनीयः । यस्तु श्राद्धे निमन्त्रितो व्यवायं कुर्य्यात् स ब्रह्महत्यां प्राप्य नरकाय गच्छेत् । श्राद्धे स्वकुलोत्पन्नाः सदाचारयुक्ता विष्णुभक्ता वेदज्ञा गुणसम्पन्ना हि विप्रा निमन्त्रयितव्याः । तथा न्यूनाङ्गाः, अधिकाङ्गाः, रोगिणः, कुष्ठिनः, कुनखिनो, लम्पटाः, क्षतव्रताः, नक्षत्रपाठ-जीविनः, शवदाहकाः, कुवादिनः, परिवेत्तारः, देवलकाः, निन्दकाः, क्रोधना, धूर्त्ता, ग्रामयाजकाः, असच्छास्त्राभि-निरताः, वृषलीसूतिपोष्टारो, वृषलीपतयः, कुण्डा, गोलका, अयाज्ययाजका, वृथामुण्डनशीलाः, अन्येषां स्त्रीषु धनेषु चासक्ता, विष्णुभक्तिविहीनाः, शिवभक्तिपराङ्मुखा, वेदविक्र-यिणः, स्मृतिविक्रयिणो, व्रतविक्रयिणः, मन्त्रविक्रयिणश्च, गायकाः, काव्यकर्त्तारः, भिषक्शास्त्रजीविनश्च, वेदनिन्दका, विप्रनिन्दका, राजोपसेविनः, कृतघ्नाः, कितवाः, नित्याभि-मानिनो, द्यूतासक्ता, मिथ्यावादिनो, ग्रामारण्यदाहकाः, कामुकाः, रसविक्रयिणः, कूटयुक्तिरताश्चैते श्राद्धवर्ज्याः, नैतान्नि-मन्त्रयेत् । श्राद्धे पूर्व्वेद्युस्तद्दिने वा निमन्त्रणार्हान् विप्रान् निमन्त्रयेत् । निमन्त्रितस्तु विप्रो ब्रह्मचारी जितेन्द्रियश्च भवेत् । श्राद्धकर्त्ता श्राद्धदिवसे प्रातः समुत्थाय कुतपाख्ये (दिवसस्याष्टमे भागे) काले श्राद्धं कुर्य्यात् । ततः सर्व्वविधानां श्राद्धानामनु-ष्ठानपद्धतिरशेषत उक्ता ।

सप्तविंशाध्याये तिथीनां शुभाशुभत्वादिकं तत्कार्य्यविशे-षोपयोगित्वञ्च निरूपितम् ।

अष्टाविंशाध्याये सूतेन पापानि तद्विमोचनकारणानि प्रायश्चित्तान्यपि कथितानि। तत्र महापातकानि पञ्च,—ब्रह्महत्या, सुरापानं, स्तेयं, गुर्व्वङ्गनागमः, एतत्पापकारिभिः संसर्गश्च। यस्तु संवत्सरं यावत् शयनाशनभोजनैर्महापातकिसंसर्गं कुरुते, स सर्व्वकर्म्मसु पतितो भवति। अज्ञानाद्ब्रह्महत्यां कृत्वा हरिपरायणो भूत्वा द्वादशाब्दं व्रतं कुर्य्यात् तेनैव स शुद्धिमाप्नोति कर्म्मार्हश्च जायते। यदि व्रताचरणमध्ये मृगैर्वा रोगैर्वा निसूदितो भवेदथवा स्वयं गोब्राह्मणरक्षार्थं प्राणान् परित्यजेदथवा द्विजेन्द्रेभ्यो गवामयुतमुत्तमं दद्यात् तदा च ब्रह्महत्यापापेन मुच्यते। दीक्षितं क्षत्रियं हत्वा ब्रह्महत्याप्रायश्चित्तम्, अग्निप्रवेशनं, मरुत्पतनं वा कुर्य्यात्। दीक्षितं ब्राह्मणं हत्वा द्विगुणं व्रतमाचरेत्, आचार्य्यादिवधे चतुर्गुणं व्रतमुक्तम्। विप्रमात्रं हत्वा तु संवत्सरं व्रतं चरेत्, एवं विप्रस्य प्रायश्चित्तविधिः, क्षत्रियस्य ब्राह्मणाद्द्विगुणं प्रायश्चित्तं विहितं, वैश्यस्य तु त्रिगुणम्। यः शूद्रो ब्राह्मणं हन्ति तं पण्डिता मुषल्यं कथयन्ति, राज्ञैव तस्य शिक्षा कर्त्तव्या। ब्राह्मणीनां वधे ब्रह्महत्यार्द्धप्रायश्चित्तं, कन्यकावधे तु पाद एव। अनुपनीतान् ब्राह्मणान् हत्वा च पादव्रतं चरेत्। ब्राह्मणः क्षत्रियं हत्वा षाड़ब्दिकं कृच्छ्रं वृतमाचरेत्, वैश्यं हत्वा च संवत्सरत्रयं कृच्छ्रवृतं कुर्य्यात्, शूद्रं हत्वा तु वत्सरमात्रं कृच्छ्रवृतं कुर्य्यात्। दीक्षितस्य ब्राह्मणीं स्त्रियं हत्वाऽष्टवत्सरं ब्रह्महत्यावृतं कार्य्यम्। वृद्धातुरस्त्रीबालानां सर्व्वत्रैव पापेष्वर्द्धप्रायश्चित्तमुक्तम्। सुरा

त्रिविधा—गौड़ी, माध्वी, पैष्टी चेति । इयं चातुर्वर्ण्यैः स्त्रीभिश्चापेया । सुरापायी ब्राह्मणो हि स्नात्वार्द्रवासा नियतश्च भूत्वा चीरघृतगोमूत्रेष्वन्यतमं पक्काऽग्निसन्निभं कृत्वा लौहेनायसेन ताम्रेण वा पात्रेण पीत्वा मरणं व्रजेत् तेनैवाऽस्य शुद्धिर्भवति । अज्ञानाज्जलबुद्ध्या तु सुरां पीत्वा ब्राह्मणश्चिह्नपरिज्जितं ब्रह्महत्याव्रतं चरेत् । यदि स रोगनिवृत्त्यर्थमौषधार्थं वा सुरां पिबेत्तदा तेन भूय उपनयनं चान्द्रायणद्वयञ्च कार्य्यम् । सुरासंसृष्टमन्न, सुराभाण्डोदकञ्च सुरासमं प्रोक्तम् । तालं, पानसं, द्राक्षं, खर्ज्जूरसम्भवं, माधुकं, शैलममारिष्टं, मैरेयं, नारिकेलजं, गौड़ी, माध्वी,सुरा चेति मद्यमेवमेकादशप्रकारं भवति । ब्राह्मण एतेष्वन्यतमं कदाचिदपि न पिबेत् । यस्तु द्विज एतेष्वन्यतममज्ञानतः पिबेत्, तेन भूय उपनयनं तप्तकृच्छ्रञ्च कार्य्यम् । स्तेयं नाम समक्षं परोक्षं वा बलात् चौर्य्येण वा परस्वानामुपादानम् । सुवर्णं हि स्वनामपरिमाणपरिमितं हेम । ब्राह्मणस्य सुवर्णं हृत्वा पूर्व्ववत् कपालध्वजहीन ब्रह्महत्याव्रतञ्चरेत् । गुरूणां, यज्ञकर्तॄणां, धर्म्मिष्ठानां, श्रोत्रियाणां द्विजानाञ्च सुवर्णं हृत्वा कृतानुतापो देहञ्च सम्पूर्णं घृतैर्लेपयेत्ततः कारीषच्छादितं कृत्वा, दग्ध्वा च स्तेयपापाद्विमुच्यते । क्षत्रियो ब्रह्मस्वं हृत्वाऽश्वमेधेन शुध्यति, अथवा आत्मतुल्यं सुवर्णं गोशतत्रयं वा दद्यात् । यस्तु ब्रह्मस्वं हृत्वा पश्चात्तापमवाप्य पुनः प्रत्यर्पयति स सान्तपनं कृत्वा द्वादशाहोपवासतः शुद्धिमाप्नोति । अन्यथा पतितो भवति । रत्नासन-मनुष्य-स्त्री-धेन्वादीनां सुवर्णसदृशाना-

मपहरणे सुवर्णस्तेयार्द्धं प्रायश्चित्तम्। त्रसरेणुसमं सुवर्णमपहृत्य समाहितः प्राणायामद्वयं कुर्य्यात् तेनैव शुद्धिर्भवेत्। निष्क-प्रमाणं सुवर्णं हृत्वा प्राणायामत्रयं कृत्वा शुद्धिमाप्नुयात्। राज-सर्षपमात्रकं सुवर्णं हृत्वा चतुरः प्राणायामान् कृत्वा विशुध्यति। सर्षपमात्रं सुवर्णं हृत्वा तु विधिवत्स्नात्वाऽष्टसहस्रशो गायत्रीं जप्त्वा शुद्धिमर्हति। यवमात्रसुवर्णस्य स्तेये प्रातरारभ्य वेदमातरं गायत्रीं जप्त्वा शुद्धो भवति। कृष्णलप्रमाणं सुवर्णं हृत्वा सान्तपनं कार्य्यम्। माषप्रमाणसुवर्णं हृत्वा नारायणपरायणो मासत्रयं गोमूत्रपक्वयवभुक् शुद्धो भवति। किञ्चिन्न्यूनसुवर्ण-परिमितहेम्नः स्तेये संवत्सरं यावत् गोमूत्रपक्वयवभक्षणेन शुध्यति। सम्पूर्णस्य सुवर्णस्य स्तेये तु द्वादशाब्दान् समाहितो ब्रह्महत्याव्रतं कुर्य्यात्। सुवर्णमानान्न्यूनरजतस्तेये सान्तपनं कार्य्यमन्यथा पातित्यं भवति। दशनिष्कपर्य्यन्तमर्द्धनिष्कचतु-ष्टयञ्च रजतं हृत्वा चान्द्रायणं कृत्वा शुद्धो भवति। दशादि-शतनिष्कान्तरजतस्तेयकर्म्मणि विशुद्धार्थं चान्द्रायणद्वयं प्रोक्तम्। शतादूर्द्धं सहस्रनिष्कपर्य्यन्तरजतस्तेये तत्पापपरि-शोधकं चान्द्रायणत्रयमेव। सहस्राधिकनिष्करजतस्तेये ब्रह्म-हत्याव्रतं प्रायश्चित्तं विहितम्। सहस्रनिष्कमानकांस्य-पित्तलायस्कान्तानामपहरणे पराकं प्रायश्चित्तमुक्तम्, रत्नानां स्तेये च रजतवत्प्रायश्चित्तम्। इदानीं गुरुतल्पगतानां प्राय-श्चित्तमुच्यते। अज्ञानान्मातरं तत्सपत्नीमपि वा गत्वा पाप-मुदाहरन् स्वमुष्कं छिन्द्यात्, तच्छिन्नमुष्कं हस्ते गृहीत्वा च

नैर्ऋतीं दिशं गच्छेत्, गच्छन्तं तं कश्चित्कदाचिन्न निवारयेत्। एवं स प्राणान्तं यावत्पृष्ठतोऽपश्यन्नेव गच्छेत्। एवं प्राणान्तकृत्वा शुध्यति, अथवा स्वपापं समुदाहरन् मरुत्प्रपतनं कुर्य्यात्। अज्ञानात्स्वोत्तमवर्णस्त्रीगमने समाचितो द्वादशाब्दं ब्रह्महत्याव्रतं कुर्य्यात्। यद्यज्ञानात् अभ्यासतः सवर्णोत्तमां गच्छेत् तदा कारीषवह्निना दग्धः शुद्धिं व्रजेत्। मातृगमने यदि रेतःसेकात्पूर्व्वमेव निवृत्तो भवेत् तदा ब्रह्महत्याव्रतं कुर्य्यात्, रेतःसेके त्वग्निना स्वदेहं दहेत्। सवर्णोत्तमवर्णागमने वीर्य्यसेचनात्पूर्व्वमेव निवृत्तो भवेद्यदि, तदा षड़ब्दं कृच्छ्रं ब्रह्महत्याव्रतं कुर्य्यात्। ब्राह्मणो यदि पितुः क्षत्रियां भार्य्यां सकृद्गच्छेत् तदा नवाब्दान् विष्णुतत्परो ब्रह्महत्याव्रतं कुर्य्यात्, पितुर्वैश्यजातीयां भार्य्यांङ्गत्वा षड़ब्दकृच्छ्रमाचरेत्, तथा पितुः शूद्रजातीयां भार्य्यांङ्गत्वा त्र्यब्दं व्रतमाचरेत्। यदि कश्चित्कामतो मातृस्वसारं पितृस्वसारम् आचार्य्यभार्य्यां मातुलानीं श्वश्रूञ्च गच्छेत्तस्य प्रायश्चित्तं शृणुत। दिनद्वयं गत्वा यथाविधि ब्रह्महत्याव्रतं कुर्य्यात्, एकस्मिन्दिने बहुवारे रेतस्सेके तु त्रिवर्षव्रतं कुर्य्यात्। एकवारगमने त्वेकाब्दं व्रतङ्कृत्वा विशुध्यति। दिनद्वयगमने पुनर्वह्निनात्मानं दग्ध्वा शुद्धिं व्रजेत्। यस्तु कामतो चाण्डालीं, पुक्कशां, स्नुषां, भगिनीं, मित्रस्त्रियं, शिष्यपत्नीञ्च गच्छेत् स षड़ब्दं ब्रह्महत्याव्रतं कुर्य्यात् यस्त्वकामतो व्रजेत् स त्र्यब्दं कृच्छ्रमाचरेत्। अथ महापातकसङ्गिनां प्रायश्चित्तविधिः। यस्य पूर्व्वोक्तेषु ब्रह्महत्यादिषु चतुर्षु पातकिषु याद्दशेन

पातकिना सङ्गी भवेत् स तद्व्रतन्तु निर्वर्त्य शुद्धिमाप्नुयादिति निश्चितम्। एभिः सहाज्ञानात्पञ्चरात्रसंसर्गे कायव्रतं, द्वादशरात्रसंसर्गे महासान्तपनं व्रत कार्य्यम्। अर्द्धमास सङ्गङ्कृत्वा तूपवासान् दशाचरेत्। माससंसर्गे पराकं, मासद्वये चान्द्रायणं चरेत्। षण्माससङ्गे तु चान्द्रायणत्रयमाचरणीयम्। किञ्चिन्न्यूनाब्दसङ्गे तु षण्मासव्रतमाचरणीय, ज्ञानसङ्गे तु यथायथं पूर्व्वोक्तानां व्रतानां द्विगुणं त्रिगुणं वा प्रायश्चित्तं कार्य्यम्। काक-मण्डूक-नकुल-वराह मूषिक-मार्ज्जाराजाविक-श्व-कुक्कुटादीनां वधे कृच्छ्राद्धं व्रतमनुष्ठेयम्। अश्वहा तु त्रिःकृच्छ्रव्रतमाचरेत्, हस्तिवधे तप्तकृच्छ्र, गोवधे च पराकं व्रत कार्य्यं, कामतो गोवधे तु न शुद्धिरस्ति। यान-शय्यासन-पुष्प-मूल-फल-भक्ष्य-भोज्यापहारपापस्य पञ्चगव्यं विशोधकम्। शुष्ककाष्ठ-तृणद्रुम-गुड़-चर्म्मभस्त्रामिषाणामपहरणे त्रिरात्रं न भुञ्जीत। टिट्टिभ-चक्रवाक हंस-कारण्डवोलूक-सारस-कपोत-जालपादक-कृकवाकु-बलाक-शिशुमार-कच्छपेष्वन्यतमं हत्वा द्वादशदिनानि न भुञ्जीत। रेतोविण्मूत्रभोजने प्राजापत्यव्रतं कुर्य्यात्, शूद्रोच्छिष्टस्य भोजने तु चान्द्रायणत्रयं कार्य्यम्। रजस्वला-चाण्डाल-महापातकि-सूतिका-पतितोच्छिष्ट-रजकादीनां स्पर्शे सचेलं स्नायीत, घृतस्य प्राशनञ्च कार्य्यं, तथाविशुद्धश्चाष्टशतं गायत्रीं जपेच्च। अज्ञानादेतेष्वन्यतमं स्पृष्ट्वा यदि भोजनं कुर्य्यात्, तदा त्रिरात्रोपोषितः पञ्चगव्यं प्राश्य शुद्धो भवेत्। यदि स्नानदानजपादीनां भोजनाध्वरयोश्च मध्ये

पूर्व्वोक्तानां जन्तूनां शब्दं शृणोति तदाऽष्टोत्तरसहस्रवारं गायत्रीं जपेत्। यदि स्नानादीनां मध्ये भुक्तमन्नमुद्दमेत् तदा स्नात्वा तद्दिनमुपोष्य द्वितीयेऽह्नि घृतं प्राश्य शुद्धिमाप्नोति। देवद्विजनिन्दा तु सर्व्वेषां पापानामधिकं पापं, कस्मिन्नपि शास्त्रे देवद्विजनिन्दाकृतां निष्कृतिर्न दृश्यते। एवं पापानि प्रायश्चित्तानि चोक्त्वा सूतेनान्ततो हरिस्मरणस्य हरिभक्तेश्च सर्व्वपापनाशकत्वमुक्तम्।

ऊनविंशाध्याये मुनिभिः सूतो यममार्गं पृष्टः। सूतेन च यममार्गः सविस्तरं कथितः। ये नरा दानशीलाः ते सुखेन यान्ति, ये तु धर्म्मशून्यास्ते दुःखेन यातनाः प्राप्नुवन्ति। पापिनो हि प्रेतभूता विवस्त्राः शुष्ककण्ठौष्ठतालुकाः क्रन्दन्तो दीनास्तत्पथे यान्ति। ते हि गच्छन्तो यमभटैः पथि प्रतोदाद्यैरायुधैर्हन्यन्ते। पापिनां पथि च क्वचित्पङ्कः, क्वचिदग्निः, क्वचित् सन्तप्तकर्द्दमः, क्वचित् सन्तप्तसैकताः, तीक्ष्णधाराः शिलाश्च वर्त्तन्ते। तत्र क्वचित्तप्ताङ्गारवृष्टिः, क्वचिच्छिलावृष्टिः क्वचिज्जलवृष्टिः क्वचिच्छस्त्रवृष्टिः क्वचिदुष्णाम्बुवर्षणञ्च, क्वचित्क्षारकर्द्दमवृष्टिः, क्वचिदुष्णकर्द्दमवृष्टिश्च भवति, क्वचिन्महानिम्बवृक्षाः, क्वचित्कण्टकवृक्षाः, क्वचिद्दुःखारोहाः शिला, गाढ़ान्धकाराः, कण्टकावृतिश्च महती तिष्ठति। तत्र क्वचिदप्राप्यारोहणं, क्वचित्कन्दरप्रवेशनं विना न गन्तुं शक्यते, क्वचित्तीक्ष्णाः शर्करा, लोष्ट्राः, सूचितुल्याः कण्टकाश्च सन्ति। क्वचिच्छैवालं, क्वचित्कीलकपङ्क्तयश्च सन्ति। पापिनो

ह्नि पथ्येवं बहुविधान् क्लेशान् प्राप्य क्रोशन्तो रुदन्तश्च गच्छन्ति। तदुपरि यमभटास्तान् पाशेन बद्धा त्रिविधैः सुतीक्ष्णैरायुधैर्घातयन्ति च। केचित्पृष्ठतः शस्त्रास्त्रैस्ताड्यमानाः, केचिन्नासाग्रकृष्टाः, केचित्कर्णपाशैरपरे गलपाशैश्च कृष्यमाणा अन्ये करे चाकृष्टा यममन्दिरं नीयन्ते। पापिन एवं बहुविधान्यपराणि च दुःखानि भुञ्जाना गच्छन्ति। ये तु धर्म्मिष्ठा दानशीलाः सुबुद्धयोऽन्नदानरता जलदायिनश्च ते स्वाद्वन्नं भुञ्जाना उत्तमं क्षीरं पिवन्तश्च सुखेन प्रयान्ति। सूतेनात्र तत्तद्वस्तुविशेषदानजन्यसुखविशेषा विशिष्याभिहिताः। यमस्तु चतुर्भुजः शङ्खचक्रगदापाणिर्भूत्वा पुण्यकर्म्मरतान् स्नेहान्मित्रवदर्च्चयति, तथा प्रियमालपति च, यथा भो भो नरकक्लेशभीरवो यूयं बुद्धिमतां श्रेष्ठाः, यतो युष्माभिः परत्र सुखदायकं पुण्यं साधितम्। मनुष्यजन्म सम्प्राप्य यो न सुकृतं करोति, स एव पापिनां श्रेष्ठ आत्मघातकसंज्ञितः। यस्त्वनित्यं मानुषं प्राप्य नित्यं धर्म्मं न साधयति, तदन्योऽचेतनः कः? भूतेषु प्राणिनः श्रेष्ठाः, प्राणिषु बुद्धिजीविनः श्रेष्ठाः, बुद्धिमत्सु नराः श्रेष्ठाः, नरेषु च ब्राह्मणाः श्रेष्ठाः, ब्राह्मणेषु विद्वांसः श्रेष्ठाः, विद्वत्सु कृतबुद्धयः, कृतबुद्धिषु कर्त्तारः, कर्त्तृषु च ब्रह्मवादिनो, ब्रह्मवादिष्वपि निर्म्ममा एभ्यः सर्व्वेभ्यो नित्यध्यानपरायणः श्रेष्ठः। एवमादिश्यानन्तरं स पापिनः सर्व्वानाहूय कालदण्डेन तर्ज्जयित्वा भयङ्करं रूपं धृत्वा ब्रवीति, भो भोः पापा यूयमत्यन्तदुष्टाः पापानि कृतवन्तस्तथैव यातना भोज्याः

तत्किं वृथादुःखिता भवत। युष्माभिः पुत्रमित्रकलत्रार्थं महत् दुष्कृतमाचरितं, तत्कर्म्मवशादेव यूयमतिदुःखिता जाताः। यथा युष्माभिर्बहूनि पापानि कृतानि, तथैव दुःखस्य कारणं प्राप्तानि। धर्म्मः पक्षपातन्तु न करोति,तद्युष्माभिः पुरा यत्कृतं तदेव दुःखकारणं चिन्त्यताम्। यमो हि दरिद्रे वा, मूर्खे वा, पण्डिते वा, धनिनि वा, आढ्ये वा, धीरे वा समवर्त्त्येव। तानि वचनान्याकर्ण्य ते पापिनः स्वानि कर्म्माणि शोचन्तो निश्चलास्तिष्ठन्ति, अथ यमाज्ञाकारिणो वेगेनागत्य तान् सर्व्वान् यथापापं नरकेषु प्रक्षिपन्ति। ते च पापिनो नरकेषु कर्म्मफलानि भुक्त्वाऽन्ते पापशेषतो महीतलं सम्प्राप्य स्थावरादयो जायन्ते। एतदन्तरे ऋषयः पुनरूचुः—हे दयार्णव सूत,अत्रास्माकं चेतसि सुमहान् संशयो जातस्तच्छेत्तुं त्वमेव समर्थोऽसि, यतस्त्वं स्वयं व्यासेन बोधितः। त्वया हि विविधा धर्म्माः सुबहूनि च पापानि प्रोक्तानि, चिरभोगश्च तेषां फलं प्रोक्तम्। ब्रह्मणो दिनान्ते लोकत्रयस्य नाशोऽप्युक्तः, एवं परार्द्धद्वयान्ते ब्रह्माण्डस्य च नाश उक्तः। हे महाभाग, त्वयैव ग्रामदानादिपुण्यानां कल्पकोटिसहस्रेषु फलमुदाहृतम्, ततश्च लोकानां नाशः, प्राकृते लये चैक एव जनार्द्दनोऽवशिष्यते। एवं हि पापादीनां भोगानाञ्च समाप्तिर्न जायत एव। अथ सूतेन प्रोक्तं, भो महाभागाः,साधु पृष्टम्,अहं वः सर्व्वं वदिष्यामि, सावधाना भवत। नारायणो ह्यक्षयोऽनन्तः, सनातनः, परं ज्योतिः, विशुद्धो, निर्गुणो, महामोहविवर्ज्जितः, परानन्दमयश्च। स निर्गुणोऽपि

सिसृक्षया गुणवानिव भवति, तथा ब्रह्मविष्णुशिवाख्यया भेदवानिव लक्ष्यते। स च सनातनो गुणोपाधिभेदेष्वेतेषु त्रिषु स्वमायां संयोज्य निखिलं जगत्कार्य्यं करोति। स ब्रह्मरूपेण सृजति, विष्णुरूपेण पाति, ततोऽन्ते रुद्ररूपेण सर्व्वमत्ति। प्रलये भगवान् योगनिद्रां गच्छति प्रलयान्ते च पुनः समुत्थाय चराचरात्मकं विश्वं यथापूर्व्वं कल्पयति। ततश्च पूर्व्वसृष्टौ स्थावराद्यो यत्र यत्र व्यवस्थिता, इदानीमपि ते तत्र तत्रैव व्यपस्थापिता भवन्ति। अतएव कर्म्मफलमवश्यमनुभोक्तव्यम्, अभुक्तं हि कर्म्म कल्पकोटिशतैरपि न क्षीयते। सर्व्वभूतान्तरात्मा जगन्मयो देवः परिपूर्णः सनातनोऽपि सर्व्वकर्म्मफलं भुङ्क्ते, का कथा मादृशस्याशुद्धस्येति।

त्रिंशाध्याये सूतेन मरणानन्तरमात्मनः संसृतिरुदाहृता। तथाहि कर्म्मपाशनियन्त्रिता जन्तवः स्वर्गादिषु पुण्यफलमनुभूय नरकेषु च पापफलमनुभूय क्षीणकर्म्मावसाने पुनरिमं लोकमागत्य स्थावरादिषु जायन्ते। स्थावरा नाम वृक्षगुल्मलतावल्लीगिरयस्तृणानि च। स्थावरत्वेऽपि बहुकालं वाय्वादिभि-र्भञ्जन-च्छेदन-दावाग्निदहन-शीतातपादि-दुःख-मनुभूय म्रियन्ते। ततश्च दुःखबहुलाः क्रमयो भूत्वा नित्यं क्षुद्बाधिता मलमूत्रादिषु च संसरन्तो दुःखमनुभवन्ति। ततः पशुयोनिं प्राप्नुवन्ति। तत्रापि बहून् क्लेशाननुभवन्ति। एवं बहुयोनिषु सङ्गताः क्रमेण मानुष्यं जन्म प्राप्नुवन्ति। पुनश्च कर्म्मवशात् पूर्व्ववदेव स्वर्गनरकादीनि समश्नुवते।

एकत्रिंशाध्यायप्रारम्भे पुनर्ऋषिभिः सूतः पृष्टः, एतत्संसार-कामस्य छेदकः कतमः, केनोपायेन मोक्षः स्यात्, तद्ब्रूहीति। सूतोऽब्रवीत्, भो महाभागाः, साधु, पृष्टम्। यस्याज्ञया ब्रह्मा सर्व्वं जगत्सृजति, हरिः पालयति, रुद्रश्च विनाशयति; यस्य प्रभावतो महदादिविशेषान्ता जाताः, तमनामयं नारायणं मोक्षदं जानीत। तं मोक्षसाधकं स्वप्रकाशं निरञ्जनमविकारमजं प्राहुः। ब्रह्माद्या देवतागणास्तस्यावताररूपाणि समर्च्चयन्ति। जितप्राणा जिताहाराः सदा ध्यानपरायणास्तु जनास्तं सर्व्वसुखावहं नित्यं हृदि पश्यन्ति। स निर्गुणो निराधारोऽपि लोकानुग्रहाय रूपवान् भवति। स सर्व्वधर्म्माणामध्यक्षो योगिनां हृदये तिष्ठति च, स कल्पान्ते सर्व्वं संहृत्य शेते, कर्म्मज्ञा वेदविदस्तं यजन्ते च। सर्व्वभूतानामाधारो जरामरणनिर्म्मुक्तश्च। तस्य पादाब्जं सम्पूज्य देहिनोऽप्यमर्त्त्यतां व्रजन्ति। स ह्यक्षयो निर्गुणोऽद्वितीयोऽरूपः परिपूर्णो ज्ञानमयश्च। यस्तु योगी सर्व्वसङ्गपरित्यागी शमादिगुणसंयुतः कामादिभिर्व्वर्ज्जितश्च, स एव परमं पदं लभते। एतदाकर्ण्य मुनयः पुनः पृष्टवन्तः, केनोपायेन योगिनां सिद्धिर्भवति, हे वदतां वर, तदुपायं नो ब्रूहीति। येन जन्मसहस्रेषु दानानि दत्तानि, यज्ञा विविधास्तीर्थयात्राश्च कृतास्तस्य हरौ भक्तिर्भवेत्। भक्तिलेशेन हि परमोऽक्षयो धर्म्मो जायते परया श्रद्धया च सर्व्वपापं प्रणश्यति। सर्व्वपापेषु क्षीणेषु निर्म्मला बुद्धिर्जायते। सैव बुद्धिः पण्डितैर्ज्ञानमित्याख्यायते। योगिनां

तज्ज्ञानं मोक्षदं भवति । योगस्तु द्विविधः प्रोक्तः कर्म्मयोगो ज्ञानयोगश्चेति, तत्र कर्म्मयोगमन्तरेण नृणां ज्ञानयोगो न भवेत् । तस्मादादौ क्रियायोगरतः सन् श्रद्धया हरिमर्च्चयेत् । हरिर्हि सर्व्वगतस्ततः प्रतिमा-द्विज भूम्यग्नि-सूर्य्य-चित्रादिषु तस्यार्च्चनां कुर्य्यात् । कर्म्मणा मनसा वाचा परपीड़ापराङ्मुखो भक्तिसंयुतश्च तं परिपूर्णात्मकं विष्णुमर्च्चयेत् । तयोः कर्म्मज्ञानयोगयोश्चाहिंसा सत्यमक्रोधो ब्रह्मचर्य्यमपरिग्रहोऽनीर्षा दया चैते समीपकारिणः । इदं विश्वं चराचरात्मकं, विष्णुश्च सनातन इति मनसा विचिन्त्य योगद्वयमभ्यसेत् । ये हि मनीषिण आत्मवत्सर्व्वभूतानि पश्यन्ति, तएव देवदेवस्य चक्रिणः परं भावं जानन्ति । यदि क्रोधादिदुष्टात्मा पूजाध्यानपरो भवेत्, तदा विष्णुर्न तुष्येत्, यतः क्रोधकामादिदुष्टात्मा हि पापिनां वर एव, तस्य पूजायामधिकारो नास्ति। यदि कश्चित्तपःपूजाध्यानरतश्चासूयापरो भवेत्, तस्य तत्तपः, सा च पूजा, तद्ध्यानञ्च निरर्थकं भवेत् । तस्मात्क्षमादिगुणतत्परः योगरतश्च मुक्त्यर्थं सर्व्वात्मकं विष्णुमर्च्चयेत् । क्रियायोगश्च कर्म्मणा मनसा वाचा सर्व्वलोकहितरतिस्तथा जगद्योनेः सर्व्वान्तर्यामिनो नारायणस्य स्तोत्राद्यैरुपवासादिभिः पुराणश्रवणादिभिः पुष्पाद्यैः पूजनञ्च । इत्थं क्रियायोगरतात्मनां विष्णौ भक्तिमतां पूर्व्वजन्मार्ज्जितानि सर्व्वपापानि नश्यन्ति । पापक्षयाच्च शुद्धमतिर्भूत्वोत्तमं ज्ञानं वाञ्छति, ज्ञानं हि मोक्षदं ज्ञेयं, तदुपायः कथ्यते । अत्र जगति सर्व्वे पदार्थाः

अनित्या, हरिरेक एव नित्यः स्मृतः। अनित्यानि परित्यज्य सदा नित्यमेव समाश्रयेत्। इहामुत्र भोगेषु च विरक्तो भवेत्। यस्तु मनुष्योऽनित्येषु पदार्थेषु रागी भवेत्, तस्य कदाचिन्नैव संसारविमुक्तिर्भवेत्। मुमुक्षुः शमादिगुणसम्पन्न एव ज्ञानमभ्यस्येत्, यतः शमादिगुणहीनस्य ज्ञानं न सिध्यत्येव। यो रागद्वेषविहीनः शमादिगुणसंयुतो नित्यं हरिध्यानपरश्च, स मुमुक्षुरित्यभिधीयते। एवं सूतेन प्रसङ्गतः क्षेत्रज्ञं, योगं, योगाङ्गानि, ध्यानस्वरूपञ्च सविस्तरमुक्ताऽन्ततः परब्रह्मस्वरूपमोङ्कारस्वरूपञ्च प्रोक्तम्।

द्वात्रिंशाध्याये ऋषिभिः पुनरेव सूतः पृष्टः, कथं भगवान् जनार्द्दनस्तुष्यतीति। तथा पृष्टः सूत उवाच, भो मुनिश्रेष्ठाः, पुरा सनत्कुमारेणात्रैव विषये पृष्टो नारदो यदुवाच, तदेवाऽद्य भवतां कथयामीति। विमुक्तिकामैर्हि सर्व्वैर्विष्णुरेव नित्यं पूजनीयः। विष्णुपरायणं हि जनं रिपवो ग्रहाश्च न बाधन्ते, राक्षसाश्च न खादन्ति। तस्मिन्देवदेवे दृढ़भक्तिमतो हि जनस्य सर्व्वाणि श्रेयांसि सिध्यन्ति। एवं सूतेन हरिभक्तैर्हरिपूजनस्य चोत्कर्षोऽभिहितः, हरिपूजाविहीनस्य हरिभक्तिपराङ्मुखस्य चासाधुता दर्शिता। प्रसङ्गतः कामक्रोधादीनाञ्चापकारित्वं दर्शितम्।

त्रयस्त्रिंशाध्याये सूतेन पुनरेव देवदेवस्य जनार्द्दनस्य माहात्म्यमुक्तम्। तत्प्रसङ्गतश्च सर्व्वपापापहं यज्ञमालि सुमालिनोश्च पवित्रं चरित्रं कीर्त्तितम्। यथा पुरा कश्चिद्वेदवेदाङ्ग-

पारगो ब्राह्मणो देवमालीति नाम रैवते देशे समुवास । स हरिपूजापरायणोऽपि पुत्रमित्रकलत्रार्थं धनार्ज्जनपरो भूत्वाऽपण्यविक्रयं चाण्डालादिभ्योऽपि प्रतिग्रहञ्चकार। अथ कालेन तस्य यज्ञमाली सुमाली चेति द्वौ पुत्रौ बभूवतुः । अथ कदाचिद्देवमाली बहूपायैर्धनं सम्पाद्य तद्गणयामास । अथ तदपरिमितमवलोक्याऽचिन्तयदहो मयैतानि वित्तानि समुपार्ज्जितानि, तथापि मम तृष्णा शान्तिं नापन्ना । किन्तु स्मृतः परं कष्टतरं भवितुमर्हति, यत्सर्व्वान् कामानवाप्याऽपि पुनरन्यत्काङ्क्षति । जीर्य्यतो हि जनस्य केशा दन्ताश्च जीर्णा भवन्ति, चक्षुःश्रोत्रे च जीर्णे भवतः, एका तृष्णैव तरुणायते । मम सर्व्वाणीन्द्रियाणि जीर्णानि, बलञ्च जरसाऽपहृतमेव, केवलं तृष्णा प्रत्यहं नवीना भवति । आशा हि पुंसामजेयारातिसन्निभा, ततः शाश्वतं सुखमिच्छता हि पुंसा साशा सर्व्वथा परित्याज्या । एवमाशाया बहून्दोषान् प्रख्याप्य देवमालिना चिन्तितमहमतः परं परलोकहितमादरात्साधयिष्यामीति । एवं निश्चित्य स धर्म्मकार्य्यरतोऽभवत् । स सद्य एव स्वधनं चतुर्धा व्यभजत्, ततः स्वयमर्ज्जकत्वाद्भागद्वयं जग्राह, शेषं भागद्वयन्तु द्वाभ्यां पुत्राभ्यां ददौ । तेन धनेन स्वपापानां नाशं कर्त्तुमनाः स गङ्गातीरे बहून् प्रपातडागारामान्देवगृहान् अन्नादीनां दानानि च चकार। हरिभक्तिपरः स धनानि बहूनि विश्राण्य तपसे नरनारायणतपःस्थानं जगाम । तत्र प्रशान्तचेतोभिर्मुनिभिः परिशोभितं रम्यमाश्रममेकं ददर्श ।

तत्र च परमं ब्रह्म म्टणन्तं तेजोराशिं शमादिगुणसंयुक्तं जानन्ति-नामानं मुनिञ्चापश्यत्। देवमाली तं दृष्ट्वा दण्डवत्प्रणनाम। जानन्तिश्च तस्यागन्तोर्यथाविध्यर्हणां कल्पयामास। ततः कृतातिथ्यक्रियो देवमाली कृताञ्जलिस्तं विनयेनोवाच, भगवन्, कृतकृत्योऽस्मि, मम कल्मषं विगतम्, अत इदानीं ज्ञानप्रदानेन मामुद्धर। एवमुक्तो जानन्तिः प्रहसन् तस्मै संसारच्छेदोपाय-मुक्तवांश्च। तेन प्रबोधितो देवमाली ज्ञानलेशं प्राप्य मनसि विचारयामास, कोऽहं, का मे क्रिया, कथं वा मे जन्मेति। ततः किमपि निश्चेतुमशक्तः स पुनर्जानन्तिं प्राप्य तानेव चोन् प्रश्नानकरोत्। ततो जानन्तिनोक्त, ममेति यद्गदितं तत् भ्रान्तिरेव। अहङ्कारो मनोधर्म्मो, नात्मनः। आत्मा हि नाम जात्यादिशून्यो निर्गुणो नीरूपोऽप्रमेयश्च। स हि ज्योतिःस्वरूपस्तस्य नाम क्रिया वा कथं भवेत्। स्वप्रकाश-स्यानन्तस्याक्रियस्य कथं वा जन्म। स हि ज्ञानैकवेद्यः, तत्त्वमसीत्यादि-वाक्यार्थज्ञानं हि मोक्षस्य साधकम्। ज्ञाने चानाहते सिद्धे सर्व्वं ब्रह्ममयं भवेत्। तेनैवं प्रबोधित आत्म-न्येवात्मानं पश्यन्मुमोच। स उपाधिवर्ज्जितं स्वप्रकाशं ब्रह्मा-ऽहमेवेति निश्चित्य परां शान्तिमवाप्तवान्।

चतुस्त्रिंशाध्याये तस्यैवेतिवृत्तस्यावशिष्टांशो वर्णितो—यथा-देवमालिसुतयोर्यज्ञमालि-सुमालिनोर्ज्येष्ठो यज्ञमाली पितृ-सञ्चितं धनं द्विधा विभज्य कनिष्ठाय भागमेकं ददौ। सुमाली च व्यसनाभिरतोऽसत्सङ्गेन सर्व्वमेव तद्धनं नाशयामास। अथ

पितृसञ्चिते धने नाशमायाते स परद्रव्यमपहृत्य वेश्यारतो-ऽभवत्। अथ यज्ञमाली तं तथाभूतं दृष्ट्वाऽतिदुःखितस्तं तस्मात्पापान्निवारयामास। तेन निवारितोऽसौ तं हनिष्या-मीत्युक्त्वा खड्गमग्रहीत्। तेन चास्य कर्म्मणा कुपिता नाग-रास्तं बबन्धुः। यज्ञमाली च भ्रातृस्नेहविमोहितस्तान् पौरान् सम्प्रार्थ्य तं बन्धनान्मोचयामास। ततो यज्ञमाली पुनरेव स्वधनं द्विधा विभज्य तस्यार्द्धं कनीयसे ददौ। अतिमूढ़ाक्ष सुमाली तद्धनान्यपि पूर्व्ववत्पाषण्डकर्म्मभिर्नाशयामास। दुर्ज्ज-नानां विभूतयो ह्यसतामुपभोगाय भवति। अथ स चाण्डाल-स्त्रीसंसक्तो मद्यपो गोमांसभोजी बन्धुजनैः परित्यक्तो राज्ञा बाधितश्च निर्ज्जनं वनम्प्राप। यज्ञमाली पुण्यरतो स्वधर्म्मनिष्ठो विष्णुसेवनतत्परो बभूव। अथ कालेन गच्छता तावुभौ भ्रातरौ वृद्धभावमुपागतौ युगपन्मृतौ। अथ हरिपूजारतो यज्ञमाली हरिणा स्वयं प्रेषितं दिव्य विमानमारुह्य सुरगणैः पूज्यमानो मुनीश्वरैः स्तूयमानश्चाप्सरोभिः परिवेष्टितो दिव्या-भरणभूषितः पथि गच्छन् यमभटैस्ताड्यमानं क्षुत्तृष्णापरि-पीड़ितं, प्रेतभूतं विवस्त्रं, पाशवेष्टितं, स्वकर्म्माणि विलपन्तं, क्रोशन्तं, रुदन्तञ्च सुमालिनं दृष्टवान्। स तं दृष्ट्वा दयापरः कोऽसाविति तान् हरिदूतान् पप्रच्छ। ते च तव भ्राताऽयं पापात्मा सुमालीति तमबोधयन्। यज्ञमाली विष्णुकिङ्कराणां तादृशवचनमाकर्ण्य मनसा दुःखमापन्नः पुनस्तानप्राक्षीत् कथ-मस्य स्वार्ज्जितेभ्यः पापेभ्यो मोक्षो भवेत् भो बान्धवा यूयं शीघ्रं

तदुपाय वदत। ते तद्वचः श्रुत्वा दयान्विताः सस्मितमूचुः। अयि भो महाभाग नारायणपरायण यज्ञमालिन्, उपायं ते वक्ष्यामः, सावधानं शृणु। त्वया प्राक्तनजन्मनि सुमहत्कर्म्म कृतं, तथाहि त्वं वैश्यजातीयो विश्वम्भरनामासीः। त्वं स्वजातीय-कर्म्मपराङ्मुखतया मातापितृभ्यां बन्धुभिश्च परित्यक्तोऽभूः। तथा स्वजनोज्झितस्त्वं शोकसन्तप्तहृदयः परिभ्रमन् कदाचित् क्षुधार्त्तो हरिमन्दिरं प्राप्तवान्। तत्र वृष्टिसमुद्भूतं कर्द्दमं परिजिहीर्षया त्वं तन्मन्दिरभित्तेः समन्तात् निक्षिप्तवान्, स च उपलेपनतां गतः। त्वमुपोषितश्च तद्रात्रौ तस्मिन्देवालये सर्पेण दष्टः पञ्चत्वङ्गतः। तेनैवोपलेपनजपुण्यप्रभावेण तव विप्रकुले जन्म, तत्राप्यचञ्चला हरिभक्तिरजायत। तत्प्रभावेण च कल्पकोटिशतं हरिसालोक्यमवाप्य परं ज्ञानमासाद्यान्ते मोक्षं प्राप्स्यसि। स त्वं यदि पातकिश्रेष्ठं निजमनुजमुद्धर्त्तु-मिच्छसि, तदा गोचर्म्ममात्रभूमेरुपलेपनजं फलं तस्मै दत्त्वा तमुद्धर। विष्णुदूतैरेवमुक्तो यज्ञमाली तत्क्षणमेव तस्मै तत्फलं ददौ। तस्य पापजालं विनष्टमभवत्, यमदूतास्तं विमुच्य प्रदुद्रुवुः, दिव्यं विमानं तदर्थमागमत्, स च तदारुह्य देववन्मुमुदे। ततस्तौ भ्रातरौ महर्षिभिस्तूयमानौ देववृन्दनमस्कृतौ च विष्णुलोकमागत्य हरिसारूप्यं प्राप्तौ। तस्मात्सर्व्वैः सर्व्वप्रयत्नेन हरिपूजा कर्त्तव्या। ये हि जनार्द्दनं प्रपन्नास्तेषां न नरकं भवेत्। अकामादपि ये सकृन्मात्रं विष्णुपूजां कुर्व्वन्ति, तेषां कदाचिदपि भवबन्धो न जायेत।

पञ्चत्रिंशाध्याये सूतेन पुनरपि हरिमाहात्म्यं कीर्त्तितम् । तत्रापि प्रसङ्गेन कणिकनाम्नो लुब्धस्योपाख्यानं वर्णितम् । स हि महान्दुराचार आसीत्, स ब्राह्मणान्हतवान्, नित्यं देवस्व-परस्वाद्यपहरणे च समुद्युक्तोऽभवत् । तस्य पापानां संख्या वक्तुं न कदाचिदपि शक्यते । अथैकदा स महापापी सौवीर-राजस्य समृद्धं देवपुरोपमं रम्यं नगरं प्रययौ । तस्योपवनस्थं रम्यं सुवर्णकलसोपेतं केशवमन्दिरं दृष्ट्वाऽसौ बहूनि सुवर्णानि हरिष्यामीति मुदं ययौ । ततोऽर्थलोलुपः स व्याधस्तत्र गत्वा तत्त्वार्थकोविदं विष्णोः परिचर्य्यापरं उतङ्कं नाम तपसां निधिमेकाकिनं ध्याननिमग्नं ददर्श । तं चौरस्यान्तरायं मत्वा मदोद्धतः स हन्तुमारेभे । अथ तं हन्तुमुद्यतं दृष्ट्वा स उतङ्को-ऽब्रवीत्, भोः साधो, निरपराधं मां कथं हनिष्यसि । अहो ममताकुलचेतसां मनुष्याणां दुःखं, ते महापातकान्यपि कृत्वा यत्नतः परान् पुष्यन्ति, तद्दाराश्चबान्धवाश्च तदुपार्ज्जितं सर्व्वमेव धनं समं भुञ्जते, तत्पापफलन्तु स एक एव भुङ्क्ते । इति तस्या-नेकविधोपदेशगर्भविनयवचनमाकर्ण्य स व्याधो भयविह्वल इव प्राञ्जलिस्तं विमुच्य क्षमस्वेति पुनः पुनः प्राह । तत्संसर्गप्रभा-वेण हरिसन्निधिमात्रेण चास्य लुब्धकस्य सर्व्वं पापं विनष्टं, सो-ऽनुतापीदमब्रवीत्। मया बहूनि महान्ति च पापानि कृतानि, साम्प्रतं देवदर्शनात्प्रनष्टानि तानि, त्वां शरणङ्गतः, कथं मे तेभ्यः पापेभ्यो निष्कृतिर्भवेद्ब्रूहि । पूर्व्वकृतैः पापैरहं लुब्धको-ऽभवं, तत्रापि च पापजालानि कृत्वा न जाने कां गतिं प्राप्नुया-

मिति । इत्यनुतापसन्तप्तोऽसौ इत्थं बह्वनुशोचन्पञ्चत्वमागतः । उतङ्कस्तु दयापरस्तं विष्णुपादोदकेनाभ्यसिञ्चत् । विष्णुपादोदकस्पर्शाल्लुब्धकोऽसौ वीतकल्मषो दिव्यं विमानमारुह्य हरिमन्दिरं प्राप । तद्दृष्ट्वा विस्मित उतङ्कः शिरस्यञ्जलिमाधाय कमलापतिमस्तौषीत् । तेन स्तवेन सन्तुष्टो हरिः सन्तुष्टस्तस्मै वरं ददौ, तेन वरेणोतङ्कः परमं पदं प्राप ।

षट्त्रिंशाध्याये मुनिभिः पृष्टः सूत उतङ्ककृतं स्तोत्रं तान् श्रावयामास, ततस्तेन स्तोत्रमाहात्म्यञ्चोक्तम् ।

सप्तत्रिंशाध्याये सूतेन पुनरेव हरिमाहात्म्यं कथितं, तत्प्रसङ्गेन नारायणपरायणस्य यज्ञध्वज इति ख्यातस्य सोमवंशीयस्य राजर्षेश्चरितं कथयामास । स राजा कदाचिन्मनोरमे रेवातीरे विचित्रं हरिमन्दिरं कृतवान्, तत्र वीतहोत्रो नाम कश्चिद्वेदवेदाङ्गपारगः पुरोहित आसीत् । अथ कदाचित्तत्रोपविष्टं विष्णुतत्परं राजानं दृष्ट्वा स वीतहोत्रोऽपृच्छत् । भो राजन् त्वं विष्णुमतिमतां श्रेष्ठोऽसि, ततो हरिमन्दिरसम्मार्ज्जनस्य तत्र दीपदानस्य च किं फलं त्वया विदितं, तन्मे ब्रूहि । सन्त्यन्यानि सुबहूनि विष्णोः प्रियतराणि कर्म्माणि, कथं त्वं तानि विहायैतत्कर्म्मद्वयं कर्त्तुं सर्व्वदोद्युक्त इति । तेन पृष्टो राजा यज्ञध्वजः स्वपूर्व्वजन्मवृत्तमकथयत् । यथा अहं जातिस्मरत्वात् पूर्व्वजन्मवृत्तान्तं जानामि । पुरा स्वारोचिषमन्वन्तरे कृतयुगे कश्चिद्रैवतो नाम वेदवेदाङ्गपारगो ब्राह्मण आसीत्, परं स अयाज्ययाजन-ग्रामयाजन-प्रभृतीनि निषिद्ध-

कर्म्माण्यनुतिष्ठन् स्वबन्धुभिः परित्यक्तो दरिद्रो दुःखितो दुःशीलो व्याधितश्चाभवत् । स तु द्विजः कदाचिद्धनार्थं पर्य्यटन् नर्म्मदातीरे ममार । तस्मिन्मृते तस्य भार्य्या बन्धुमती नाम कामाचाररततया बन्धुभिः परित्यक्ताऽभवत् । तस्यामहं दण्डकेतुर्नाम चण्डालो जातः । अहमपि महापापरतः पिशुनः सर्व्वप्राणिहिंसकश्चाभवम् । कदाचिदहं निशि परस्त्रियं रन्तुकामः शून्यं विष्णुमन्दिरं प्राप्तवान् । तत्र च शय-नार्थं मया स्ववस्त्रप्रान्तेन कियद्देशः प्रमार्ज्जितः । तत्र तदानीं यावन्तः पांशुकणा मयाऽपसारितास्तावज्जन्मकृतानि पापानि तत्क्षणादेव विनष्टानि । तथा तत्र मया रमणार्थं यः प्रदीपो ज्वालितः,तेनाऽपि च मम दुष्कर्म्माणि निःशेषतः क्षयं गतानि । तस्यामेव रात्रौ पुरपालकाः समागत्यावां निहतवन्तः । ततः सद्य एव दिव्यं विमानमारुह्य विष्णुलोकं प्राप्तौ । तत्राऽहं कल्पशतं स्थित्वा ततो ब्रह्मलोकेऽपि तावत्कालं स्थितवान् । ततः स्वर्गेऽपि दिव्यभोगसमायुक्तस्तावत्कालं स्थित्वेदानीं तेन पुण्यप्रभावेण यदूनां वंशे जातोऽस्मि । प्राप्तोऽस्मि च सुसमृद्ध-मकण्टकं राज्यम् । हे ब्रह्मन्, यतो मया पापबुद्ध्या तादृशं कर्म्म कृत्वैवं श्रेयः प्राप्तं, भक्तिपूर्व्वकं तथानुष्ठायिनां पुंसां किम्भवे-दिति न ज्ञायते । तत एव मया विशेषतो विष्णुमन्दिरसम्मा-र्ज्जनं तत्र दीपदानञ्च क्रियेते । ततो नृपतिर्विष्णुपूजनफलानि विशेषत उक्त्वा नारदोक्तमिन्द्रबृहस्पतिसंवादमकथयत् । यथा —कदाचिदिन्द्रो बृहस्पतिं पप्रच्छ, भो बृहस्पते, अतीतब्रह्मणः

विष्णुसुष्टिमापन्नो मह्यं तस्मै मुने च परमं पदं प्रदत्तवान् । यथाकथञ्चित्तद्दक्षिणीकरणेनेदृशं फलं गतवान्, न जाने पुनः सम्यगर्च्चनात्कीदृशं फलं भवेदिति । देवराजस्त्वेतदाकर्ण्य हरिपूजापरोऽभवत् । यज्ञध्वजश्च कथाशेषङ्कृत्वा पुनरपि हरिपूजनस्य महान्ति फलानि कीर्त्तयामास ।

अष्टात्रिंशाध्यायारम्भे मुनिभिः सूतो युगावस्थाः पृष्टः । सूतेन च सत्यादिक्रमेण युगानामवस्था वर्णिताः । अथ महर्षिभिः कलिं विस्तरतः श्रोतुमनुरुद्धः सूतः प्रोवाच । कलिर्हि महाघोरः सर्व्वेषां पापानां साधकोऽस्मिन् सर्व्वे धर्म्मा विनश्यन्ति । ब्राह्मणादयश्चत्वारो वर्णा धर्म्मपराङ्मुखा दम्भाचारपरायणा लोलुपाः कृतघ्ना भण्डकास्ततश्चाल्पायुषो भविष्यन्ति । मनुष्याणामल्पायुष्टात्तत्र वेदग्रहणं न भवेत् । प्रजाश्च सर्व्वाः पापतत्परा व्युत्क्रमेण मृतिमाप्स्यन्ति । तथा सर्व्वे मनुजाः कामक्रोधपरा मूढ़ा वृथाऽहङ्कारपीड़िताः परस्य धनलिप्सवो बहुवैरा भविष्यन्ति । अपि च सर्व्वे दरिद्रास्तपःसत्यवर्ज्जिताश्च भविष्यन्ति । तस्मिन् घोरे कलियुगे धनवन्त एव राजानो भविष्यन्ति, द्विजातयश्च शूद्रसेवां करिष्यन्ति । प्रायस्सर्व्वे परदाररता स्वधर्म्मपत्नीं न गमिष्यन्ति, पुत्राः पितरं शिष्याश्च गुरुं द्वेक्ष्यन्ति । वनिताश्च स्वपतौ न रतिं यास्यन्ति । द्विजातयो लोभाभिभूताः परान्नलोलुपा भविष्यन्ति । धर्म्मपरायणो नरश्च तत्रोपहास्यतां यास्यति । शस्यानां फलमल्पं भविष्यति, कुलस्त्रियश्च वेश्याचारशीलेभ्यः स्पृहां, तथा स्वपुरु-

षाणां धर्म्माचारेषु विघ्नङ्करिष्यन्ति। नरा अपात्रेषु दानं, दुग्धार्थञ्च गोसेवाङ्करिष्यन्ति। ब्राह्मणाश्च वेदनिन्दकाः सन्तो न व्रतानि चरिष्यन्ति, न यज्ञान् यक्ष्यन्ति च। स्नानशौचादीनां नियमो न स्यात्। ब्राह्मणाश्चाण्डालादिभ्योऽपि प्रतिग्रहं कुर्य्युः। शूद्रा ब्राह्मणधर्म्मान्, ब्राह्मणाश्च शूद्रधर्म्मांश्चरन्तो महान्तं धर्म्मविप्लवं जनयिष्यन्ति। तत्र न कश्चिद्दाता, किन्तु सर्व्वे हर्त्तार एव भविष्यन्ति। सर्व्वे स्वल्पप्राणा बहुप्रजाश्च भविष्यन्ति। किम्बहुना, कलियुगे सर्व्वविधानामेव पापानां वृद्धिर्भविष्यति। एवम्भूतेऽपि कलौ यो विष्णुभक्तः शिवभक्तो वा भवेत्, तस्यैव सर्व्वाणि श्रेयांसि भविष्यन्तीति।

बृहन्नारदीयस्याध्यायाना विवरण सम्पूर्णम्।

# अथ विषयाणां सूची।

विषयाणां सूची समाप्ता ।

# बृहन्नारदीयपुराणम् ।

## प्रथमोऽध्यायः ।

ओँ गणपतये नमः ।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥ १ ।
वन्दे वृन्दावनासीनमिन्दिरानन्दमन्दिरम् ।
उपेन्द्रं सान्द्रकारुण्यं परानन्दं विभुं परम्* ॥ २ ।
ब्रह्मविष्णुमहेशाद्या यस्यांशा लोकसाधकाः† ।
तमादिदेवं चिद्रूपं विशुद्धं परमं भजे ॥ ३ ।

सूत उवाच ।

शौनकाद्या महात्मान ऋषयो ब्रह्मवादिनः ।
नैमिषाख्ये महारण्ये तपस्तेपुः‡ मुमुक्षवः ॥ ४ ।

---

* "विभु प्रभुं" इति (ग) ।

† यस्यांशा लोकसाधकाः (ग) ।

‡ तपाकर्म्मकस्य तपधातोरात्मनेपदविधानात्तपस्तेपुरिति परस्मैपदमार्षम् ।

जितेन्द्रिया जिताहाराः सन्तः सत्यपरायणाः ।
यजन्तः परया भक्त्या विष्णुमाद्यं जगद्गुरुम् ॥ ५ ।
अनीर्ष्याः सर्व्वधर्म्मज्ञा लोकानुग्रहतत्पराः ।
निर्म्ममा निरहङ्काराः परेशरतमानसाः ॥ ६ ।
ध्वस्तकामादिद्वजिनाः* सत्वादिगुणसंयुताः† ।
कृष्णाजिनोत्तरीयास्ते जटिला ब्रह्मचारिणः ॥ ७ ।
गृणन्तः परमं ब्रह्म जगद्धेतुं जगद्गुरुम्‡ ।
सर्व्वशास्त्रार्थतत्त्वज्ञास्तस्मिन्नैमिषकानने ॥ ८ ।
यज्ञैर्यज्ञपतिं केचिज्ज्ञानैर्ज्ञानात्मकं परे§ ।
केचिच्च परया भक्त्या नारायणमपूजयन् ॥ ९ ।
एकदा ते महात्मानः समाजञ्चक्रुरुत्तमाः ।
धर्म्मार्थकाममोक्षाणामुपायं ज्ञातुमिच्छवः ॥ १० ।
षड्विंशतिसहस्राणां¶ मुनीनामूर्द्धरेतसाम् ।
तेषां शिष्यप्रशिष्याणां संख्या वक्तुं न शक्यते ॥ ११ ।
मुनयो भावितात्मानो मिलितास्ते महौजसः ।
लोकानुग्रहकर्त्तारो वीतरागा विमत्सराः ॥ १२ ।

---

* ध्वस्तकामादिद्वजिनाः इति (घ) ।
† समादिगुणसंयुताः इति (घ) ।
‡ जगच्चक्षुः समौजसः इति (घ) ।
§ परम् इति (ग) ।
¶ सहस्राणि इति (घ) ।

कानि क्षेत्राणि पुण्यानि कानि तीर्थानि भूतले।
कथं वा लभ्यते मुक्तिः* नृणां तापार्त्तचेतसाम्॥ १३।
कथं हरौ मनुष्याणां भक्तिरव्यभिचारिणी।
केन सिध्येत† च फलं कर्म्मणस्त्रिविधात्मनः॥ १४।
इत्येवं प्रष्टुमात्मानमुद्यतान्प्रेक्ष्य शौनकः।
प्राञ्जलिर्व्वाक्यमाहेदं विनयावनतः सुधीः‡॥ १५।

शौनक उवाच।

आस्ते सिद्धाश्रमे पुण्ये सूतः पौराणिकोत्तमः।
यजन्मखैर्बहुविधैर्विश्वरूपं जनार्द्दनम्॥ १६।
स एतदखिलं वेत्ति व्यासशिष्यो यतीमुनिः।
पुराणसंहितावक्ता शान्तो वै लोमहर्षणिः॥ १७।
युगे युगेऽल्पकान्धर्म्मान्निरीक्ष्य मधुसूदनः।
वेदव्यासस्वरूपेण वेदभागं करोति वै॥ १८।
वेदव्यासो मुनिः साक्षान्नारायण इति द्विजाः।
शुश्रुमः§ सर्व्वशास्त्रेषु सूतस्तु¶ ब्रह्मसाधितः॥ १९।

---

(क)पुस्तके "कथं वा लभते मुक्ति" इति पाठो वर्त्तते।

† सिध्येत इति आत्मनेपदमार्षं, सिध्येत् इति साधु।

‡ विनयावनतस्थितः इति (ग)।

§ शुश्रुमः इति आर्षं, शुश्रुम इति साधु। लिटि निर्विसर्गान्तं शुश्रुम इति पदं भवतीति चेत् छन्दोभङ्गः।

¶ सूतस्तु व्यासभाषितः इति (ग) (घ)।

तेन संसाधितः* सूतो वेदव्यासेन धीमता ।
पुराणानि स वेत्त्येव नान्यो लोके ततः परः ॥ २० ॥
यः पुराणार्थविल्लोके स सर्व्वज्ञः सुबुद्धिमान् ।
स शान्तो मोक्षधर्म्मज्ञः कर्म्मभक्तिकलापवित् ॥ २१ ॥
वेदवेदाङ्गशास्त्राणां सारभूतं मुनीश्वराः ।
जगद्धितार्थं तत्सर्व्वं पुराणेषूक्तवान्मुनिः ॥ २२ ॥
ज्ञानार्णवो वै सूतस्तु सर्व्वतत्त्वार्थकोविदः ।
तस्मात्तमेव पृच्छामः† इत्यूचे शौनको मुनीन् ॥ २३ ॥
ततस्ते शौनकं सर्व्वे मुनयो वाग्विदां वरम् ।
समाश्लिष्य स्तुवन्तस्ते साधु साध्विति चाब्रुवन् ॥ २४ ॥
अथ ते मुनयो जग्मुः पुण्यं सिद्धाश्रमं वनम् ।
मृगव्रजसमाकीर्णं मुनिभिः परिशोभितम् ॥ २५ ॥
मनोज्ञभूरुहलताफलपुष्पविभूषितम् ।
अच्छोदसरसां वृन्दमतिथ्यातिथ्यसङ्कुलम् ॥ २६ ॥
तत्र नारायणं देवमनन्तमपराजितम् ।
यजन्तमग्निष्टोमेन ददृशुर्लोमहर्षणिम्‡ ॥ २७ ॥
यथार्हमर्च्चितास्तेन सूतेन प्रथितौजसः ।
इच्छन्तस्तदवभृथं§ तत्र तस्थुर्मखालये ॥ २८ ॥

---

* संश्रावितः इति (ग) (घ) ।

† पृच्छामि इति (घ) ।

‡ ददृशुरोमहर्षणम् इति (ग) ।

§ अवभृतम् इति (घ) ।

अध्वरावभृथस्नातं मुनिं पौराणिकोत्तमम् ।
पप्रच्छुस्ते सुखासीनं नैमिषारण्यवासिनः ॥ २९ ।

मुनय ऊचुः ।

वयन्त्वातिथयः प्राप्ता आतिथेयोऽसि सुव्रत ।
ज्ञानतत्त्वोपचारेण* पूजयास्मान् यथाविधि ॥ ३० ।
दिवौकसो हि जीवन्ति पीत्वा चन्द्रकलामृतम् ।
ज्ञानामृतन्तु पिबसि† मुने त्वन्मुखनिःसृतम्‡ ॥ ३१ ।
येनेदमखिलं जातं यदाधारं यदात्मकम् ।
यस्मिन्प्रतिष्ठितं तात यस्मिन्§ वा लयमेष्यति ॥ ३२ ।
केन विष्णुः प्रसन्नः स्यात्स कथं पूज्यते नरैः ।
कथं वर्णाश्रमाचारश्चातिथेः पूजनं कथम् ॥ ३३ ।
सफलं स्याद्यथा कर्म्म मोक्षोपायः कथं नृणाम् ।
भक्त्या किं प्राप्यते पुंभिस्तथा भक्तिश्च कीदृशी ॥ ३४ ।
वद सूत मुनिश्रेष्ठ सर्व्वमेतदसंशयम् ।
कस्य नो¶ जायते तुष्टिः श्रोतुं त्वद्वचनामृतम् ॥ ३५ ।

---

* ज्ञानदानोपचारेण इति (घ) ।

† अदसि इति (ग) ।

‡ (क)पुस्तके परैरन्यैश्च निःसृतम् इति पाठो वर्त्तते, स चासङ्गत. ।

§ तस्मिन् इति (क) ।

¶ कथ्यतां जायते इति (क) ।

सूत उवाच ।

शृणुध्वमृषयः सर्व्वे यद्दिष्टं वो वदाम्यहम् ।
गीतं सनत्कुमाराय नारदेन महात्मना ॥ ३६ ।
पुराणं नारदीयाख्यं बृहद्वेदार्थसम्मितम्* ।
सर्व्वपापप्रशमनं दुष्टग्रहनिवारणम् ॥ ३७ ।
दुःस्वप्ननाशनं धन्यं भुक्तिमुक्तिफलप्रदम् ।
नारायणकथोपेतं सर्व्वकल्याणसिद्धिदम् ॥ ३८ ।
धर्म्मार्थकाममोक्षाणां हेतुभूतं महाफलम् ।
अपूर्व्वपुण्यफलदं शृणुध्वं सुसमाहिताः ॥ ३९ ।
महापातकयुक्तो यो युक्तो वा सर्व्वपातकैः ।
श्रुत्वैतद्दीर्घं दिव्यं हि पुराणं मुक्तिमाप्नुयात्† ॥ ४० ।
यदत्राध्यायपठनाद्वाजपेयफलं लभेत् ।
अध्यायद्वयपाठेन अग्निष्टोमफलं द्विजाः ॥ ४१ ।
ज्यैष्ठमासे पौर्णमास्यां मूलर्क्षे प्रयतोनरः ।
स्नात्वा च यमुनायाञ्च मथुरायामुपोषितः ॥ ४२ ।
अभ्यर्च्च्य विधिवद्विष्णुं यत्फलं लभते द्विजाः ।
तत्प्रवक्ष्यामि वः सम्यक् शृणुध्वं गदतो मम ॥ ४३ ।

---

* बृहत्त्वे स्वार्थसम्मितम् इति (क) ।

† श्रुत्वैतदार्षं दिव्यं हि पुराणं शुद्धिमाप्नुयात् इति (घ) । श्रुत्वैतदादि काव्यं हि पुराणं शुद्धिमाप्नुयात् इति (ग) ।

जन्मायुतार्ज्जितैः पापैर्मुक्तः कोटिकुलान्वितः।
ब्रह्मणः पदमासाद्य तत्रैव परिमुच्यते ॥ ४४ ।
श्रुत्वा तु दश साध्यायानेतदाप्नोति भक्तितः।*
सन्देहो नात्र कर्त्तव्योऽच्युतो वै स्तूयते यतः ॥ ४५ ।
आर्य्याणां परमं आर्य्यं पवित्राणामनुत्तमम्।
दुःस्वप्ननाशनं पुण्यं श्रोतव्यं यत्नतस्ततः ॥ ४६ ।
नरोऽत्र श्रद्धया युक्तः श्लोकं श्लोकार्द्धमेव वा।
पठित्वा मुच्यते सद्यश्चोपपातककोटिभिः ॥ ४७ ।
सतामेव प्रयोक्तव्यं गुह्याद्गुह्यतमं यतः।
वाचयेद्विष्णुभवने पुण्यक्षेत्रे च संसदि ॥ ४८ ।
ब्रह्मद्वेषरतानाञ्च दम्भाचाररतात्मनाम्।
लोकयाजकवृत्तीनां† न ब्रूयाद्द्विजसत्तमाः‡ ॥ ४९ ।
त्यक्तकामादिदोषाणां विष्णुभक्तिरतात्मनाम्।
गुरुभक्तिरतानाञ्च वक्तव्यं मोक्षसाधनम् ॥ ५० ।
सर्व्वदेवमयो विष्णुः स्मरजार्त्तिप्रणाशनः§।
स भक्तवत्सलो देवो भक्त्या तुष्यति नान्यथा ॥ ५१ ।

---

* श्रुत्वाऽत्र तु दशाध्यायान् तदाप्नोति च भक्तितः इति (घ)। श्रुत्वा तत्र दशाध्यायान् तदवाप्नोति भक्तितः इति (ग)।

† लोकयाचकवृत्तीनामिति (क)। लोकापकृतिवृत्तीनामिति (ग)।

‡ न ब्रूयादिदमुत्तममिति (ग) (घ)।

§ स्मरतामार्त्तिनाशन इति (ग)।

अवशेनापि* यन्नाम्नि कीर्त्तिते वा स्मृतेऽपि च ।
विमुक्तपातकः सोऽपि परमं पदमश्नुते ॥ ५२ ।
संसारघोरकान्तारदावाग्निर्मधुसूदनः ।
स्मृतानां सर्व्वपापानि नाशयत्याशु सत्तमाः ॥ ५३ ।
तदर्पकमिदं पुण्यं पुराणं श्राव्यमुत्तमम् ।
श्रवणात्पठनाद्वापि सर्व्वपापविनाशकृत् ॥ ५४ ।
यस्यात्र श्रवणे बुद्धिर्व्वर्त्तते भक्तिसंयुता ।
स एव कृतकृत्यश्च सर्व्वशास्त्रार्थकोविदः ॥ ५५ ।
तदर्ज्जितं तपःपुण्यं, तत्सद्यः सफलं द्विजाः ।
यदत्र श्रवणे बुद्धिरन्यथा न हि वर्त्तते† ॥ ५६ ।
सत्कथासु प्रवर्त्तन्ते यज्जातमतिरुत्तमाः‡ ।
निन्दायां कलहे वापि ह्यसन्तः पापतत्पराः ॥ ५७ ।
पुराणेष्वर्थवादत्वं ये वदन्ति नराधमाः ।
तैरर्ज्जितानि पुण्यानि तद्वदेव भवन्ति वै ॥ ५८ ।
समस्तकर्म्मनिर्मूलसाधनानि नराधमः ।
पुराणान्यर्थवादेन श्रुत्वा नरकमश्नुते§ ॥ ५९ ।

---

* अवशेनापीति (ग) (घ) ।
† जायते इति (घ) ।
‡ सज्जना ये जगद्धिता' इति (ग) । सज्जाता ये जगद्धिताः इति (घ) ।
§ ब्रुवन् इति (घ) ।

यावद्ब्रह्मा सृजत्येतज्जगत्स्थावरजङ्गमम् ।
तावत्स पच्यते पापी नरकाग्निषु सन्ततम् ॥ ६० ।

अहो हि वाक्ये चतुरक्षरे द्वे
पुण्यस्य पापस्य निदानभूते ।
उच्चारणादेव मुनीन्द्रनाम्नो*
नारायणश्चेति तथार्थवादः ॥ ६१ ।

पुराणेषु द्विजश्रेष्ठाः सर्व्वधर्म्मप्रवक्तृषु ।
प्रवदन्त्यर्थवादत्वं ये ते नरकभाजनाः ॥ ६२ ।
अनायासेन यः पुण्यानीच्छतीह† द्विजोत्तमाः ।
श्राव्याणि भक्त्या तेनैव पुराणानि न संशयः ॥ ६३ ।
पुरार्ज्जितानि पापानि नाशमायान्ति यस्य वै ।
पुराणश्रवणे बुद्धिस्तस्यैव भवति ध्रुवम् ॥ ६४ ।
पुराणे वर्त्तमानेऽपि पापपाशेन यन्त्रितः ।
अनादृत्य‡ वृथागाथासक्तबुद्धिः प्रवर्त्तते ॥ ६५ ।

सत्सङ्गदेवार्च्चनसत्कथासु
परोपदेशे च रतो मनुष्यः ।

* शृणां मुनीन्द्राः इति (ग) (घ) ।

† ये पुण्यानीच्छन्तीह इति (घ), एषपाठोऽसङ्गतः परार्द्धे तेनेत्येकवचननिर्द्देशात् ।

‡ अनादृत्यान्यगाथासु सक्तबुद्धिः प्रवर्त्तते इति (ग) ।

स याति विष्णोः परमं पदं यत्*
देहावसानेऽच्युततुल्यतेजाः ॥ ६६ ।
तस्मादिदं नारदनामधेयं†
परं पुराणं शृणुत द्विजेन्द्राः ।
यस्मिन् श्रुते जन्मजरादिनाशो
भवत्यदोषश्च नरोऽच्युतः स्यात् ॥ ६७ ।
वरं वरेण्यं वरदं पुराणं
निजप्रभाभासितसर्व्वलोकम् ।
सङ्कल्पितार्थं परमादिदेवं
स्मृत्वा व्रजेन्मोक्षपदं मनुष्यः ॥ ६८ ।
ब्रह्मेशविष्ण्वाख्यशरीरभेदै-
र्विश्वं सृजत्यत्ति च पाति यश्च ।
तमादिदेवं परमं परेश-
माधाय‡ चेतस्युपयाति मुक्तिम् ॥ ६९ ।
योनाम जात्यादिविकल्पहीनः
परः पराणां परमः परस्मात् ।
वेदान्तवेद्यः स्वरुचा प्रकाशः
सद्दृश्यते§ सर्व्वपुराणवेदैः ॥ ७० ।

---

* तत् इति (घ) ।
† तस्माद्वृहन्नारदनामधेयं इति (घ) ।
‡ मायाति इति (क) ।
§ समिक्ष्यते इति (ग) ।

तस्मात्तमीशं भजतां विमुक्ति-
रुपासनायालमिदं मुरारेः ।
परं रहस्यं पुरुषार्थहेतुं
स्मृत्वा नरो याति परावरेशम्* ॥ ७१ ।
वक्तव्यं धार्म्मिकायैतच्छ्रद्दधानाय पण्डिताः ।
मुमुक्षवे च यतये वीतरागाय धीमते ॥ ७२ ।
वक्तव्यं पुण्यदेशे च सभायां देवतागृहे ।
पुण्यक्षेत्रे पुण्यतीर्थे न सन्ध्यासु विचक्षणाः ॥ ७३ ।
उच्छिष्टदेशे वक्तारः संवादमिदमुत्तमम्† ।
पच्यन्ते नरके घोरे यावदाचन्द्रतारकम् ॥ ७४ ।
मृषा शृणोति यो मूढो दम्भाद्भक्तिविवर्जितः ।
सोऽपि तस्मिन्महाघोरे नरके पच्यते क्षये ॥ ७५ ।
नरोयः सत्कथामध्येऽन्यद्वदति पातकी‡ ।
स याति नरकं घोरं यावदाचन्द्रतारकम् ॥ ७६ ।
तस्माच्छ्रोता च वक्ता च समाहितमना भवेत् ।
असमाहितचित्तस्तु न जानातीह किञ्चन ॥ ७७ ।

---

* पराऽपरेशम् इति (ग) ।

† चासतामिदमुत्तमम् इति (ग) ।

‡ (घ) पुस्तके "सत्कथामध्ये ऽन्यद्वदति पातकी" एवं विसन्धिं कृत्वाऽत्र छन्दो-
भङ्गो निवारितः ।

नान्यचित्तोनरो भूत्वा पिवेद्धरिकथामृतम् ।
कथं सम्भ्रान्तचित्तस्य स्वादाभेदः प्रजायते ॥ ७८ ।
किं सुखं प्राप्यते लोके सदा सम्भ्रान्तचेतसा ।
तत एकमना भूत्वा कुर्य्यादच्युतचिन्तनम्* ॥ ७९ ।
नृणां सम्भ्रान्तचित्तानां सुखं वैषयिकं यथा† ।
न ज्ञायते बुधश्रेष्ठाः योगसिद्धिः कथम्भवेत् ॥ ८० ।
तस्मात्सर्व्वं परित्यज्य कामं दुःखस्य साधनम् ।
समाहितमना भूत्वा कुर्य्यादच्युतचिन्तनम्‡ ॥ ८१
येन केनाप्युपायेन§ स्मृतो नारायणोऽव्ययः ।
अपि पातकयुक्तस्य प्रसन्नः स्यान्न संशयः ॥ ८२ । ¶
यस्य देवे परा भक्तिर्विष्णौ नारायणेऽव्यये ।
तस्य स्यात्सफलं जन्म मुक्तिश्चैव करे स्थिता ॥ ८३ ।
धर्म्मार्थकाममोक्षाख्याः पुरुषार्था द्विजोत्तमाः ।
हरिभक्तिपराणां वै संपद्यन्ते न संशयः ॥ ८४ ।

इति श्रीबृहन्नारदीये पुराणे प्रथमोऽध्यायः ।



---

* तत एकमना भूत्वा पिवेद्धरिकथामृतम् इति (ग) (घ) ।

† सुखं वैषयिकमेव वा इति (क) (ग) । एतत्पाठे छन्दोभङ्गोऽस्ति ।

‡ (क) पुस्तके एतदर्द्धं नास्ति ।

§ येन केन प्रकारेण इति (ग) ।

¶ (ग) पुस्तके वक्ष्यमाणश्लोकद्वयं नास्ति ।

# अथ द्वितीयोऽध्यायः ।

ऋषय ऊचुः ।

कथं सनत्कुमाराय देवर्षिर्नारदो मुनिः ।
प्रोक्तवान् सकलान्धर्म्मान्, कथ तौ मिलितावुभौ ॥ १ ।
कस्मिन् क्षेत्रे स्थितौ तात तावुभौ ब्रह्मवादिनौ ।
यदुक्तं नारदेनास्मै* तन्नो ब्रूहि दयार्णव ॥ २ ।

सूत उवाच ।

सनकाद्या महात्मानो ब्रह्मणस्तनयाः स्मृताः ।
निर्म्ममा निरहङ्काराः सर्व्वे ते ऊर्द्धरेतसः ॥ ३ ।
तेषां नामानि वक्ष्यामि सनकश्च सनन्दनः ।
सनत्कुमारश्च विभुः सनातन इति स्मृताः ॥ ४ ।
विष्णुभक्ता महात्मानो ब्रह्मध्यानपरायणाः ।
सहस्रसूर्य्यसङ्काशाः सत्यसन्धा मुमुक्षवः ॥ ५ ।
एकदा ब्रह्मणः पुत्राः सनकाद्या महौजसः ।
मेरुशृङ्गं समाजग्मुर्वीक्षितुं† ब्रह्मणः सभाम् ॥ ६ ।

---

* यदुक्तो नारदेनाऽसौ इति (घ)। (ग) पुस्तके "तावुभौ ब्रह्मवादिनौ इत्यतोऽनन्तरं "यस्य देवे परा भक्ति" रित्यादिश्लोकद्वयं लेखकप्रमादतएव लिखितम् ।

† (घ) पुस्तके समाजग्मुर्वीक्षितुमिति पाठः ।

तत्र गङ्गां महापुण्यां विष्णुपादोद्भवां नदीम् ।
निरीक्ष्य स्नातुमुद्युक्ताः सीताख्यां प्रथितौजसः ॥ ७ ।
एतस्मिन्नन्तरे विप्रा देवर्षिर्नारदो मुनिः ।
आजगामोच्चरन्नाम हरे नारायणादिकम् ॥ ८ ।
नारायणाच्युताऽनन्त वासुदेव जनार्द्दन* ।
यज्ञेश यज्ञपुरुष कृष्ण विष्णो नमोऽस्तु ते ॥ ९ ।
पद्माक्ष कमलाकान्त गङ्गाजनक केशव ।
क्षीरोदशायिन्देवेश नारायण नमोऽस्तु ते† ॥ १० ॥
श्रीकृष्ण विष्णो नृहरे मुरारे
प्रद्युम्न सङ्कर्षण वासुदेव ।
अजानिरुद्धाच्युत विश्वरूप‡
त्वं पाहि नः सर्व्वभयादजस्रम् ॥ ११ ।
इत्युच्चरन् हरेर्नाम पावयन्नखिलं जगत् ।
आजगाम स्तुवन् गङ्गां मुनिर्लोकैकपावनीम् ॥ १२ ।
अथायान्तं§ समुद्वीक्ष्य सनकाद्या महौजसः ।
यथार्हमर्हणाञ्चक्रुर्ववन्दे सोऽपि तान्मुनीन् ॥ १३ ।

---

* जगन्मय इति (ग) ।
† दामोदर नमोऽस्तु ते इति (ग) (घ) ।
‡ अजानिरुद्धाखिलविश्वरूप इति (ग) (घ) ।
§ अथायातमिति (क) ।

कृतकृत्येषु मुनिषु गङ्गातीरे मनोरमे ।
आसीनेषु च सर्व्वेषु प्रास्तौषीन्नारदो* हरिम् ॥ १४ ।
अथ तत्र सभामध्ये नारायणपरायणम्† ।
सनत्कुमारः प्रोवाच नारदं मुनिपुङ्गवम् ॥ १५ ।

सनत्कुमार उवाच ।

सर्व्वज्ञोऽसि महाप्राज्ञ मुनिमानद नारद ।
हरिभक्तिपरो यस्मात्त्वत्तो नास्त्यपरोऽधिकः ॥ १६ ।
येनेदमखिलं जातं जगत्स्थावरजङ्गमम् ।
गङ्गा यथोद्भवा येन कथं स ज्ञायते हरिः ॥ १७ ।
कथञ्च त्रिविधं कर्म्म सफलं जायते मुने ।
ज्ञानं यथा भवेन्नृणां तपसां लक्षणं यथा ॥ १८ ।
यथातिथेः पूजनञ्च येन विष्णुः प्रसीदति ।
एवमादीनि गुह्यानि हरिभक्तिकराणि च ।
अनुग्राह्योऽस्मि यदि ते तत्त्वतो वक्तुमर्हसि ॥ १९ ।

नारद उवाच ।

नमः पराय देवाय परात्परतराय च ।
परात्परनिवासाय सगुणायागुणाय च ॥ २० ।
ज्ञानाज्ञानस्वरूपाय धर्म्माधर्म्मस्वरूपिणे ।
विद्याऽविद्यास्वरूपाय स्वस्वरूपाय ते नमः ॥ २१ ।

---

* अस्तौषीत् इति (ग) (घ) ।

† नारायणपरायणः इति (घ) ।

अमायायात्मसंज्ञाय मायिने योगरूपिणे ।
योगेश्वराय योगाय योगगम्याय ते नमः ॥ २२ ।
ज्ञानाय ज्ञानगम्याय सर्व्वज्ञानैकहेतवे ।
ज्ञानेश्वराय दिव्याय ज्ञानगम्याय ते नमः ॥ २३ ।
ध्यानाय ध्यानगम्याय ध्यानात्पापहराय च ।
ध्यानेश्वराय सुधिये तस्मै शुद्धात्मने नमः ॥ २४ ।*

आदित्य सेन्द्राग्नि†-विधातृ-देवाः
सिद्धाश्च यक्षासुर-नागसङ्घाः ।
यच्छन्ति‡ कार्य्यास्तमजं पुराणं
स्तव्यं§ स्तुतीशं सततं नतोऽस्मि ॥ २५ ।
यन्नामसंकीर्त्तनपुण्यशीलाः
स्वप्नेऽपि पश्यन्ति न यं मुनीन्द्राः ।
जानन्ति नाद्यापि विरिञ्चिमुख्या-
स्तमीशमाद्यं¶ सततं नतोऽस्मि ॥ २६ ।
यो ब्रह्मरूपी जगतां विधाता
तदेव पाता हरिरूपभाग् यः ।

---

* (ख) पुस्तके अमायायेत्यादि श्लोकत्रयं नास्ति ।

† चन्द्राग्नि इति (ख) ।

‡ इच्छन्ति इति (ख) (ग) ।

§ स्तुत्यं इति (ख), स्तुतं इति (ग) ।

¶ स्तमीशमीड्यं इति (ख) ।

कल्पान्तरुद्राख्यतनुश्च* विश्वं
संगृह्य शेते तमजं भजामि ॥ २७ ।
यन्नामसंकीर्त्तनतो गजेन्द्रो
ग्राहोग्रबन्धान्मुमुचे स एव ।
परत्र विष्णोः परमं पदं यत्
पश्यन्ति सन्तस्तमजं प्रपद्ये ॥ २८ ।
शिवस्वरूपी शिवभावितानां
हरिस्वरूपी हरिभावितानाम् ।
सङ्कल्पपूर्व्वात्मकमूर्त्तिहेतुं
वरं वरेण्यं शरणं प्रपद्ये ॥ २९ ।
यः केशिहन्ता नरकान्तकश्च
भुजाग्रमात्रेण† दधार गोत्रम् ।
भूभारविच्छेदविनोदकामं
नमामि देवं वसुदेवसूनुम् ॥ ३० ।
जित्वा हयग्रीवासुरं‡ वेदानुद्धृतवान् पुनः ।
मत्स्यरूपेण यो देवस्तमस्मि शरणं गतः ॥ ३१ ।

---

* (क) पुस्तके कल्पान्तरुद्राख्यस्ततश्च विश्वमिति पाठः, एवं हि छन्दोभङ्गः ; (ग) पुस्तके कल्पान्तरुद्राख्यतरश्चेति पाठोऽस्ति, तत्र च नार्थसङ्गतिः। (ख) पुस्तके कल्पान्त-रुद्राख्यतनुश्च वीर्य्यात् इति तमजं नमामीति च पाठो वर्त्तते।

† भुजैकमात्रेणेति (ख)।

‡ 'हयग्रीवासुरं' इत्यत्र छन्दोभङ्गः। (घ) पुस्तके जित्वा हिमाख्यमसुरमिति पाठो वर्त्तते, तत्र नैष दोषः। (ख, ग) पुस्तकयोः एतदारभ्य श्लोकत्रयं नास्ति।

दधार मन्दरं पृष्ठे क्षीरोदेऽमृतमन्थने ।
देवतानां हितार्थाय तं कूर्म्मं प्रणमाम्यहम् ॥ ३२ ।
दंष्ट्राङ्कुशेन योऽनन्तः समुद्धृत्यार्णवाद्धराम् ।
तस्थाविवं* जगत्कृत्स्नं तं वराहं नमाम्यहम् ॥ ३३ ।
प्रह्लादं रक्षितुं दैत्यं शिलाग्रकठिनोरसम् ।
विदार्य्य हतवान्दैत्यं तं नृसिंहं नमाम्यहम्† ॥ ३४ ।

---

* तत् स्थावरजगत्कृत्स्नं इति (क), एषोऽपि क्रियाभावादसङ्गतः पाठः । (ख) (घ) पुस्तकयोर्दंष्ट्राङ्कुशेनेत्यत्र दन्ताङ्कुरेणेति पठितम् ।

† (ख) पुस्तके श्लोकोऽयमन्यथैवं पठितो यथा—

स्तम्भेऽवतीर्य्याच नृसिंहरूपी हिरण्यवक्षः कठिनं शिलावत् ।
विदार्य्य संरक्षितवान् स्वभक्तं प्रह्लादमीशं तमहं भजिष्ये ॥

यथास्थाने तु नखाग्रेण हिरण्यस्य स्ववीर्य्यवचजन्मना ।
प्रह्लादं रक्षितुं दैत्यं तं नृसिंहं नमाम्यहम् ।

तत्राऽप्यन्ये श्लोका अधिकाः सन्ति । यथा—

व्योमादिभिर्भूषितमात्मसञ्ज्ञं निरञ्जनं चिन्त्यममूर्त्तिमन्तम् ।
जगत्समुद्धारणकर्म्मिणश्च परं पुराणं पुरुषं नतोऽस्मि ॥
ब्रह्मेन्द्ररुद्राग्निमरुन्मनुष्यगन्धर्व्वयचाऽसुरसिद्धभेदैः ।
सर्व्वत्र तिष्ठत्यनिशं यईशस्तमादिमात्मानमहं भजिष्ये ॥
यतोभिन्नमिदं सर्व्वं यतोभूमिचराचरम् ।
यस्मिन्नेति लयं पश्चादमुष्मिन् शरणं गतः ॥
युगरूपेण यः स्थित्वा सङ्गवानिति कथ्यते ।
असङ्गः परिपूर्णत्वात्तमीशं शरणं गतः ॥

लब्ध्वा वैरोचनाद्भूमिं पद्भ्यां द्वाभ्यामतीत्य यः ।
आब्रह्म भुवनं* क्रान्तं वामनं तं नमाम्यहम् ॥ ३५ ।
हैहयस्यापराधेन चैकविंशतिसंख्यया ।
क्षत्रियानाजघानैव† जामदग्न्यं नतोऽस्म्यहम् ॥ ३६ ।
आविर्भूतश्चतुर्द्धा यः कपिभिः‡ परिवारितः ।
हतवान्राक्षसानीकं रामं दाशरथिं भजे ॥ ३७ ।
मूर्त्तिद्वयं समाश्रित्य भूभारमपहृत्य यः ।
मुषलेन हलाग्रेण तं रामं सततं भजे ॥§ ३८ ।

---

सर्व्वसङ्गनिवृत्तानां ध्यानयोगरतात्मनाम् ।
सर्व्वं भवति ज्ञानात्मा तमस्मि शरणं गतः ॥
हृदि स्थितोऽपि योदेवी मायया मोहितात्मनाम् ।
अवेद्यः परमः शुद्धस्तमस्मि शरणं गतः ॥
जगतामुपकाराय रूपाणि विविधानि यः ।
समरूपोऽजरोह्येष तमस्मि शरणं गतः ॥
जित्वा संख्याख्यमसुरं वेदानुद्धृतवान् पुनः ।
मत्स्यरूपेण योदेवस्तमस्मि शरणं गतः ॥

* आब्रह्मभुवनाक्रान्तं इति (ख) । भुवनाक्रान्तं इति (ग) । भवनायातं इति (घ) ।

† (क) पुस्तके—'क्षत्रियान्वययोच्छेत्ता जामदग्निं नतोऽस्म्यह' इति पाठो विद्यते, तदशुद्धमिति मत्वा (ग) पुस्तकस्य पाठोऽत्र गृहीतः । क्षत्रियान्वयभेत्ता य इति (ख) । क्षत्रियान्वयछेत्तारं इति (घ) ।

‡ हरिभिरिति (ख) ।

§ मूर्त्तिद्वयं समाश्रित्य भूभारमपकृष्य च ।
स्वकुलं च हलाग्रेण तं बलं सततं भजे ॥

इति (ख), (ग घ) तं बलं सततं भजे इत्येतदपहायान्यः पाठः (क)सदृश एव ।

भूम्यादिलोकत्रितयं संहृत्यात्मानमात्मना* ।
पश्यन्ति योगिनः सर्व्वे तमीशानं भजाम्यहम् ॥ ३९ ।
युगान्ते पापिनो†ऽशुद्धांश्छित्त्वा तीक्ष्णासिधारया ।
स्थापयामास यो धर्म्मं कृतादौ तं नमाम्यहम् ॥ ४० ।
एवमादीन्यनेकानि रूपाण्यस्य महात्मनः ।
येषां‡ नामानि संख्यातुं शक्यन्ते नाब्दकोटिभिः ॥ ४१ ।
महिमानन्तु यन्नाम्नः पारं§ गन्तुमनीश्वराः ।
मुनयोऽपि मुनीन्द्राश्च कथं तं क्षुद्रको भजे ॥ ४२ ।
यन्नामश्रवणेनाऽपि महापातकिनोऽपि ये ।
पावनत्वं प्रपद्यन्ते कथं स्तोष्यामि क्षुद्रधीः¶ ॥ ४३ ।
सुरापरोऽपि‖ यन्नाम कीर्त्तयित्वा ह्यजामिलः ।
प्रपेदे परमं स्थानं कथं स्तोष्यामि क्षुद्रधीः** ॥ ४४ ।

---

* संहृत्यात्मानमात्मनि । पश्यन्ति निर्म्मलं तत्त्वं इति (ग) । (ख) पुस्तके तत्त्वं-स्थाने शुद्धं पठितम् ।

† प्राणिनः इति (ग) । (ख) पुस्तके छित्त्वा स्थाने भित्त्वेति पठितम् ।

‡ तेषां इति (ख) ।

§ पारं गन्तुं मुनीश्वरा इति सार्व्वत्रिकः पाठः, सचाऽसंगतः, पारं गन्तुमनीश्वराः एवं कृते तु संगतो भवति ।

¶ स्वल्पधीः इति (ख) ।

‖ अवशेनापीति (ख) (ग) ।

** मन्दधीः इति (ख) ।

यथाकथञ्चिद्यन्नाम्नि कीर्त्तिते वा श्रुतेऽपि वा* ।
पापिनः परिशुद्धाः स्युः शुद्धा मोक्षमवाप्नुयुः† ॥ ४५ ।
आत्मन्यात्मानमाधाय योगिनो गतकल्मषाः ।
पश्यन्ति यं ज्ञानरूपं तमस्मि शरणं गतः ॥ ४६ ।
सांख्याः सर्व्वत्र पश्यन्ति परिपूर्णात्मकं हरिम् ।
तमादिदेवमजरं ज्ञानरूपं नतोऽस्म्यहम् ॥ ४७ ।
अज्ञा जानन्ति विश्वेशं‡ पाषाणादिषु सर्व्वदा ।
सर्व्वत्र संस्थितं देवं§ तं वन्दे पुरुषोत्तमम् ॥ ४८ ।
कर्म्माणि यस्य रूपाणि तपांसि च¶ महात्मनः ।
ज्ञानरूपः‖ सदा काम्यस्तमीशं सततं भजे ॥ ४९ ।
सर्व्वतत्त्वमयं शान्तं सर्व्वस्रष्टारमीश्वरम् ।
सहस्रशिरसं देवं तं वन्दे भावनामयम् ॥ ५० ।
यद्भूतं यच्च वै भाव्यं जगत्स्थावरजङ्गमम् ।
दशाङ्गुलं योऽत्यतिष्ठत्तमीशमजरं भजे** ॥ ५१ ।

---

* स्मृतेऽपि वा इति (ख) ।

† पापिनोऽपि विशुद्धाः स्युर्मोक्षञ्चापि ह्यवाप्नुयुः इति (ख) ।

‡ देवेशं इति (ग) । अज्ञा यजन्ति भूतेश पाषाणादिषु सर्व्वदा इति (ख) ।

§ शान्तं तं चेमं इति (ख), कान्तं तं वन्दे इति (ग) ।

¶ वयांसि च इति (घ) ।

‖ ज्ञानरूपीय एकाग्राः इति (ख), ज्ञानरूपी सदा काम्यः इति (घ) ।

** सर्व्वतत्त्वमयेत्यादि श्लोकद्वयं (ख)पुस्तके नास्ति । (ग)पुस्तके दशाङ्गुली योऽत्यतिष्ठदिति पाठो वर्त्तते ।

अणोरणीयांसमजं महताञ्च महत्तरम् ।
गुह्याद्गुह्यतमं देवं प्रणमामि पुनः पुनः ॥ ५२ ।
ध्यातः स्मृतः पूजितो वा स्तुतो वा नमितोऽपि वा* ।
स्वपदं† यो ददातीशस्तं वन्दे पुरुषोत्तमम् ॥ ५३ ।

इति‡ स्तुवन्तं परमं परेशं
हर्षाम्बुसंरुद्धविलोचनास्ते§ ।
मुनीश्वरा नारदनामधेयं
सन्तुष्टुवुः प्राञ्जलयो महान्तम् ॥ ५४ ।

इदं वै¶ नारदस्तोत्रं प्रातरुत्थाय यः पठेत् ।
सर्व्वपापविनिर्म्मुक्तो विष्णुलोके महीयते|| ॥ ५५ ।**
इति दत्त्वा वरं तस्मै नारदाय मुनीश्वराः ।
व्याहरन्तो हरेर्नाम तुष्टुवुर्नारदं मुनिम् ॥ ५६ ।

इति श्रीबृहन्नारदीये पुराणे द्वितीयोऽध्यायः ।



---

* नमितोऽपि पुनः पुनः इति (क) ।

† स्वपादं यो दधाति इति (क) । स्वसाम्यं यो ददातीशः इति (ख) ।

‡ (ख)पुस्तके इतः पूर्व्वं सूत उवाच इति पाठो वर्त्तते ।

§ हर्षाश्रुसंरुद्धविलोचना इति (ख) । हर्षाम्बुसम्बद्धविलोचना इति (क) ।

¶ यदिदं नारदस्तोत्रं इति (क) ।

|| स गच्छति इति (ख) ।

** श्लोकोऽयं (ख)पुस्तके नास्ति ।

# अथ तृतीयोऽध्यायः ।

नारद उवाच ।

नारायणोऽक्षरोऽनन्तः सर्व्वव्यापी निरञ्जनः ।
तेनेदमखिलं व्याप्तं जगत्स्थावरजङ्गमम् ॥ १ ॥
आदिसर्गे महाविष्णुः स्वप्रकाशो जगन्मयः* ।
गुणभेदमधिष्ठाय मूर्त्तित्रयमवाप्तवान् ॥ २ ॥
सृष्ट्यर्थमसृजद्देवो दक्षिणाङ्गात्प्रजापतिम् ।
मध्ये रुद्राख्यमीशानं जगदन्तकरं मुने† ॥ ३ ॥
पालनायास्य जगतो वामाङ्गाद्विष्णुमव्ययम् ।
आदिसर्गे महाविष्णुरेवं त्रित्वमवाप्तवान् ॥ ४ ॥
तमादिदेवमजरं केचिद्रुद्रं वदन्ति वै‡ ।
केचिच्च विष्णुमपरे धातारं ब्रह्म चापरे ॥ ५ ॥
तस्य शक्तिः परा विष्णोर्जगत्कार्य्यपरिश्रया ।
भावाभावस्वरूपा सा विद्याऽविद्येति गीयते ॥ ६ ॥
यदा विश्वं महाविष्णोर्भिन्नत्वेन प्रतीयते ।
तदा ह्यविद्या संसिद्धा तदा दुःखस्य साधनी ॥ ७ ॥

---

* (ख)पुस्तके चादिसर्गे महाविष्णुरेवं त्रित्वमवाप्तवानिति श्लोकार्द्धमात्रं विद्यते तत्र सार्द्धश्लोकद्वयं परित्यक्तम् ।

† जगदन्तककारणं इति (क) । जगदन्तकरं मुनिं इति (ग) ।

‡ केचिदिन्द्रं वदन्ति वै इति (ख) ।

ज्ञातृज्ञेयाद्युपाधिस्तु यदा नश्यति सत्तमाः।
सर्व्वैकभावना बुद्धिः सा विद्येत्यभिधीयते ॥ ८ ।
एवं माया महाविष्णोर्भिन्ना संसारदायिनी।
अभेदबुद्ध्या दृष्टा चेत्संसारक्षयकारिणी ॥ ९ ।
विष्णुशक्तिसमुद्भूतमेतत्सर्व्वं चराचरम्।
यस्माभिन्नमिदं सर्व्वं यच्चेदं यच्च नेङ्गते* ॥ १० ।
उपाधिभिर्यथाकाशो भिन्नत्वेन प्रतीयते।
अविद्योपाधिभेदेन तथेदमखिलं जगत् ॥ ११ ।
यथा हरिर्जगद्व्यापी तस्य शक्तिस्तथा मुने।
दाहशक्तिर्यथाङ्गारे स्वाश्रयं व्याप्य तिष्ठति ॥ १२ ।
उमेति केचिदाहुस्तां शक्तिं लक्ष्मीति† चापरे।
भारतीत्यपरे चैनां गिरिजेत्यम्बिकेति च ॥ १३ ।
दुर्गेति भद्रकालीति चण्डी माहेश्वरीति च।
कौमारी वैष्णवी चेति वाराह्यैन्द्रीति चापरे ॥ १४ ।
ब्राह्मीति विद्याऽविद्येति मायेति च तथापरे।
प्रकृतिश्च परा चेति‡ वदन्ति परमर्षयः ॥ १५ ।

---

* इनृग गतावित्यस्येङ्गतीति रूपं भवति, इङ्गते इत्यार्षम्।

† लक्ष्मीति आर्षं, लक्ष्मीरिति साधु।

‡ प्रकृतिश्च तथा चैवेति (क)। प्रकृतिश्च पुमांश्चेतीति (ख)। (ख)पुस्तके निर्व्वाणं प्राप्यते गतिं (गतिः ?) इति पाठो वर्त्तते।

सेयं शक्तिः परा विष्णोर्जगत्सर्गादिकारिणी ।
व्यक्ताव्यक्तस्वरूपेण जगद्व्याप्य व्यवस्थिता ॥ १६ ।
प्रकृतिश्च पुमांश्चैव कालश्चेति त्रिधा स्थिता* ।
सृष्टिस्थितिविनाशानामेका कारणताङ्गता ॥ १७ ॥
येनेदमखिलं जातं ब्रह्मरूपधरेण वै ।
तस्मात्परतरो देवो नित्य इत्यभिधीयते ॥ १८ ।
रक्षां करोति यो देवो जगतां परमः पुमान् ।
तस्मात्परतरं यत्तदव्ययं परमं पदम् ॥ १९ ।
अक्षरो निर्गुणः शुद्धः परिपूर्णः सनातनः ।
यः परः कालरुद्राख्यो योगिध्येयः परात्परः ॥ २० ।
परमात्मा परानन्दः सर्व्वोपाधिविवर्ज्जितः ।
ज्ञानैकवेद्यः परमः सच्चिदानन्दविग्रहः† ॥ २१ ।
योऽसौ शुद्धोऽपि परमस्त्वहङ्कारेण संयुतः‡ ।
देहीति प्रोच्यते मूढैरहोऽज्ञानं हि भेदनम् ॥ २२ ।
परं ब्रह्माभिधानन्तु यस्मिन्निर्म्मलतेजसि§ ।
प्रोच्यते ह्युपचारेण वाचा मानसगोचरे¶ ॥ २३ ॥

---

* (ग) (घ) पुस्तकयोः त्रिधा स्थितः, एकः कारणताङ्गत इति पाठो वर्त्तते, (ख) पुस्तके स्थित इत्यत्र सृत इति पठितम् ।

† सच्चिदानन्दरूपकः इति (ख) ।

‡ परमस्तमहङ्कारसंयुतः इति (क) । एष श्लोकः (ख) पुस्तके नास्ति।

§ ब्रह्माभिधानन्तु परं यस्मिन्निर्म्मलतेजसि इति (ख) ।

¶ अवाङ्मनसगोचरे इति (ख) । स वाङ्मनसगोचर' इति (घ) ।

स देवः परमः शुद्धः सत्वादिगुणभेदतः ।
मूर्त्तित्रयं समापन्नः सृष्टिस्थित्यन्तकारणम् ॥ २४ ।
यस्यायुतायुतांशांशा ब्रह्माद्यास्त्रिदिवौकसः ।
तेनेदमीदृशं व्याप्तं जगदेतच्चराचरम् ॥ २५ ।
योऽसौ ब्रह्मा जगत्कर्त्ता* यन्नाभिकमलोद्भवः ।
स एवानन्दरूपात्मा तस्मान्नान्यः परात्मवान्† ॥ २६ ।
अन्तर्यामी जगद्रूपी सर्व्वसाक्षी‡ निरञ्जनः ।
भिन्नाभिन्नस्वरूपेण स्थितो वै परमेश्वरः ॥ २७ ।
यस्य शक्तिर्महामाया जगद्विश्रम्भकारिणी§ ।
विश्वोत्पत्तिनिदानत्वात्प्रकृतिः प्रोच्यते बुधैः ॥ २८ ।
आदिसर्गे महाविष्णुर्लोकान् कर्त्तुं समुद्यतः ।
प्रकृतिः पुरुषश्चेति कालश्चेति त्रिधाऽभवत् ॥ २९ ।
पश्यन्ति भावितात्मानः परं ब्रह्माभिसंज्ञितम् ।
शुद्धं तत्परमं धाम¶ तद्विष्णोः परमं पदम् ॥ ३० ।
परं ब्रह्माभिधानन्तु यस्मिन्निर्गुणवस्तुनि ।
प्रोच्यते ह्युपचारेण स विष्णुर्ज्ञानगोचरः ॥ ३१ ।

---

* योऽसौ त्रिजगतः कर्त्ता इति (ग) ।

† तस्मान्नान्यः परो मुने इति (क) । (ख) पुस्तके नान्य इत्यत्र नाद्य इति पठितम् ।

‡ सर्व्वव्यापी इति (ख) । तत्र भिन्नोऽभिन्नस्वरूपेणेति च पाठो वर्त्तते ।

§ जगद्विश्रामकारिणी इति (ख) (ग) ।

¶ स्थानं इति (क) ।

असृजत्तै*रिदं व्याप्तं सदेवासुरमानुषम् ॥ ३९ ॥
भूर्भुवश्च† स्वश्चैव महश्चैव जनस्तथा ।
तपश्च सत्यमित्येवं लोकाः सप्तोपरिस्थिताः ॥ ४० ।
अतलं वितलञ्चैव सुतलञ्च तलातलम् ।
महातलञ्च विप्रेन्द्र ततोऽधश्च रसातलम् ॥ ४१ ।
पातालञ्चेति सप्तेति पातालानि क्रमादधः ।
एषु सर्व्वेषु लोकेषु लोकनाथांश्च सृष्टवान् ॥ ४२ ।
कुलाचलान्नदीश्चासौ तत्र लोकनिवासिनाम्‡ ।
वर्त्तनादीनि योग्यानि§ यथायोग्यमकारयत् ॥ ४३ ।
भूतले मध्यमे¶ मेरुः सर्व्वदेवसमाश्रयः ।
लोकालोकश्च भूम्यन्ते तन्मध्ये सप्त सागराः ॥ ४४ ।
द्वीपाश्च सप्त विप्रेन्द्रा द्वीपे द्वीपे कुलाचलाः ।
नद्यश्च बह्वस्तत्र जनाश्चामरसन्निभाः ॥ ४५ ।
जम्बुप्लक्षाभिधानौ च शाल्मलश्च कुशस्तथा ।
क्रौञ्चः शाकः पुष्करश्च ते सर्व्वे देवभूमयः ॥ ४६ ।

---

* ततस्तु तैः इति (ख) ।

† भूर्भुवश्च महश्चैव स्वश्चैव जननस्तथा इति (ख) ।

‡ लोकनिवासिनः इति (घ) ।

§ सर्व्वाणि इति (ख) (ग) (घ) ।

¶ मध्यतः इति (ख) ।

एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः ।
लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः* सह ॥ ४७ ।
एते द्वीपाः समुद्राश्च पूर्व्वस्मादै परस्पराः† ।
ज्ञेया द्विगुणविस्तारा आलोकालोकपर्व्वतात् ॥ ४८ ।
क्षीरोदधेरुत्तरं यद्धिमाद्रेश्चैव दक्षिणम् ।
ज्ञेयं तद्भारतं वर्षं सर्व्वकर्म्मफलप्रदम्‡ ॥ ४९ ।
अत्र कर्म्माणि कुर्व्वन्ति त्रिविधान्यजनन्दन ।
तत्फलं भुज्यते ब्रह्मन् भोगभूमिष्वनुक्रमात् ॥ ५० ।
भारते तु कृतं कर्म्म शुभं वाऽशुभमेव वा ।
आफलक्षयणं कर्म्म भुज्यतेऽन्यत्र जन्तुभिः§ ॥ ५१ ।
अद्यापि देवा इच्छन्ति¶ जन्म भारतभूतले ।
सञ्चितं सुमहत्पुण्यमक्षय्यममलं शुभम् ॥ ५२ ।
कदा वयं हि लप्स्यामो जन्म भारतभूतले ।
कदा पुण्येन महता प्राप्स्यामः परमं पदम् ॥ ५३ ।
दानैर्व्वा विविधैर्यज्ञैस्तपोभिर्व्वाऽब्धिशायिनम् ।
पूजयित्वा कदा यामो यद्दै पश्यन्ति सूरयः ॥ ५४ ।

---

* क्षी नलैः समम् इति (ग) ।

† प इति (ख) (ग) ।

‡ कालफलप्रदमिति (ख), कामफलप्रदमिति (ग) ।

§ आफलक्षयणं विप्र इति (ग) ।

¶ वाञ्छन्ति इति (ख) ।

भक्त्या वा कर्म्मभिर्व्वाऽपि ज्ञानेनाऽप्यथवा हरिम् ।
जगदीशं कदा यामो नित्यानन्दमयं विभुम्* ॥ ५५ ।
यो भारतभुवं प्राप्य विष्णुपूजापरो भवेत् ।
न तस्य सदृशश्चास्ति† यथा वै रवितेजसः ॥ ५६ ।
हरिकीर्त्तनशीलो वा तद्भक्तानां प्रियोऽपि वा ।
शुश्रूषुर्व्वाऽपि महतां स वन्द्योऽस्माभिरुत्तमः ॥ ५७ ।
हरिपूजारतो वाऽपि हरिपूजायुतोऽपि वा ।
हरिध्यानपरो वाऽपि स वन्द्योऽस्माभिरुत्तमः ॥ ५८ ।
नारायणेति कृष्णेति वासुदेवेति वा ब्रुवन् ।
अहिंसादिपरः शान्तः स वन्द्योऽस्माभिरुत्तमः ॥ ५९ ।
शिवेति नीलकण्ठेति शङ्करेति च यो ब्रुवन् ।
सर्व्वभूतहितो नित्यं स वन्द्योऽस्माभिरुत्तमः ॥ ६० ।‡
गुरुभक्तः शिवध्यानी आश्रमाचारतत्परः ।
अनसूयः सदा शान्तः§ स वन्द्योऽस्माभिरुत्तमः ॥ ६१ ।
ब्राह्मणानां हितकरः सद्भावात्सर्व्वकर्म्मसु ।
वेदवादरतो नित्यं स वन्द्योऽस्माभिरुत्तमः ॥ ६२ ।

---

* प्रभुम् इति (ख) (ग) ।

† सदृशः कोऽपि इति (ख), सदृशश्चास्ति इति (ग) ।

‡ (ग) पुस्तके हरिपूजारत इत्यादि श्लोकत्रयं नास्ति ।

§ सदा कान्तः इति (क) ।

अभेददर्शी देवेशे नारायणशिवात्मके।
स वन्द्यो ब्राह्मणो नित्यमस्माभिः किमु सत्तमः॥ ६३।
गोषु क्षान्तो* ब्रह्मचारी परनिन्दाविवर्ज्जितः।
अपरिग्रहशीलश्च स वन्द्योऽस्माभिरुत्तमः॥ ६४।
स्तेयादिदोषरहितः† कृतज्ञः सत्यवाक् शुचिः।
परोपकारनिरतः स वन्द्योऽस्माभिरुत्तमः॥ ६५।
तड़ागोद्यानकान्तारनिरतो यो निरन्तरम्।‡
वेदार्थग्रहणे बुद्धिः पुराणश्रवणे तथा।
सत्सङ्गेऽपि च यस्य स्यात्स वन्द्योऽस्माभिरुत्तमः॥ ६६।
एवमादीन्यनेकानि धर्म्माणि§ श्रद्धयान्वितः।
करोति भारते वर्षे स वन्द्योऽस्माभिरुत्तमः॥ ६७।
एतेष्वन्यतमेनापि नात्मानं भावयेन्नरः।¶
स एव दुष्कृतिर्मूढ़ः कोऽन्यस्तस्माद्‌चेतनः॥ ६८।
संप्राप्य भारते जन्म सुकर्मसु पराङ्मुखः।

---

* गोष्ठक्रान्तः इति (ग)।

† ईर्ष्यादिदोषविमुखः इति (ख)।

‡ तड़ागोद्यानकासारनिरतो यो नरोत्तमः इति (घ), एष श्लोकः (ग)पुस्तके नास्ति।

§ धर्म्मशब्दस्य पुंसि प्रयोग एव सार्व्वत्रिकः।

¶ एतैर्युक्तोऽन्यतमेनात्मानं भावयेन्नरः इति (क), एतैर्युतोऽन्यतमेनापि नात्मानं भावयेन्नरः इति (ख), उभयत्र छन्दोभङ्गः।

पीयूषकलसं त्यक्त्वा विषभाण्डं* स मार्गति ॥ ६९ ।
श्रुतिनोदितधर्म्मेष नात्मानं भावयेन्नरः ।
स एवमात्मघाती स्यात्पातकिनामनुत्तमः ॥ ७० ।†
कर्म्मभूमिं समासाद्य न धर्म्मं कुरुते नरः‡ ।
स एव सर्व्वथा दुःखी कोऽन्यस्तस्मादचेतनः ॥ ७१ ।
स्वकर्म्मफलदे स्थित्वा दुष्कर्म्माणि करोति यः§ ।
कामधेनुमतिक्रम्य ह्यर्कक्षीरं स मार्गति¶ ॥ ७२ ।
एवं भारतभूभागं प्रशंसन्ति दिवौकसः‖ ।
सनत्कुमारब्रह्माद्याः स्वभोगक्षयभीरवः ॥ ७३ ।
तस्मात्पुण्यतमो ज्ञेयः सर्व्वकर्म्मफलप्रदः ।
भारताख्यो महाभाग देवानामपि दुर्लभः ॥ ७४ ।
अस्मिन् वै पुण्यभूभागे** यस्तु सत्कर्म्मसूद्यतः†† ।
न तस्य सदृशः कश्चित्त्रिषु लोकेषु विद्यते ॥ ७५ ।

---

विषकुम्भं इति (ख) । मार्गतीति आर्षं, मृग्यतीति साधु ।

† स्मृतिचोदितधर्म्मैस्तु नात्मानं तारयेन्नरः। स एव सर्व्वदादृष्यः कोऽन्यस्तस्मादचेतनः ॥ इति (ख) ।

‡ एषोऽर्द्धश्लोकः (ख) पुस्तके नास्ति ।

§ (ख) पुस्तके, सुकर्म्मकर्म्मे स्थित्वा दुःक्षतानि करोति य.’ एष अशुद्धः पाठोऽस्ति ।

¶ मृग्यतीति साधु ।

‖ मनीषिणः इति (ख) ।

** तस्मिन् भारतभूभागे इति (घ) ।

†† यः सुकर्म्म समाचरेत् इति (ख) ।

अस्मिञ्जातो नरो यस्तु स्वकर्म्मचयणोद्यतः* ।।
नररूपपरिच्छिन्नो हरिरेव न संशयः ॥ ७६ ।
परलोकफलं प्रेप्सुः कुर्य्यात्कर्म्माण्यतन्द्रितः ।
हरेर्निवेदयेत्तानि तत्फलं त्वक्षयं भवेत् ॥ ७७ ।
विरागी चेत्† कर्म्मफलेष्वपि किञ्चिन्न कारयेत् ।
अर्पयेत्स्वकृतं‡ कर्म्म प्रीयतामिति मे हरिः ॥ ७८ ।
आब्रह्मभुवनाल्लोकाः पुनरुत्पत्तिदायकाः§ ।
तत्रागम्भुः परं धाम निष्कामं¶ प्राप्यते पुनः ॥ ७९ ।
वेदोदितानि कर्म्माणि कुर्य्यादीश्वरतुष्टये ।
यथाश्रमं त्यक्तकामः प्राप्नोति परमं पदम् ॥ ८० ।
निष्कामी वा सकामी वा‖ कुर्य्यात्कर्म्म यथाविधि ।
आश्रमाचारहीनस्तु पतितः प्रोच्यते बुधैः ॥ ८१ ।
सदाचारपरो विप्रो वर्द्धते ब्रह्मतेजसा ।
तस्य विष्णुश्च तुष्टः स्यात्स इहामुत्र पुण्यभाक् ॥ ८२ ।
वासुदेवपरो धर्म्मो वासुदेवपरन्तपः ।
वासुदेवपरं ज्ञानं तस्मादन्यन्न विद्यते ॥ ८३ ।

---

* स्वकर्म्मचयणोद्यमः इति (घ), सुकर्म्माद्यफलोद्गकः इति (ख) ।

† न रागी चेत् इति (घ) ।

‡ सततं इति (ख) ।

§ पुनरावृत्तिदायकाः इति (ख) ।

¶ निष्कामी इति (ग) ।

‖ निष्कामी वा सकामी वा इति (ख) ।

वासुदेवात्मकं सर्व्वं जगत्स्थावरजङ्गमम् ।
आब्रह्मस्तम्बपर्य्यन्तं तस्मादन्यन्न विद्यते ॥ ८४ ।

स एव धाता त्रिपुरान्तकश्च
स एव देवासुरयज्ञसिद्धाः ।
स एव ब्रह्माण्डमिदं ततोऽन्य-
न्न किञ्चिदस्ति व्यतिरिक्तरूपम् ॥ ८५ ।
यस्मात्परं नापरमस्ति किञ्चिद्-
यस्मादणीयांश्च तथा महीयान् ।
व्याप्तं हि तेनेदमिदं विचित्रं
तं देवमीशं प्रणमेत्सुखार्थी ॥ ८६ ।

इति श्रीवृहन्नारदीये पुराणे तृतीयोऽध्यायः ।

## अथ चतुर्थोऽध्यायः ।

नारद उवाच ।

श्रद्धापूर्व्वाः सर्व्वधर्म्मा मनोरथफलप्रदाः ।
श्रद्धया साध्यते सर्व्वं श्रद्धया तुष्यते हरिः ॥ १ ।
भक्तिर्भक्त्यैव कर्त्तव्या तथा कर्म्माणि भक्तितः ।
कर्म्माणि श्रद्धाहीनानि न सिध्यन्ति* द्विजोत्तमाः ॥ २ ।
यथाऽऽलोको हि जन्तूनां चेष्टाकारणतां गतः ।†
तथैव सर्व्वसिद्धीनां भक्तिः परमकारणम् ॥ ३ ।
यथा समस्तलोकानां जीवनं सलिलं स्मृतम् ।
तथा समस्तसिद्धीनां‡ जीवनं भक्तिरिष्यते ॥ ४ ।
यथा भूमिं समाश्रित्य§ सर्व्वे जीवन्ति जन्तवः ।
तथा भक्तिं समाश्रित्य सर्व्वकार्य्याणि साधयेत् ॥ ५ ।
श्रद्धावाँल्लभते धर्म्मान्श्रद्धावानर्थमाप्नुयात् ।
श्रद्धया साध्यते कामः श्रद्धावान्मोक्षमाप्नुयात्¶ ॥ ६ ।

---

* कर्म्माणि श्रद्धया हीनान्यसिध्यन्तीति (क) (ग) पुस्तकयोः पाठः । स चाशुद्ध एव ।

† (ख) पुस्तके कारणतामित्यत्र धारणतामिति पाठो वर्त्तते, तत्र चोत्तरार्द्धं नास्ति ।

‡ (ख) पुस्तके पूर्व्वार्द्धे यथा जलौकसां नित्यमिति पाठो वर्त्तते, सिद्धाना इति(घ)।

§ समाश्लिष्य इति (ख) ।

¶ श्रद्धया मोक्षमाप्नुयादिति (ख) (ग) ।

न दानैर्न तपोभिर्वा यज्ञैर्वा बहुदक्षिणैः।
भक्तिहीनैर्मुनिश्रेष्ठ तुष्यते भगवान् हरिः॥ ७।
मेरुमात्रसुवर्णानां कोटिः कोटिसहस्रशः।
दत्ता चाप्यर्थनाशाय यतो भक्तिर्विवर्ज्जिता॥ ८।
अभक्त्या यत्तपस्तप्तं केवलं कायशोषणम्।
अभक्त्या यद्धुतं हव्यं भस्मनि न्यस्तहव्यवत्॥ ९।
यत्किञ्चित्कुरुते कर्म्म श्रद्धयाऽप्यणुमात्रकम्*।
तन्नाम जायते पुंसां शाश्वतप्रीतिदायकम्॥ १०।
अश्वमेधसहस्रं वा कर्म्म वेदोदितं कृतम्।
तत्सर्व्वं निष्फलं ब्रह्मन् यतो भक्तिविवर्ज्जितम्॥ ११।
हरिभक्तिः परा नृणां कामधेनूपमा स्मृता†।
तस्यां सत्यां पिबन्त्यज्ञाः संसारगरलं ह्यहो॥ १२।
असारभूते संसारे सारमेतदजात्मज।
भगवद्भक्तसङ्गश्च हरिभक्तिस्तितिक्षुता॥ १३।
असूयोपेतमनसां भक्तिदानादि कर्म्म यत्।
अवेहि निष्फलं ब्रह्मंस्तेषां दूरतरो हरिः॥ १४।
परश्रिया‡भितप्तानां दम्भाचाररतात्मनाम्।
मृषा तु कुर्व्वतां कर्म्म तेषां दूरतरो हरिः॥ १५।

---

* अल्पमात्रकमिति (ग)।

† कामधेनुः परा स्मृतेति (ग)।

‡ परस्त्रिया इति (क)। परश्रियेत्यादिश्लोकः (ख) पुस्तके नास्ति।

पृच्छताञ्च महाधर्म्मान् वदतां वै मृषा च तान्।
धर्म्मेष्वभक्तिमनसां तेषां दूरतरो हरिः॥ १६ ।
वेदप्रणिहितो धर्म्मो वेदो नारायणः परः।
तत्राश्रद्धापरा ये तु तेषां दूरतरो हरिः॥ १७ ।*
यस्य धर्म्मविहीनानि दिनान्यायान्ति यान्ति च।
स लौहकारभस्त्रेव श्वसन्नपि न जीवति॥ १८ ।
धर्म्मार्थकाममोक्षाख्याः पुरुषार्थाः सनातनाः।
श्रद्धावतां हि सिध्यन्ति नान्यथा ब्रह्मनन्दन॥ १९ ।
स्वाचारमनतिक्रम्य हरिभक्तिपरो हि यः।
स याति विष्णुभवनं यद्वै पश्यन्ति सूरयः॥ २० ।
कुर्व्वन्वेदोदितान्धर्म्मान्मुनीन्द्र स्वाश्रमोचितान्।
हरिध्यान†परो यस्तु स याति परमं पदम्॥ २१ ।
आचारप्रभवो धर्म्मः‡ धर्म्मस्य प्रभुरच्युतः।
आश्रमाचारयुक्तेन पूजितः सर्व्वदा हरिः॥ २२ ।
यः स्वाचारपरिभ्रष्टः§ साङ्गवेदान्तगोऽपि वा।
स एव पतितो ज्ञेयो यतः कर्म्मवहिष्कृतः॥ २३ ।

---

* (घ) पुस्तके एतौ श्लोकौ 'परश्रिया' इत्येतस्य पुरस्तात् स्तः, तत्रापि च प्रथम `इत्यादिश्लोक.। (ख) पुस्तके पृच्छताञ्चेत्यादि श्लोकद्वयं नास्ति।

† भक्ति इति (घ)।

‡ धर्म्मा इति (ख)।

§ यथाचारपरिभ्रष्टः इति (घ)।

हरिभक्तिपरो वाऽपि हरिध्यानपरोऽपि वा ।
भ्रष्टो यः स्वाश्रमाचारात्पतितः सोऽभिधीयते ॥ २४ ।
वेदो वा हरिभक्तिर्वा भक्तिर्वापि महेश्वरे ।
आचारात्पतितं मूढं न पुनाति द्विजोत्तम ॥ २५ ।
पुण्यक्षेत्राभिगमनं पुण्यतीर्थनिषेवनम् ।
यज्ञो वा विविधो ब्रह्मन्स्यक्ताचारं न रक्षति* ॥ २६ ।
आचारात्प्राप्यते स्वर्ग†माचारात्प्राप्यते सुखम् ।
आचारात्प्राप्यते मोक्ष‡माचारात्किं न लभ्यते§ ॥ २७ ।
आचाराणान्तु सर्व्वेषां योगानाञ्चैव सत्तम ।
हरिभक्तेरपि तथा निदानं भक्तिरिष्यते ॥ २८ ।
भक्त्यैव पूज्यते विष्णुर्वाञ्छितार्थफलप्रदः ।
तस्मात्समस्तलोकानां भक्तिर्मातेति गीयते ॥ २९ ।
जीवन्ति जन्तवः सर्व्वे यथा मातरमाश्रिताः ।
तथा भक्तिं समाश्रित्य सर्व्वे जीवन्ति धार्म्मिकाः ॥ ३० ।
स्वाश्रमाचारयुक्तस्य हरिभक्तिर्यदा भवेत् ।
न तस्य त्रिषु लोकेषु सदृशोऽस्त्यजनन्दन ॥ ३१ ।
भक्त्या सिध्यन्ति कर्म्माणि कर्म्मभिस्तुष्यते¶ हरिः ।

---

* पतितं नाभिरक्षतीति (ख) ।
† स्वर्गमित्यार्षं तस्य पुंलिङ्गत्वात् ।
‡ मोक्षमित्यार्षं तस्य पुंलिङ्गत्वात् ।
§ आचारात्किं न साध्यते इति (ख) (ग) ।
¶ तुष्यते इत्यत्र आत्मनेपदमार्षम् ।

तस्मिंस्तुष्टे भवेज्ज्ञानं ज्ञानान्मोक्षमवाप्यते ॥ ३२ ।
भुक्तिस्तु भगवद्भक्तसङ्गेन परिजायते ।
तत्सङ्गं* प्राप्यते पुंभिः सुकृतैः पूर्व्वसञ्चितैः ॥ ३३ ।
वर्णाश्रमाचाररता भगवद्भक्तमानसाः ।
कामादिदोषनिर्मुक्तास्ते सन्तो लोकशिक्षकाः ॥ ३४ ।
सत्सङ्गः परमो ब्रह्मन्न लभ्येताकृतात्मनाम्† ।
यदि लभ्येत विज्ञेयं पुण्यं जन्मान्तरार्ज्जितम् ॥ ३५ ।
पूर्व्वार्ज्जितानि पापानि नाशमायान्ति यस्य वै‡ ।
सत्सङ्गतिर्भवेत्तस्य नान्यथा घटते हि सा ॥ ३६ ।
रविर्हि रश्मिजालेन दिवा हन्ति वहिस्तमः ।
सन्तः सूक्तिमरीच्योघैरान्तर्ध्वान्तं हि सर्व्वदा ॥ ३७ ।
दुर्लभाः पुरुषा लोके भगवद्भक्तिमानसाः§ ।
तेषां सङ्गो भवेद्यस्य तस्य शान्तिर्हि शाश्वती ॥ ३८ ॥

सनत्कुमार उवाच ।

किंलक्षणा भागवतास्ते च किं कर्म्म कुर्व्वते ।
तेषां लोको भवेत्कीदृक् तत्सर्व्वं ब्रूहि तत्त्वतः ॥ ३९ ।

---

* सङ्गमित्यत्र क्लीवलिङ्गत्वमार्षम् ।

† (ख) पुस्तके सत्सङ्गः परमो ब्रह्मल्लभ्यते च कृतात्मनामिति पाठो वर्त्तते, स च पाठो न पराङ्गेन सङ्गच्छते ।

‡ तस्य वै इति (क) ।

§ भगवद्भक्तमानसा इति (ग) ।

त्वं हि भक्तो महेशस्य देवदेवस्य चक्रिणः ।
एवं निगदितुं शक्तस्त्वत्तो नास्त्यधिकोऽपरः* ॥ ४० ।
नारद उवाच ।
शृणु ब्रह्मन्परं गुह्यं मार्कण्डेयस्य धीमतः ।
यदुवाच जगन्नाथो योगनिद्राविमोचितः ॥ ४१ ।
योऽसौ विष्णुः परं ज्योतिर्देवदेवः सनातनः† ।
जगद्रूपी जगत्कर्त्ता शिवब्रह्मस्वरूपवान् ॥ ४२ ।
युगान्ते रौद्ररूपेण ब्रह्माण्डग्रासवृंहितः‡ ।
जगत्येकार्णवीभूते नष्टे स्थावरजङ्गमे ।
भगवानेव शेषात्मा शेते वटदले§ हरिः ।
असंख्याताब्जजन्माद्यैः¶ आभूषिततनूरुहः ॥ ४३ । ४४ ।
पादाङ्गुष्ठाग्रनिर्यातगङ्गाशेषाम्बुपावनः‖ ।
सूक्ष्मात्सूक्ष्मतरो देवो ब्रह्माण्डग्रासवृंहितः** ॥ ४५ ।

---

* नास्त्यपरोऽधिकः इति (घ) । त्वत्तोनास्ति परोऽधिक इति (ग) ।

† देवदेवो जनार्द्दनः इति (ग) ।

‡ ब्रह्माण्डग्राससंहितः इति (घ) ।

§ वटतले इति (घ) । भगवानपि शेषाख्यः शेते चिन्ताकुलो हरिः इति (ग) । भगवानप्रमेयात्मा इति (ख) ।

¶ असंख्यातैश्च ब्रह्माण्डै. इति (ख) ।

‖ पादाग्राङ्गुष्ठनिर्याता गङ्गाऽशेषाम्बुपावनी इति (घ) । पादाग्राङ्गुष्ठनिर्यात इति (क) ।

** ब्रह्माण्डग्राससंहित इति (घ) ।

वटच्छदे शयानोऽभूत्सर्व्वशक्तिसमन्वितः ।
तस्मिन्स्थाने महाभागो* नारायणपरायणः ।
मार्कण्डेयः स्थितस्तस्य लीलाः पश्यन्महेशितुः† ॥ ४६ ॥

ऋषय ऊचुः ।

तस्मिन्काले महाघोरे नष्टे स्थावरजङ्गमे ।
हरिरेकः स्थित इति मुने पूर्व्वं हि शुश्रुम‡ ॥ ४७ ।
जगत्येकार्णवीभूते नष्टे स्थावरजङ्गमे ।
सर्व्वग्रस्तेन हरिणा किमर्थं सोऽवशेषितः ॥ ४८ ।
परं कौतूहलं ह्यत्र वर्त्ततेऽतीव सूत नः § ।
हरिकीर्त्तिसुधापाने कस्यालस्यं प्रजायते ॥ ४९ ।

सूत उवाच ।

आसीन्मुनिर्महाभागो मृकण्डुरिति विश्रुतः ।
शालग्रामे महातीर्थे¶ सोऽतप्यत महत्तपः ॥ ५० ।
युगानामयुतं ब्रह्मन्गृणन्ब्रह्म|| सनातनम् ।
निराहारः क्षमायुक्तः सत्यसन्धो जितेन्द्रियः ॥

---

* तस्मिन् काले महाभागः इति (ख) ।

† मार्कण्डेयः स्थिता सर्व्वा तस्य लीलामपश्यत इति (ख) । अपश्यत इति आर्षम् ।

‡ युगे पूर्व्वं हि शुश्रुम इति (क) (घ) ।

§ सूत मे मनः इति (घ) ।

¶ महाक्षेत्रे इति (ख) (ग) (घ) ।

|| गृणन् ब्रह्म इति (ख) ।

आत्मवत्सर्व्वभूतानि पश्यन्विषयनिस्पृहः ।
सर्व्वभूतहितो दान्तस्तताप सुमहत्तपः* ॥ ५१ । ५२ ।
तत्तपःशङ्किताः सर्व्वे देवा इन्द्रादयस्तदा ।
परेशं शरणं जग्मुर्नारायणमनामयम्† ॥ ५३ ।
क्षीराब्धेरुत्तरं तीरं संप्राप्य त्रिदिवौकसः ।
तुष्टुवुर्देवदेवेशं पद्मनाभं जगद्गुरुम् ॥ ५४ ।

देवा ऊचुः ।

नारायणाक्षरानन्त शरणागतपालक ।
मृकण्डुतपसा त्रस्तान्‡ पाहि नः शरणागतान् ॥ ५५ ।
जय देवाधिदेवेश जय शङ्खगदाधर ।
जय लोकस्वरूपाय जय ब्रह्माण्डहेतवे§ ॥ ५६ ।
नमस्ते देवदेवेश नमस्ते लोकपावन ।
नमस्ते लोकनाथाय नमस्ते लोकसाक्षिणे ॥ ५७ ।
नमस्ते ध्यानगम्याय नमस्ते ध्यानहेतवे ।
नमस्ते ध्यानरूपाय नमस्ते ध्यानसाक्षिणे ॥ ५८ ।¶

---

* तताप परमं तपः इति (ख)। तेपे इति साधु ।

† नारायणपरायणा. इति (घ)।

‡ तपसा तस्मान् इति (ख)। तपसस्तस्मान् इति (ग)।

§ जय लोकस्वरूपायेत्यादौ चतुर्थी न समीचीना, सम्बुद्धेरेवौचित्यम्, (ख) पुस्तके जय लोकस्वरूपाय जय ब्रह्माण्डकारण इति पाठो वर्त्तते। जय लोकस्वरूपेश जय ब्रह्माण्डकारण एवं कृते न कश्चिद्दोषः।

¶ एष श्लोकः (ख) पुस्तके नास्ति।

केशिहन्त्रे नमस्तुभ्यं मधुहन्त्रे परात्मने ।
नमो भूम्यादिरूपाय नमश्चैतन्यरूपिणे ॥ ५९ ।
नमो ज्येष्ठाय शुद्धाय निर्गुणाय गुणात्मने ।
अरूपाय स्वरूपाय बहुरूपाय ते नमः ॥ ६० ।
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ ६१ ।
नमो हिरण्यगर्भाय नमो ब्रह्मादिरूपिणे ।
नमः सूर्य्यादिरूपाय हव्यकव्यभुजे नमः ॥ ६२ ॥
नमो नित्याय* वन्द्याय सदानन्दैकरूपिणे ।
नमः स्मृतार्त्तिनाशाय भूयो भूयो नमो नमः ॥ ६३ ।
एवं देवस्तुतीः† श्रुत्वा भगवान्कमलापतिः ।
प्रत्यक्षतामगात्तेषां शङ्खचक्रगदाधरः ॥ ६४ ।
विकचाम्बुजपत्राक्षं सूर्य्यकोटिसमप्रभम् ।
सर्व्वालङ्कारसंयुक्तं श्रीवत्साङ्कितवक्षसम् ॥ ६५ ।
पीताम्बरधरं सौम्यं स्वर्णयज्ञोपवीतिनम्‡ ।
हेमाम्बुजसपत्नाङ्घ्रिं स्तूयमानं मुनीश्वरैः ।
दृष्ट्वाग्रतो देवबृन्दो§ ववन्दे चरणौ हरेः ॥ ६६ ।

---

* नित्यायेत्यत्र (ख) पुस्तके पूज्याय, (ग) पुस्तके पूर्णाय, इति पठितम् ।

† (ख) (ग) पुस्तकयोः स्तुतिमिति पठितम् ।

‡ हेमयज्ञोपवीतिनमिति (ख), तत्र परार्द्धे सुहेमाम्बुजपत्राक्षमिति च पाठो वर्त्तते।

§ बृन्दशब्दस्य नपुंसकत्वात् देवबृन्दमिति साधु ।

मेघगम्भीरनिनदपरिभूताब्धिनिस्वनः ।
उवाच भावगम्भीरं दयोदन्वान्सुरेश्वरान्* ॥ ६७ ।

श्रीभगवानुवाच ।

जाने वो मानसं दुःखं मृकण्डुतपसोद्भवम् ।
युष्मान्न बाधते नूनं मृकण्डुः सज्जनो यतः ॥ ६८ ।
सम्पद्भिः संयुता वापि विपद्भिर्व्वापि सज्जनाः ।
सर्व्वथान्यं न बाधन्ते स्वतपःक्षयितैनसः† ॥ ६९ ।
सततं बाध्यमानो यो विषयाख्यैरेरातिभिः ।
अविधायात्मनो रक्षामन्यान्द्वेष्टि हि मूढ़धीः‡ ॥ ७० ।
तापत्रयाभिधानेन बाध्यमानोऽरिणा नरः ।
अन्यन्तु पीड़ितुं शक्तः कथम्भवति सत्तम: ॥ ७१ ।
कर्म्मणा मनसा वाचा बाधयेद्यः सदापरान्§ ।
स शङ्कते ह्यात्मनोऽपि वधं स्वेनापि निर्ज्जितैः¶ ॥ ७२ ।
लोभाभिभूतमनसामत्यल्पधनसम्पदाम् ।
साध्वसं नियतं तेषां महामायाविमोहिनाम् ॥ ७३ ।

---

* दयोदन्वांस्तु तान् सुरान् इति (क) ।

† सर्व्वथान्यान्न बाधन्ते स्वप्नेऽपि क्षयितैनसः इति (ख); (क) (ग) पुस्तकयोः एष एव पाठ, केवलमन्यानित्यत्र अन्यमित्यस्ति ।

‡ अन्यं द्वेष्टीह मूढधीः इति (ख) ।

§ सदा नरान इति (क), (ख), (घ) ।

¶ बाध्यमानोऽपि निर्ज्जितैः इति (क), बाधां स्वेनैव निर्ज्जितैः इति (ख) ।

सशङ्कः सर्व्वदा दुःखी निःशङ्कः सर्व्वदा सुखी ।
सर्व्वभूतहितो दान्तो निःशङ्कः सर्व्वदैव हि ॥ ७४ ।
यो लोकहितकृन्मर्त्यो गतासूयो विमत्सरः ।
निःशङ्कः प्रोच्यते सद्भिरिहामुत्र च सत्तमाः* ॥ ७५ ।
गच्छध्वममराः सर्व्वे युष्मान्नो बाधते मुनिः ।
करोम्यहं सदा रक्षां विरमध्वं† यथासुखम् ॥ ७६ ।
इति दत्त्वा वरं तेषामतसीकुसुमप्रभः ।
पश्यतामेव देवानां पुरतोऽन्तर्दधे हरिः ॥ ७७ ।
तुष्टात्मानः सुरगणा ययुर्नाकं यथागताः ।
मृकण्डोरपि तुष्टात्मा हरिः प्रत्यक्षतामगात् ॥ ७८ ।
स्वरूपं परमं ब्रह्म स्वप्रकाशं निरञ्जनम् ।
मृकण्डुर्दृष्टवान् पूर्व्वं परमेण समाधिना ॥ ७९ ।
अतसीपुष्पसङ्काशं पीतवासःसमन्वितम् ।
दिव्याम्बरधरं‡ दृष्ट्वा मृकण्डुर्विस्मितोऽभवत् ॥ ८० ।
पश्चादुन्मील्य नयने अपश्यद्धरिमागतम् ।
प्रसन्नवदनं शान्तं सर्व्वधातारमच्युतम् ॥ ८१ ।
रोमाञ्चविग्रहो विप्रः सानन्दाश्रुविलोचनः ।
ननाम दण्डवद्भूमौ देवदेवस्य चक्रिणः ॥ ८२ ।

---

* इहामुत्र च मोदते इति (ख)।

† विरमध्वमिति आर्षं, विरमत इति साधु।

‡ पीताम्बरधरमिति (क), (घ)।

क्षालयंश्चरणौ तस्य मृकण्डुर्हर्षवारिभिः* ।
शिरस्यञ्जलिमाधाय स्तोतुं समुपचक्रमे ॥ ८३ ।

मृकण्डुरुवाच ।

नमः परेशाय परस्वरूपिणे
परात्परस्तात्परमात्पराय ।
अपारपाराय परात्मकर्त्रे†
नमः परेभ्यः परपावनाय‡ ॥ ८४ ।
यो नाम§ जात्यादिविकल्पहीनः
शब्दादिदोषव्यतिरेकरूपः ।
बहुस्वरूपोऽपि¶ निरञ्जनश्च
तमीशमाद्यं परमं भजामि‖ ॥ ८५ ।
वेदान्तवेद्यं पुरुषं पुराणं
हिरण्यगर्भादिजगत्स्वरूपम् ।
स्वरूपसंभुक्तकलत्रसङ्गं
भजामि सर्व्वेश्वरमीशमाद्यम्** ॥ ८६ ।

---

* हर्षविन्दुभिः इति (ख) । हर्षिताश्रुभिः इति (ग) ।

† परार्थकर्त्रे इति (क), (घ) ।

‡ परपारणाय इति (ख), (ग) ।

§ यो जन्मजात्यादि इति (ख) ।

¶ वर्णस्वरूपोऽपि इति (क) ।

‖ तमीशमीड्यं परमं व्रजामि इति (ख) ।

** सर्व्वेश्वरमीशमीड्यं इति (ख), (ग) ।

पश्यन्ति यं वीतसमस्तदोषा*
ध्यानैकनिष्ठा विगतस्पृहाश्च ।
निवृत्ततर्षाः परमं पवित्रं
नतोऽस्मि संसारविनाशहेतुम् ॥ ८७ ।
स्मृतार्त्तिनाशनं† विष्णुं शरणागतपालकम् ।
सर्व्वसेव्यं जगद्धाम परेशं करुणामयम्‡ ॥ ८८ ।
नमोऽस्त्वनन्ताय सहस्रमूर्त्तये
सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते
सहस्रकोटीयुगधारिणे नमः ॥ ८९ ।
श्रुत्वा स्तुतिं महाविष्णुरिति तस्य महात्मनः ।
अवाप परमां तुष्टिं शङ्खचक्रगदाधरः ॥ ९० ।
अथालिङ्ग्य मुनिं देवश्चतुर्भिर्दीर्घबाहुभिः ।
उवाच परया§ प्रीत्या वरयेति वरं मुदा ॥ ९१ ।
देव उवाच ।
प्रीतोऽस्मि तपसा विप्र स्तोत्रेणानेन चानघ ।
मनसा यदभिप्रेतं वरं वरय सुव्रत ॥ ९२ ।

---

* वीतसमस्तदोषं इति (क), (घ) ।

† स्मृतार्त्तिनाशकं इति (ग), स्मृतार्त्तिनाशकं इति (ख) ।

‡ सेवासेव्यं । करुणाकरम् इति च (ख), (ग) ।

§ परमप्रीत्या इति (ग) ।

मृकण्डुरुवाच ।

देव देव जगन्नाथ कृतार्थोऽस्मि न संशयः ।
त्वद्दर्शनमपुण्यानां यतोऽपूर्व्वतरं स्मृतम् ॥ ९३ ।
ब्रह्माद्या यं न पश्यन्ति यं न पश्यति च श्रुतिः ।
तत्पश्येयम्परं ब्रह्म किमस्मादधिकं परम्* ॥ ९४ ।
यन्न पश्यन्ति सद्भक्तास्तथैव समदर्शिनः ।
तत्पश्येयं परं वस्तु वक्ष्यामि किमतः परम्* ॥ ९५ ।
सूरयो यन्न पश्यन्ति यन्न पश्यन्ति योगिनः ।
तत्पश्येयं परं धाम किमस्मादधिकं परम्* ॥ ९६ ।
परोपकारनिरता यन्न पश्यन्त्यनिष्ठुराः ।
तत्पश्येयं परं धाम किमस्मादधिकं परम्* ॥ ९७ ।
एतेनैव कृतार्थोऽस्मि जनार्द्दन जगद्गुरो ।
त्वद्दर्शनमपुण्यानां स्वप्नेऽपि हि न लभ्यते ॥ ९८ ।

---

* किमस्मादधिकं वरं इति (ख), (ग) ।
यन्न पश्यन्ति कर्म्मिष्ठा यन्न पश्यन्ति दीक्षिताः ।
तं पश्येयमनाद्यन्तं किमस्मदधिकं परम् ॥ इति (घ) ।
(ग) पुस्तके परमित्यस्य स्थाने वरमिति पाठः । तत्र (ग पुस्तके)
वशिनो यन्न पश्यन्ति वीतरागा विमत्सराः ।
चिद्रूपं परमं वस्तु पश्येयं किमतः परम् ॥
इत्यधिकः श्लोको वर्त्तते । (ख) पुस्तके च एष श्लोकोऽस्ति ।

त्वन्नाम*स्मृतिमात्रेण महापातकिनोऽपि ये।
यत्पदं परमं यन्ति दुष्टानां किमुताच्युत ॥ ९९ ।

श्रीभगवानुवाच।

सत्यमुक्तं त्वया ब्रह्मन्प्रीतोऽस्म्यद्यापि† पण्डित।
मद्दर्शनं हि विफलं न कदाचिद्भविष्यति ॥ १०० ।
विष्णुभक्तः कुटुम्बीति वदन्ति विबुधाः सदा‡।
तदेव§ पालयिष्यामि सज्जनो नानृतं वदेत् ॥ १०१ ।
तस्माद्वृणुष्व¶ विप्रेन्द्र यास्यामि तव पुत्रताम्।
समस्तगुणसंयुक्तो दीर्घजीवी सुरूपवान्‖ ॥ १०२ ।
मम जन्म कुले यस्य तत्कुलं मोक्षगामि वै।
मयि तुष्टे मुनिश्रेष्ठ किमसाध्यं वदस्व ते** ॥ १०३ ।
मयि भक्तिपरो यस्तु मद्याजी मत्परायणः††।
मद्ध्यानी स्वकुलं‡‡ सर्वं नयत्यच्युतरूपताम् ॥ १०४ ।

---

* यन्नाम इति (क), (ख), (ग)।
† प्रीणितोऽस्म्यपि इति (घ)।
‡ वदन्ति परमर्षयः इति (ख)।
§ तत्पदं इति (क)।
¶ तस्माच्छृणुष्व इति (क), (घ)।
‖ स्वरूपवान् इति (क), (ख), (घ)।
** वदस्व मे इति (ख)।
†† मत्कथापर इति (ग)।
‡‡ मङ्गलं इति (क)।

मदर्थं कर्म्म कुर्व्वाणो मत्प्रणामपरो नरः ।
मन्मनाः स्वकुलं* सर्व्वं नयत्यच्युतरूपताम् ॥ १०५ ।
तस्मात्प्रीतोऽस्मि ते विप्र स्तोत्रेण तपसा तथा† ।
आनृण्यं पुत्रभावेन गमिष्यामि न संशयः ॥ १०६ ।
इत्युक्त्वा‡ स्वकरं न्यस्य मृकण्डोर्मस्तकोपरि§ ।
स्पृष्ट्वाङ्गानि च सर्व्वाणि¶ तत्रैवान्तर्दधे हरिः ॥ १०७
मृकण्डुः परमप्रीत आत्मानं पुण्यरूपिणम् ।
मन्यमानो हरिं नत्वा स्वाश्रमं पुनराययौ ॥ १०८ ।

इति श्रीवृहन्नारदीयपुराणे चतुर्थोऽध्यायः ।



---

* मन्मनाश्च कुलं इति (क) ।

† यथा इति (क), (घ) ।

‡ (ख) पुस्तके इत्युक्त्वेत्यादिश्लोकात् पूर्व्वं 'सूत उवाच' इति पाठो वर्त्तते ।

§ मस्तके हरिः इति (क), (ग) । मस्तकेऽव्यय इति (ख) ।

¶ स्पृष्ट्वा गात्राणि सर्व्वाणि इति (ख) ।

# अथ पञ्चमोऽध्यायः ।

सूत उवाच ।

मुनिर्लब्धवरो विष्णोः परिचर्य्यापरः सदा ।
मार्कण्डेयं नाम सुतमवाप हरिसन्निभम् ॥ १ ।
मार्कण्डेयो महाभागो दयावान्धर्म्मवत्सलः* ।
आत्मवान्सत्यसन्धश्च मार्तण्डसदृशप्रभः ॥ २ ।
वशी शान्तो महाज्ञानी सर्व्वतत्त्वार्थकोविदः ।
तपश्चचार परममच्युतप्रीतिकारणम् ॥ ३ ।
आराधितो जगन्नाथो मार्कण्डेयेन धीमता ।
पुराणसंहितां कर्त्तुं दत्तवान्वरमच्युतः ॥ ४ ।
मार्कण्डेयो मुनिस्तस्मान्नारायण इति स्मृतः ।
चिरजीवी महाभक्तो देवदेवस्य चक्रिणः ॥ ५ ।
जगत्येकार्णवीभूते स्वप्रभावं जनार्द्दनः ।
तस्य दर्शयितुं विप्रास्तं न संहृतवान्हरिः† ॥ ६ ।
मृकण्डुतनयो धीमान्विष्णुभक्तिसमन्वितः ।
तस्मिञ्जले महाघोरे स्थितवाञ्शीर्णपत्रवत्‡ ॥ ७ ।

---

* भक्तवत्सल इति (ख) ।

† तन्नमस्कृतवान्मुनिः इति (ग), तत्राल कृतवान्मुनि. इति (ख) , उभयत्रापि न सङ्गतिः ।

‡ तस्मिन् काले महाघोरे स्थितवान् शीर्णपर्व्वते इति (ख) ।

मार्कण्डेयः स्थितस्तावद्यावच्छेते हरिः स्वयम् ।
तस्य प्रमाणं वक्ष्यामि कालस्य वदतः शृणु ॥ ८ ।
दशभिः पञ्चभिश्चैव निमेषैः परिकीर्त्तिता ।
काष्ठा, तत्त्रिंशता ज्ञेया कला पद्मजनन्दन ॥ ९ ।
तत्त्रिंशता क्षणो ज्ञेयस्तैः षड्भिर्घटिका स्मृता ।
तद्द्वयेन मुहूर्त्तं स्याद्दिनं तत्त्रिंशता भवेत् ॥ १० ।
त्रिंशद्दिनैर्भवेन्मासः पक्षद्वितयसंयुतः* ।
ऋतुर्मासद्वयेन स्यात्, तत्त्रयेणायनं स्मृतम् ॥ ११ ।
तद्द्वयेन भवेदब्दः, स देवानां दिनं भवेत् ।
उत्तरं दिवसं प्राह रात्रिर्वै दक्षिणायनम् ॥ १२ ।
मानुषेणैव† मासेन पितॄणां दिनमुच्यते ।
तस्मात्सूर्य्येन्दुसंयोगे ज्ञातव्यं कल्पमुत्तमम् ॥ १३ ।
दिव्यैर्वर्षसहस्रैर्द्वादशभिर्दैवतं युगम् ।
दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणाम्‡ ॥ १४ ।
एकसप्ततिसंख्यातैर्दिव्यैर्मन्वन्तरं युगैः ।
चतुर्दशभिरेतैश्च ब्रह्मणो दिवसं मुने ॥ १५ ।
यावत्प्रमाणं दिवसं तावद्रात्रिः प्रकीर्त्तिता ।
नाशमायाति विप्रेन्द्र तस्मिन्काले जगत्त्रयम् ॥ १६ ।

---

* त्रिंशद्भिर्दिवसैर्मास इति (ग), पक्षयुग्मसमन्वितः इति (ख) ।

† मानुष्येणेति (घ) ।

‡ कल्पः स्मृतो नृणामिति (ख), (ग), (घ) ।

मानुषेण सहस्रेण यत्प्रमाणं भवेच्छृणु ।
चतुर्युगसहस्राणि ब्रह्मणो दिवसं मुने ॥ १७ ।
तद्वन्मासो वत्सरश्च ज्ञेयस्तस्यापि वेधसः ।
परार्द्धद्वयकालस्तु तन्मतेन भवेद्द्विजाः ॥ १८ ।
विष्णोरहस्तु विज्ञेयं तावद्रात्रिः प्रकीर्त्तिता ।
मृकण्डुतनयस्तावत्स्थितः संजीर्णपर्णवत् ॥ १९ ।
तस्मिन्घोरे जलमये विष्णुशक्त्युपबृंहितः ।
आत्मानं परमं ध्यायन्स्थितवान्हरिसन्निधौ ॥ २० ।
अथ काले समायाते योगनिद्राविमोचितः ।
सृष्टवान्ब्रह्मरूपेण जगदेतच्चराचरम् ॥ २१ ।
संहृतन्तु जलं वीक्ष्य सृष्टं विश्वं मृकण्डुजः ।
विस्मितः* परमप्रीतो ववन्दे चरणौ हरेः ॥ २२ ।
शिरस्यञ्जलिमाधाय मार्कण्डेयो महामुनिः† ।
तुष्टाव वाग्भिरिष्टाभिः‡ सदानन्दैकविग्रहम् ॥ २३ ।

मार्कण्डेय उवाच ।

सहस्रशिरसं देवं नारायणमनामयम्§ ।
वासुदेवमनाधारं प्रणतोऽस्मि जनार्द्दनम् ॥ २४ ।

---

* विस्मृतः परमं प्रीत इति (क), (घ) ।

† महामतिः इति (ग) ।

‡ गीर्भिरिष्टाभि. इति (ख) ।

§ सहस्रशीर्षं वै देवं इति (ग), सहस्रशीर्षं त देव इति (ख) ।

परं ज्योतिः* परं धाम पवित्रं परमं पदम् ।
सर्व्वैकरूपं परमं प्रणतोऽस्मि जनार्द्दनम् ॥ २५ ॥
तं सदानन्दचिन्मात्रं पराणां परमं परम् ।
सर्व्वं† सनातनं श्रेष्ठं प्रणतोऽस्मि जनार्द्दनम् ॥ २६ ॥
सगुणं निर्गुणं शान्तं मायाऽतीतं सुमायिनम्‡ ।
अरूपं बहुरूपं तं प्रणतोऽस्मि जनार्द्दनम् ॥ २७ ॥
यत्र तद्भगवान्विश्वं सृजत्यवति हन्ति च ।
तमादिदेवमीशानं प्रणतोऽस्मि जनार्द्दनम्§ ॥ २८ ॥

---

* (क) पुस्तके परं ज्योतिरित्यादि श्लोकचतुष्टयं नास्ति। (ख) (ग) पुस्तकयोः परं ज्योतिरित्यस्मात् पूर्व्व एते श्लोका वर्त्तन्ते—

"अमेयमजरं नित्यं सदानन्दैकविग्रहम् ।
अप्रतर्क्यमनिर्द्देश्यं प्रणतोऽस्मि जनार्द्दनम् ॥
अक्षरं परमं नित्यं विश्वाद्यं विश्वसम्भवम् ।
सर्व्वतत्त्वमयं शान्तं प्रणतोऽस्मि जनार्द्दनम् ॥
पुराणं पुरुषं सिद्धं सर्व्वज्ञानैकभाजनम् ।
परात्परतरं रूपं प्रणतोऽस्मि जनार्द्दनम् ॥

तत्रापि च पाठभेदाः यथा अमेयमित्यत्र (ख) पुस्तके अजेयमिति पाठः, अक्षरमित्यत्र अन्तरमित्याद्याः ।

† (ग) पुस्तके सर्व्वमित्यत्र पूर्व्वमिति पाठः ।

‡ स्वमायिनमिति (क), (ख), (ग) ।

§ प्रणतोऽस्मि जगद्गुरुम् इति (ग) ।

परेश परमानन्द शरणागतवत्सल ।
त्राहि मां करुणासिन्धो मनोऽतीत नमोऽस्तु ते ॥ २९ ।
एवं स्तुवन्तं विप्रेन्द्रं मार्कण्डेयं जगद्गुरुम्* ।
उवाच परया प्रीत्या शङ्खचक्रगदाधरः ॥ ३० ।

श्रीभगवानुवाच ।

लोके भागवता ये च† भगवद्भक्तमानसाः ।
तेषां तुष्टो न सन्देहो रक्ष्याम्येतांश्च सर्व्वदा ॥ ३१ ।
अहमेव द्विजश्रेष्ठ नित्यं प्रच्छन्नविग्रहः ।
भगवद्भक्तरूपेण लोकान्रक्षामि सर्व्वदा ॥ ३२ ।

मार्कण्डेय उवाच ।

किंलक्षणा भागवता जायन्ते केन‡ कर्म्मणा ।
एतदिच्छाम्यहं श्रोतुं कौतूहलपरो यतः ॥ ३३ ।

श्रीभगवानुवाच ।

लक्षणं भागवतानां शृणुष्व मुनिसत्तम ।
वक्तुं तेषां प्रभावं हि शक्यते नाब्दकोटिभिः ॥ ३४ ।
ये हिताः सर्व्वजन्तूनां गतासूया अमत्सराः§ ।
वशिनो निस्पृहाः शान्तास्ते वै भागवतोत्तमाः ॥ ३५ ।

---

* जगद्गुरु. इति (ग)

† भागवताश्चैव इति (ग) ।

‡ येन कर्म्मणा इति (ख), (ग), (घ) ।

§ विमत्सरा इति (ग) ।

कर्म्मणा मनसा वाचा परपीड़ां न कुर्व्वते ।
अपरिग्रहशीलाश्च ते वै भागवताः* स्मृताः ॥ ३६ ।
सत्कथाश्रवणे येषां वर्त्तते सात्विकी मतिः† ।
तद्भक्तविष्णुभक्ताश्च‡ ते वै भागवतोत्तमाः ॥ ३७ ।
मातापित्रोश्च§ शुश्रूषां कुर्व्वन्ति ये नरोत्तमाः ।
गङ्गाविश्वेश्वरधिया ते वै भागवतोत्तमाः ॥ ३८ ।
ये तु देवार्च्चनरता ये तु तत्साधकाः स्मृताः¶ ।
पूजां दृष्ट्वानुमोदन्ते ते वै भागवतोत्तमाः ॥ ३९ ।
व्रतिनाञ्च‖ यतीनाञ्च परिचर्य्यापराश्च ये ।
वियुक्तपरनिन्दाश्च ते वै भागवतोत्तमाः ॥ ४० ।
सर्व्वेषां हितवाक्यानि ये वदन्ति नरोत्तमाः ।
ये गुणग्राहिणो लोके ते वै भागवताः स्मृताः** ॥ ४१ ।
आत्मवत्सर्व्वभूतानि ये पश्यन्ति नरोत्तमाः ।
तुल्याः शत्रुषु मित्रेषु ते वै भागवतोत्तमाः ॥ ४२ ।

---

* भागवतोत्तमा. इति (ख), (ग), (घ) ।

† सत्कथाश्रवणे तेषां इति (क), (घ) ।

‡ तद्भक्तविश्वभक्ताश्च इति (घ) ।

§ मातापित्रोरित्यादि श्लोकद्वयं (घ) पुस्तके नास्ति । कुर्व्वते ये नरोत्तमाः इति (ख), (ग) ।

¶ तत्साधका नरा इति (ख) ।

‖ वर्णिनाञ्च इति (ग) ।

** एतदर्द्धं (क) पुस्तके नास्ति ।

धर्म्मशास्त्रप्रवक्तारः सत्यवाक्यरताश्च ये ।
सतां शुश्रूषवो ये च ते वै भागवतोत्तमाः ॥ ४३ ।
व्याकुर्व्वते पुराणानि* तानि शृण्वन्ति ये तथा ।
तद्वक्तरि च भक्ता ये ते वै भागवतोत्तमाः ॥ ४४ ।
ये गोब्राह्मणशुश्रूषां कुर्व्वते सततं नराः ।
तीर्थयात्रापरा ये च ते वै भागवतोत्तमाः ॥ ४५ ।
अन्येषामुदयं दृष्ट्वा येऽभिनन्दन्ति मानवाः ।
हरिनामपरा ये च ते वै भागवतोत्तमाः ॥ ४६ ।
आरामारोपणरतास्तड़ागपरिरक्षकाः ।
कासारकूपकर्त्तारस्ते वै भागवतोत्तमाः ॥ ४७ ।
ये वै तड़ागकर्त्तारो देवसद्मानि कुर्व्वते ।
गायत्रीनिरता ये च ते वै भागवतोत्तमाः ॥ ४८ ।
येऽभिनन्दन्ति नामानि हरेः श्रुत्वाऽतिहर्षिताः ।
रोमाञ्चितशरीराश्च ते वै भागवतोत्तमाः ॥ ४९ ।
तुलसीकाननं दृष्ट्वा ये नमस्कुर्व्वते नराः ।
तत्काष्ठाङ्कितकर्णा ये ते वै भागवतोत्तमाः ॥ ५० ।
तुलसीगन्धमाघ्राय सन्तोषं कुर्व्वते तु ये ।
तन्मूलमृत्तिका ये च ते वै भागवतोत्तमाः ॥ ५१ ।
आश्रमाचारनिरतास्तथैवातिथिपूजकाः ।
ये च वेदार्थवक्तारस्ते वै भागवतोत्तमाः ॥ ५२ ।

---

* ये कुर्व्वन्ति पुराणानि इति (क) ।

शिवप्रियाः शिवासक्ताः शिवपादार्च्चने रताः ।
त्रिपुण्ड्रधारिणो ये च ते वै भागवतोत्तमाः ॥ ५३ ।
व्याहरन्ति च नामानि हरेः शम्भोर्महात्मनः * ।
रुद्राक्षालङ्कृता ये च ते वै भागवतोत्तमाः ॥ ५४ ।
ये यजन्ति महादेवं क्रतुभिर्बहुदक्षिणैः ।
हरिं वा† परया भक्त्या ते वै भागवतोत्तमाः ॥ ५५ ।
विदितानि च शास्त्राणि परार्थं प्रवदन्ति ये ।
सर्व्वत्र गुणभाजो ये ते वै भागवताः स्मृताः‡ ॥ ५६ ।
शिवे च§ परमेशे च विष्णौ च परमात्मनि ।
समबुद्ध्या प्रवर्त्तन्ते ते वै भागवताः स्मृताः¶ ॥ ५७ ।
शिवाग्निकार्य्यनिरताः पञ्चाक्षरजपे रताः‖ ।
शिवध्यानरता** ये च ते वै भागवतोत्तमाः ॥ ५८ ।

---

* ये शम्भोश्च महात्मनः इति (क) (ग), ये शम्भोः परमात्मनः इति (ख) ।

† हरिञ्च इति (ख) ।

‡ ते वै भागवतोत्तमाः इति (क), (ख), (ग) ।

§ शिवे च परमेशाने इति (ख) (ग), (ख)पुस्तके च विष्णावित्यत्र हराविति पाठः ।

¶ भागवतोत्तमाः इति (ख), (ग) ।

‖ पञ्चाक्षरपराश्च ये इति (ख) ।

** शिवध्यानपरा ये च इति (क), (ख), (ग) ; (ख), (ग), (घ) पुस्तकेषु एतस्माच्छ्लोकादनन्तरं विदितानीति श्लोको वर्त्तते । (ख) पुस्तके तु तत्र 'विदित्वा सर्व्व शास्त्राणि' इति पाठो वर्त्तते ।

पानीयदाननिरता येऽन्नदानरतास्तथा।
एकादशीव्रतरता* ते वै भागवतोत्तमाः॥ ५९॥
गोदाननिरता ये च कन्यादानरताश्च ये† ।
मदर्थं कर्म्मकर्त्तारस्ते वै भागवतोत्तमाः॥ ६०॥
एते भागवता विप्र केचिदत्र प्रकीर्त्तिताः‡।
मयाऽपि गदितुं शक्या नाब्दकोटिशतैरपि॥ ६१॥
तस्मात्त्वमपि विप्रेन्द्र सुशीलो भव सर्व्वदा।
सर्व्वभूताश्रयो दान्तो मैत्रो धर्म्मपरायणः§॥ ६२॥
पुनर्युगान्तपर्य्यन्तं¶ धर्म्मं सर्व्वं समाचरन्‖।

---

* एकादशीव्रतपराः इति (ख)।

† कन्यादानरतास्तथा इति (ग)।

‡ (घ) पुस्तके एतच्छ्लोकस्थानेऽन्यदेव श्लोकद्वयं वर्त्तते—

मन्मानसाश्च मद्भक्ता मद्भक्तजनलोलुपाः।
मन्नामश्रवणासक्तास्ते वै भागवतोत्तमाः॥
बहुनाऽत्र किमुक्तेन संक्षेपात्तु ब्रवीम्यहम्।
मद्गुणा यत्र वर्त्तन्ते ते वै भागवतोत्तमाः॥

(ख) पुस्तके मन्मानसा इत्याद्येक एवाधिकः श्लोको वर्त्तते, (ग) पुस्तके तु एतस्मादधिकाच्छ्लोकादनन्तरं आत्मवदित्यारभ्य तुलसीगन्धमित्याद्यन्ताः सर्व्वे श्लोकाः पठिताः, ततश्च बहुनेत्यधिकः श्लोकः।

§ सर्व्वभूतदयाशीलो धर्म्मकर्म्मपरायणः इति (ख)।

¶ पुनः सर्गान्तपर्य्यन्तमिति (क)।

‖ धर्म्मं सम्यक् समाचर इति (ख), (ग)।

मन्मूर्त्तिध्याननिरतः परं निर्व्वाणमाप्नुहि ॥ ६३ ।
एवं मृकण्डुपुत्रस्य भक्तस्य करुणानिधिः* ।
इति दत्त्वा वरं देवस्तत्रैवान्तरधीयत ॥ ६४ ।
मार्कण्डेयो महाभागो हरिभक्तिरतः सदा ।
चचार परमान्धर्म्मानियाज विधिवन्मखान् ॥ ६५ ।
शालग्रामे महाक्षेत्रे स ततापं परन्तपः† ।
तद्ध्याननिरतायुस्तु परं‡ निर्व्वाणमाप्तवान् ॥ ६६ ।
तस्माज्जन्तुषु सर्व्वेषु हितकृद्धरिपूजकः ।
ईप्सितं मनसा यत्तु तत्तदाप्नोत्यसंशयम् ॥ ६७ ।

नारद उवाच ।

सनत्कुमार यत्पृष्टं तत्सर्व्वं गदितम्मया ।
भगवद्भक्तिमाहात्म्यं किमन्यच्छ्रोतुमिच्छसि§ ॥ ६८ ।

इति श्रीबृहन्नारदीये पुराणे पञ्चमोऽध्यायः ।



---

* करुणाम्बुधिः इति (ख) ।

† ततापं परमन्तपः इति (क), (ख), (ग), तेपे इति साधु ।

‡ निर्व्वाणं परमाप्तवान् इति (घ) ।

§ किमन्यच्छ्रोतुमर्हसि इति (ग) ।

# अथ षष्ठोऽध्यायः ।

सूत उवाच ।

भगवद्भक्तमाहात्म्यं श्रुत्वा प्रीतो मुनीश्वरः ।
सनत्कुमारः पप्रच्छ नारदं मुनिसत्तमम् ॥ १ ।

सनत्कुमार उवाच ।

क्षेत्राणामुत्तमं क्षेत्रं तीर्थानामुत्तमोत्तमम् ।
परया दयया तथ्यं ब्रूहि देवर्षिसत्तम ॥ २ ।*

नारद उवाच ।

शृणु ब्रह्मन् परं गुह्यं सर्व्वसम्पत्करं शुभम् ।
दुःस्वप्ननाशनं पुण्यं सर्व्वपापहरं शुभम्† ॥ ३ ।
आव्यञ्च मुनिभिर्नित्यं दुष्टग्रहनिवारणम् ।
सर्व्वरोगप्रशमनमायुर्व्वर्द्धनकारणम् ॥ ४ ।
क्षेत्राणामुत्तमं क्षेत्रं‡ तीर्थानामुत्तमोत्तमम्§ ।
गङ्गायमुनयोर्योगं वदन्ति परमर्षयः ॥ ५ ।

---

* एष श्लोकः (ख) पुस्तके नास्ति ।

† एतदर्द्धं (घ) पुस्तके नास्ति । (ख) पुस्तके पूर्व्वार्द्धे शुभमित्यस्य स्थाने श्रुतमिति पाठः । परार्द्धे दु स्वप्ननाशनमित्यस्य स्थाने दुःखप्रणाशनमिति पाठः ।

‡ (ख) पुस्तके क्षेत्राणामधिक क्षेत्रमिति पाठः ।

§ तीर्थानामुत्तमं तीर्थं क्षेत्राणामुत्तमोत्तममिति (क) । पुण्यानामधिकं पुण्यं तीर्थानाञ्च तथोत्तममिति (ख) ।

सितासितोदकं तीर्थं ब्रह्माद्याः सर्व्वदेवताः ।
मनुयो मनवश्चैव सेवन्ते पुण्यकाङ्क्षिणः* ॥ ६ ।
गङ्गा पुण्यनदी ज्ञेया यतो विष्णुपदोद्भवा ।
रविजा† यमुना ब्रह्मन् तयोर्योगमनुत्तमम्‡ ॥ ७ ।
स्मृतार्त्तिनाशिनी गङ्गा नदीनां प्रवरा शुभा ।
सर्व्वपापक्षयकरी सर्व्वोपद्रवनाशिनी ॥ ८ ।
यानि क्षेत्राणि पुण्यानि समुद्रान्ते महीतले ।
तेषां पुण्यतमं ज्ञेयं प्रयागाख्यं महामुने ॥ ९ ।
इयाज वेधा यज्ञेन स्वपितामहमच्युतम् ।
तथा च मुनयः सर्व्वे चक्रुश्च विविधान्मखान् ॥ १० ।
सर्व्वतीर्थाभिषेकाणि यानि पुण्यानि तानि वै ।
गङ्गाविन्द्वभिषेकस्य कलां नार्हन्ति षोड़शीम् ॥ ११ ।
गङ्गा गङ्गेति यो ब्रूयाद्योजनायुतदूरगः ।
विमुच्यते सोऽपि पापैः§ किमु¶ गङ्गासमीपगः ॥ १२ ।

---

* वसन्ते पुण्यकाङ्क्षिण इति (ग) ।

† विरजा इति (ख), (ग), (घ) ।

‡ अनयोर्योगमुत्तममिति (घ) ।

§ सर्व्वपापैः इति (घ) ।

¶ किन्नु इति (ग) ।

विष्णुपादोद्भवा देवी विश्वेश्वरसमीपगा* ।
संसेव्या मुनिभिर्दिव्यैः का स्यादन्योत्तमा नदी ॥ १३ ।
यस्यैकतं ललाटे तु ध्रियते येन सत्तमाः ।
तत्रैव नेत्रं शिरसि विधोरर्द्धञ्च धारयेत् ॥ १४ ।
यन्मङ्गलं महापुण्यं दुर्लभं सुकृतात्मनाम्† ।
सारूप्यदायकं विष्णोः किमस्मात्कथ्यते परम्‡ ॥ १५ ।
यत्र स्नाताः§ पापिनोऽपि सर्व्वपापविवर्ज्जिताः ।
महद्विमानमारूढ़ाः प्रयान्ति हरिमन्दिरम्¶ ॥ १६ ।
यत्र स्नाता महात्मानः पितृमातृकुलानि तु|| ।
समस्तानि** समुद्धृत्य विष्णुलोके महीयते ॥ १७ ।
स स्नातः सर्व्वतीर्थेषु गङ्गां स्मरति यः सदा ।
पुण्यक्षेत्रेषु सर्व्वेषु स्थितवान्नात्र संशयः†† ॥ १८ ।

---

* एतदर्द्धं (ग) पुस्तके नास्ति ।

† दुष्कृतात्मना इति (क), स्वकृतात्मनामिति (ख) ।

‡ किमन्याऽन्यद्ब्रवीम्यहमिति (ख) ।

§ स्नात्वा इदि (घ) ।

¶ परमं पदं इति (ख), (ग) ।

|| कुलान्विता इति (घ) ।

** सहस्राणि इति (ख) ।

†† स कृतार्थो न संशयः (ग) ।

यत्र स्नातं नरं दृष्ट्वा पापोऽपि स्वर्गभूमिभाक्* ।
यदङ्गस्पर्शमात्रेण देवानामधिपो भवेत् ॥ १९ ।
यन्मृदं मस्तके धृत्वा जटाजूटधरो भवेत् ।
देहे तु लेपनं कृत्वा शिवसान्निध्य†माप्नुयात् ॥ २० ।
दृष्ट्वाऽपि पापिनो यान्ति यन्मृदाङ्कितमस्तकम् ।
यत्पश्यन्ति महात्मानस्तद्विष्णोः परमं पदम् ॥ २१ ।
तुलसीमूलसंभूता हरिभक्तपदोद्भवा‡ ।
गङ्गोद्भवा च मृल्लेखा नयत्यच्युतरूपताम् ॥ २२ ।
गङ्गा च तुलसी चैव हरिभक्तिरचञ्चला ।
अत्यन्तदुर्लभा नृणां भक्तिर्धर्मप्रवक्तरि ॥ २३ ।
सद्धर्मवक्तुः पदसम्भवा मृद्-§
गङ्गोद्भवा चैव तथा तुलस्याः ।
मूलोद्भवा चैव तथा च भक्ति-
रेषा नयत्याशु हरेः पदं यत् ॥ २४ ।
कदा यास्याम्यहं गङ्गां कदा पश्यामि तामहम् ।
अनुतापीति यो नित्यं स विष्णुपदमश्नुते ॥ २५ ॥

---

* पापिनः स्वर्गगामिनः इति (ख) ।

† सारूप्य इति (ग) ।

‡ (ख) पुस्तके यस्य तात हरौ भक्तिः स स्पर्शादेव पापनुत् इत्यधिकाऽर्द्धं वर्त्तते ।

§ खलु पादमृत्तिका इति (ग) ।

गङ्गाया महिमा ब्रह्मन् बहु वर्षशतैरपि* ।
वक्तुं† न शक्यते विष्णुः किमन्यैर्बहुभाषितैः ॥ २६ ।
अहो माया जगत्सर्व्वं मोहयत्याशु सत्तमाः ।
यतस्तन्नरकं याति गङ्गानाम्नि स्थिते सति ॥ २७ ॥
संसारपाशविच्छेदि गङ्गानाम प्रकीर्त्तितम् ।
तथा तुलस्यां भक्तिश्च हरिभक्तिप्रवक्तरि‡ ॥ २८ ।
सकृदुच्चरते यस्तु गङ्गा गङ्गेति मानवः।
सर्व्वपापविनिर्म्मुक्तो§ विष्णुलोकं समश्नुते ॥ २९ ।
योजनत्रितयं यस्तु गङ्गां यामीति गच्छति ।
सर्व्वपापविनिर्म्मुक्तः सर्व्वलोकाऽधिपो भवेत्¶ ॥ ३० ।
सेयं गङ्गा महापुण्या नदीनां प्रवरा शुभा‖ ।
मेषादिषु च मासेषु पावयत्यखिलं जगत् ॥ ३१ ।
गोदावरी भीमरथी कृष्णा रेवा सरस्वती ।
तुङ्गभद्रा च कावेरी कालिन्दी बाहुदा तथा ॥

---

* वक्तुं वर्षशतैरपीति (ग) ।

† न शक्यते विष्णुनाऽपीति (ग) ।

‡ हरिकीर्त्तिप्रवक्तरि इति (ख) ।

§ स सर्व्वपापनिर्म्मुक्त इति (ग) ।

¶ सूर्य्यलोके महीयते इति (ख) ।

‖ नदी रम्या प्रविश्य वै इति (ख), (ग) ।

वेत्रवती ताम्रपर्णी शतद्रुस्तु द्विजोत्तमाः ।
एवमादिषु सर्व्वासु नदीषु सततं स्थिता ॥ ३२ । ३३ ।
या पुण्यतिथयः प्रोक्ताः शास्त्रेषु मुनिभिर्द्विजाः ।
तासु सर्व्वजलस्था सा पावयत्यखिलं जगत् ॥ ३४ ।
यथा सर्व्वगतो विष्णुर्यथा विष्णुपदं द्विजाः ।
तथेयं व्यापिनी गङ्गा सर्व्वपापप्रणाशिनी* ॥ ३५ ।
अहो गङ्गा जगद्धात्री स्नानपानादिभिर्जगत् ।
पुनाति पावयत्येषा न कथं सेव्यते नृभिः ॥ ३६ ।
तीर्थानामुत्तमं तीर्थं क्षेत्राणाञ्च तथोत्तमम्† ।
वाराणसीति विख्यातं सर्व्वदेवनिषेवितम् ॥ ३७ ।
गङ्गायमुनयोर्योगो श्रेयस्तस्य ह्यनुत्तमः ।
यस्य दर्शनमात्रेण नरा यान्ति परां गतिम् ॥ ३८ ।
मकरस्थे रवौ गङ्गा जलमात्रव्यवस्थिता ।
पुनाति स्नानपानाद्यैर्नयतीन्द्रपदं‡ जगत् ॥ ३९ ।
यो गङ्गां भजते नित्यं शङ्करो लोकशङ्करः ।
लिङ्गरूपी कथं तस्य महिमा परिकीर्त्त्यते ॥ ४० ।
हरिरूपधरं लिङ्गं लिङ्गरूपधरो हरिः ।
ईषदप्यन्तरं नास्ति भेदकृत्पापमश्नुते ॥ ४१ ।

---

* सर्व्वपापविनाशिनी इति (ग), सर्व्वथा पापनाशिनी इति (ख) ।

† क्षेत्राणामुत्तमन्तथा इति (ख) ।

‡ नयतीन्द्रपुरं इति (क, ग), पुरीं इति (ख) ।

अनादिनिधने देवे हरिशङ्करसंज्ञिते* ।
अज्ञानसागरे मग्ना भेदं कुर्व्वन्ति पापिनः ॥ ४२ ।
यो देवो जगतामीशः कारणानाञ्च कारणम् ।
युगान्ते जगदत्त्येतद्रुद्ररूपधरोऽव्ययः† ॥ ४३ ।
रुद्रो वै विष्णुरूपेण पालयत्यखिलं जगत् ।
ब्रह्मरूपेण सृजति तदन्त्येव स्वयं हरिः‡ ॥ ४४ ।
हरिशङ्करयोर्म्मध्ये ब्रह्मणश्चाऽपि यो नरः ।
भेदकृन्नरकं भुङ्क्ते यावदाचन्द्रतारकम् ॥ ४५ ।
हरं हरिं विधातारं यः पश्येदेकरूपिणम् ।
स याति परमानन्दं शास्त्राणामेष निर्णयः ॥ ४६ ।
योऽसावनादिः सर्व्वज्ञो जगतामादिकृद्विभुः§ ।
नित्यं सन्निहितस्तत्र लिङ्गरूपी जनार्द्दनः ॥ ४७ ।
काशीविश्वेश्वरं लिङ्गं ज्योतिर्लिङ्गं तदुच्यते ।
तं दृष्ट्वा परमं ज्योतिराप्नोति मनुजोत्तमः ॥ ४८ ।
शिलामृद्दारुपाषाणलेख्यजा¶ मूर्त्तिरुत्तमा ।
शिवस्याऽप्यच्युतस्याऽपि तत्र सन्निहितो हरिः ॥ ४९ ।

---

* अनादिनिधनौ देवौ हरिशङ्करसञ्ज्ञितौ इति (ख) ।

† ऽच्युतः इति (ग) ।

‡ ४३,४४ श्लोकद्वयं (ख) पुस्तके नास्ति ।

§ गुरुः इति (ख) ।

¶ शिलामृद्धातुपाषाणलेख्यजा इति (ख) ।

तुलसीकाननं यत्र यत्र पद्मवनानि च।
पुराणपाठनं* यत्र तत्र सन्निहितो हरिः॥ ५०॥
यो वदेत्सततं भक्त्या पुराणानि द्विजोत्तमाः।
आत्मार्थं वा परार्थं वा स हरिर्नात्र संशयः॥ ५१॥
कर्म्मणा मनसा वाचा यो विष्णुं भजते सदा।
शिवं वा पूजयेन्नित्यं तत्र सन्निहितो हरिः॥ ५२॥
पुराणसंहितावक्ता हरिरित्यभिधीयते।
तद्भक्तिं कुर्व्वतां नृणां गङ्गास्नानं दिने दिने॥ ५३॥
पुराणश्रवणे भक्तिर्गङ्गास्नानोपमा स्मृता।
तद्भक्तरि† च या भक्तिः सा प्रयागोपमा स्मृता॥ ५४॥
पुराणैर्धर्म्मकथनैर्यः समुद्धरते जनम्।
संसारसागरे मग्नं स हरिर्नात्र संशयः‡॥ ५५॥
नास्ति गङ्गासमं तीर्थं नास्ति मातृसमो गुरुः।
नास्ति विष्णुसमो देवो§ नास्ति तत्त्वं गुरोः परम्॥ ५६॥

---

* पुराणपठनमिति (ग), पुराणश्रवणमिति (ख)।

† तद्भर्त्तरौ इति (ख)।

‡ पुराणधर्म्मकथकान् यः समुद्धरते जनान्।
संसारसागरे मग्नान्—
इति (ग) पुस्तकस्य न रुचिकरः पाठः।

§ नास्ति विष्णोः परो देवः इति (ख)।

यथा वेदः* परो मन्त्रो यथा स्वात्माधिदेवता।
यथा परं धनं विद्या तथा गङ्गा परा स्मृता॥ ५७।
वर्णानां ब्राह्मणाः श्रेष्ठास्ताराणां ग्लौर्यथोत्तमः।
यथा पयोधिः सिन्धूनां तथा गङ्गा परा स्मृता॥ ५८।
नास्ति शान्तेः परो बन्धुर्नास्ति सत्यात्परन्तपः।
नास्ति मोक्षात्परो लाभो नास्ति गङ्गासमा नदी॥ ५९।
गङ्गायाः परमं नाम पापारण्यदवानलः।
भवव्याधिहरा गङ्गा तस्मात्सेव्या प्रयत्नतः॥ ६०।
गायत्री जाह्नवी चोभे सर्व्वपापहरे स्मृते।
एतयोर्भक्तिहीनो यस्तं विद्यात्पतितं द्विजाः॥ ६१।
गायत्री छन्दसां माता लोकस्याऽस्य च जाह्नवी।
उभे ते सर्व्वपापानां नाशकारणतां गते॥ ६२।
यस्य प्रसन्ना गायत्री तस्य गङ्गा प्रसीदति।
विष्णुभक्तियुते ते तु सर्व्वकामार्थसिद्धिदे॥ ६३।
धर्म्मार्थकाममोक्षाणां फलरूपे निरञ्जने।
सर्व्वलोकानुग्रहार्थं प्रवर्त्तेते महोत्तमे†॥ ६४।
अतीवदुर्लभा नृणां गायत्री जाह्नवी तथा।
तथैव तुलसीभक्तिर्हरिभक्तिश्च सात्त्विकी‡॥ ६५।

---

* यथानादः परो मन्त्रः इति (ख), (ग)।

† निरञ्जने इति (ग)।

‡ शाश्वती इति (ख)।

अहो गङ्गा महाभागा स्मृता पापप्रणाशिनी ।
हरिलोकप्रदा दृष्टा पीता सारूप्यदायिनी ॥ ६६ ।
यत्र स्नाता नरा यान्ति विष्णोः पदमनुत्तमम् ।
स्नाता पीता च परमा वरमोक्षप्रदायिनी* ॥ ६७ ।
नारायणो जगद्धाता वासुदेवः सनातनः† ।
गङ्गानामपराणान्तु वाञ्छितार्थफलप्रदः ॥ ६८ ।
गङ्गाजलकणेनाऽपि यः सिक्तो मनुजोत्तमः ।
सर्व्वपापविनिर्म्मुक्तः प्रयाति परमं पदम् ॥ ६९ ।
यद्बिन्दुसेवनादेव सगरान्वयसम्भवाः‡ ।
विसृज्य राक्षसं भावं प्रयान्ति परमं पदम् ॥ ७० ।

इति श्रीबृहन्नारदीये पुराणे षष्ठोऽध्यायः ।



---

* परमोक्ष.प्रदायिनी इति (ख) ।

† जनार्द्दन इति (ग) ।

‡ सागराख्यस्य ते सुताः इति (ख) ।

# अथ सप्तमोऽध्यायः ।

ऋषय ऊचुः ।

कोऽसौ राक्षसभावेन मोचितः सगरान्वये* ।
सगरः कतमो राजा कुत्र जातो मुनीश्वर ॥ १ ।
भगीरथस्तत्कुलजो गङ्गामाहृतवान् किल ।
सूत तत्सर्व्वमस्माकं विस्तराद्वक्तुमर्हसि† ॥ २ ।

सूत उवाच ।

शृणुध्वमृषयः सर्व्वे नारदेन प्रभाषितम् ।
सम्यक् सनत्कुमाराय गङ्गामाहात्म्यमुत्तमम् ॥ ३ ।
सर्व्वे यूयं महाभागाः कृतार्था नात्र संशयः ।
यतः प्रभावं गङ्गाया भक्तितः श्रोतुमुद्यताः ॥ ४ ।
माहात्म्यश्रवणं‡ यस्या गङ्गायाः सुकृतात्मनाम् ।
दुर्लभं प्राहुरत्यन्तं मुनयो ब्रह्मवादिनः ॥ ५ ।
शृणुध्वमृषयश्चित्रं सगरान्वयमुत्तमम् ।
गङ्गाजलाभिषेकेण गतं विष्णुपदं यथा§ ॥ ६ ।

---

* सगरान्वयः इति (क) ।

† वृत्तान्तं वक्तुमर्हसि इति (क) ।

‡ माहात्म्यस्मरणमिति (ग) ।

§ तथा इति (ख) ।

आसीद्रविकुले प्राज्ञो बाहुर्न्नाम* वृकात्मजः† ।
बुभुजे पृथिवीं सर्व्वां धर्म्मतो धर्म्मतत्परः ॥ ७ ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चान्ये च जन्तवः ।
पालिताः स्वस्ववृत्त्यैव‡ तस्माद्बाहुर्विशाम्पतिः§ ॥ ८
इयाज सोऽश्वमेधान्वै सप्तद्वीपेषु सप्ततिम्¶ ।
अतर्पयत्सुरान्सर्व्वान् गेहे माल्यादिभिर्द्विजाः ॥ ९ ।
अरंस्त नीतिशास्त्रेषु व्यजेष्ट परिपन्थिनः ।
मेने कृतार्थमात्मानमनन्यमुपकारिणम् ‖ ॥ १० ।
चन्दनानि मनोज्ञानि अनुलिम्पन्नरः** सदा ।
विभूषणानुरपस्कुर्व्वंस्तद्राष्ट्रे सुखिनो जनाः ॥ ११ ।
अकृष्टपच्या पृथिवी फलपुष्पसमन्विता ।
ववर्ष वृष्टिं देवेन्द्रः†† काले काले मुनीश्वराः ॥ १२ ।

---

* बाहुनामा इति (ग) ।

† नृपात्मजः इति (ख), (ग) ।

‡ स्वस्वभूत्यैव इति (ग) ।

§ तस्माद्बाहुर्विशाम्पतिम् इति (क), तस्मात् प्राहुर्विशाम्पतिम् इति (ग) ।

¶ हयमेधान् प्रकर्त्तुं वै सप्तद्वीपेन सप्ततीन् इति (ख) ।

‖ अमन्यत परायणमिति (घ), अनल्पातपचारणं इति (ख) । पाठस्यास्यार्थो न सम्यक सङ्गच्छते ।

** अनुलिप्य इति (घ), चन्दनानि मनोज्ञान्यनुलिम्पेरन् इति (ग) ।

†† देवेशः इति (क) ; (ख) पुस्तके अकृष्टपच्या इत्यर्द्धतोऽनन्तरम् ऋषयश्चातपन् साधु इत्यर्द्धं दृश्यते ।

मनो दृश्नोऽपराधे प्रजा धर्म्मेण पालिताः।
ऋषयश्चातपन् साधु निष्प्रत्यूहेन सर्व्वदा ॥ १३ ।
सर्व्वशास्त्रार्थतत्त्वज्ञः क्रतज्ञः शुभलक्षणः।
अरक्षन्नां महाभागां समानानुरतिं गुणाम्* ॥ १४ ।
एकदा तस्य राज्ञो वै सर्वसम्पद्विनाशक्तत्।
अहङ्कारो महाञ्जज्ञे सासूयो लोभहेतुकः ॥ १५ ।
अहं राजा समस्तानां लोकानां शासको बली।
मयाऽकारि क्रतुचयो मत्तः पूज्योऽस्ति कः परः† ॥ १६ ।
अहं विचक्षणः श्रीमाञ्जिताः सर्व्वे ह्यरातयः।
पाता समस्तद्वीपानां विश्वजिच्छिक्षको गुणी‡ ॥ १७ ।
अहङ्कारस्थितो यस्तु रचिता शिक्षको गुणी§ ।
वेदवेदाङ्गतत्त्वज्ञो नीतिशास्त्रार्थकोविदः ॥ १८ ।
अजेयोऽ¶ व्याहतैश्वर्य्यो मत्तः कोऽन्योऽधिको विभुः।
एवं तस्य महीपस्य ह्यहङ्कारो विमोहजः।
नाशहेतुः समस्तानां सम्पदामभवन्मुने ॥ १९ ।

---

* समानां नवतिं गुणान् इति (क), अरक्षन्ना सहस्राणां समाना नवतिं गुणान् इति (ग)।

† कोऽपरः इति (ग)।

‡ सम्पदामभवन्मुने इति (क), (ग)।

§ एतदर्द्धं (घ) पुस्तके नास्ति।

¶ अजय्य इति (ग)।

अहङ्कारः स्थितो यत्र तत्र कामादयो ध्रुवम् ।
येषु* स्थितेषु स नरो विनश्यति न संशयः ॥ २० ।
यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता† ।
एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥ २१ ।
असूया महती जाता सर्व्वलोकविरोधिनी‡ ।
स्वदेहनाशिनी पापा सर्व्वसम्पद्विनाशिनी ॥ २२ ।
विवेकहीने पुरुषे यदि सम्पत्प्रवर्त्तते ।
अतीव चञ्चला ज्ञेया तटिनी शारदीव सा ॥ २३ ।
असूयाविष्टमनसां§ यदि सम्पत्प्रवर्त्तते ।
तुषाग्निवायुसंयोगमिव जानीध्वमुत्तमाः¶ ॥ २४ ।‖
असूयोपेतमनसां दम्भाचारवतान्तथा** ।
परुषोक्तिरतानाञ्च सुखं नेह परत्र च ॥ २५ ।

---

* एषु स्थितेषु इति (ख) ।

† अविवेकता इति (ख), (ग) ।

‡ तस्याऽसूया सुमहती जाता लोकविरोधिनी इति (ख), तस्याऽथ महती जाता सर्व्वलोकविरोधिनी इति (ग) ।

§ असूयाविष्टमनसि इति (घ) ।

¶ जानीत सत्तमाः इति (ग) ।

‖ (क) पुस्तके २४शः श्लोको नास्ति ।

** दम्भाचाररतात्मनां इति (ग) ।

असूयाविष्टमनसां सदा निष्ठुरभाषिणाम्।
प्रिया वा तनया वाऽपि बान्धवा वाऽप्यरातयः॥ २६॥
योऽसूयां कुरुते नित्यं समीक्ष्य च परश्रियम्।
सर्व्वस्वपक्षच्छेदाय कुठारो नात्र संशयः*॥ २७॥
यः स्वश्रेयोविनाशाय कुर्य्याद्यत्नं नरो यदि।
सर्व्वेषां श्रेयसां दम्भात्स कुर्य्यान्मत्सरं सदा†॥ २८॥
मित्राऽपत्यगृहक्षेत्रधनधान्ययशःसु च।
हानिमिच्छन्नरः कुर्य्यादसूयां सततं द्विजाः॥ २९॥
अथ तस्य स्थिरापत्यादसूयाविष्टचेतसः।
हैहयास्तालजङ्घाश्च बलिनोऽरातयोऽभवन्॥ ३०॥
यस्यानुकूलः पद्मेशः सौभाग्यन्तस्य वर्द्धते।
स एव विमुखो यस्य सौभाग्यन्तस्य हीयते॥ ३१॥
तावत्पुत्राश्च पौत्राश्च धनधान्यगृहादयः।
यावद्वीक्षेत लक्ष्मीशः कृपापाङ्गेन सत्तमाः॥ ३२॥
अपि मूर्खान्धबधिरजड़ाः शूराऽविवेकिनः‡।
श्लाघ्या भवन्ति विप्रेन्द्राः प्रेक्षिता माधवेन ये॥ ३३॥

---

* सर्व्वस्वपक्षच्छेदाय कुठारास्ते न संशयः इति (क)।

† सर्व्वेषा श्रेयसा दृष्टा इति (ख), (ग)।

‡ जडासूयाऽविवेकिनः इति (घ)। अपि मूर्खान्धबधिरेत्यादि श्लोकत्रयं (ख) पुस्तके नास्ति।

सौभाग्यं यस्य हीयेत तस्याऽसूयादिदुर्गुणाः* ।
भवन्ति नाऽत्र सन्देहो जन्तुद्वेषोऽविशेषतः ॥ ३४ ॥
यस्य कस्याऽपि यो द्वेषं कुरुते मूढ़धीर्नरः ।
तस्य सर्व्वाणि नश्यन्ति श्रेयांसि मुनिसत्तमाः ॥ ३५ ॥
असूया वर्त्तते यस्मिन्† तस्य विष्णुः पराङ्मुखः ।
तस्य श्रेयांसि सर्व्वाणि विनश्यन्ति ततो ध्रुवम् ॥ ३६
विवेकं हन्त्यहङ्कारो ह्यविवेकोऽनुजीविनः‡ ।
आपदः सम्भवन्त्येव अहङ्कारं त्यजेत्ततः ॥ ३७ ॥
अहङ्कारो भवेद्यस्य तस्य नाशोऽतिवेगतः§ ।
असूयाद्या अहङ्कारमनुगच्छन्ति ये द्विजाः ॥ ३८ ॥
असूयाविष्टमनसस्तस्य राज्ञः परैः सह ।
आयोधनं घोरमासीन्मासमेकं निरन्तरम् ॥ ३९ ।
हैहयैस्तालजङ्घैश्च रिपुभिः स पराजितः ।
सजायो विपिनं भेजे सहसा भ्रष्टपिष्टपः ॥ ४० ।
तैरेव रिपुभिस्तस्य भार्य्यायां विबुधोत्तमाः ।
दत्तो गरो महाघोरो गर्भस्तम्भाय भीरुभिः ॥ ४१ ।

---

* तस्याऽसूयाद्योऽगुणाः इति (घ) ।

† यस्य इति (ग) ।

‡ अविवेक स्वजीविनं इति (ख), अविवेकात्मजीविनां इति (ग) ।

§ तस्य नाशः स्थितोऽग्रत. इति (ख) ।

स बाहुः सहितो दुःखी अन्तर्व्वत्न्या च भार्य्यया।
वनाद्वनान्तरं गच्छन्नौर्व्वाश्रमपदं ययौ॥ ४२।
निदाघतापितो बाहुः पादचार्य्यतिदुःखितः।
स्वकर्म्म विलपंस्तत्र क्षुत्क्षामस्तृषितोऽभवत्*॥ ४३।
क्षुत्क्षामया तया युक्तो गर्भिण्या भार्य्यया सह।
अवाप परमां तुष्टिं तत्र दृष्ट्वा महत्सरः॥ ४४।
असूयोपेतमनसस्तस्य भावं निरीक्ष्य च†।
सरोगता विहङ्गास्ते लीनाश्चित्रमिदं जगुः‡॥ ४५।
अहो कष्टमसौ§ नूनं पापकर्म्मा समागतः।
विश्रब्धमण्डजा वासमित्यूचुस्ते विहङ्गमाः¶॥ ४६।
असूयोपेतमनसं तं दृष्ट्वा चुक्रुशुः खगाः‖।
अहोऽसूयां कष्टतरां धिग्जगत्कष्टहेतुकीम्**॥ ४७।
सोऽवगाह्य सरो भूपः स्नात्वा पीत्वा जलं बहु††।

---

* स्वयञ्च कर्म्म विलपन् क्षुत्क्षामो विपिने चरन् इति (ख)।

† निरीक्ष्य वै इति (ग)।

‡ लीनाश्चित्रमिदं महत् इति (ग), नीताश्चित्रमिदं महत् इति (ख)।

§ अहो नूनं इति (क), (घ)।

¶ वासमिदमूचुर्विहङ्गमा इति (ख)।

‖ द्विजा इति (ग)।

** प्रैष्यहेतुकीम् इति (ग), त्रिजगद्द्वेषहेतुकीम् इति (ख)।

†† सुहृ. इति (ग)।

वृक्षमूलं समाश्रित्य सभार्य्यः प्रजहौ श्रमम् ॥ ४८ ।
तस्मिन् बाहौ वनं याते तेनैव परिरक्षिताः ।
दुर्गुणान् संगणय्यास्य* धिग्धिगित्यवदन् जनाः ॥ ४९ ।
यो वा को वा गुणी मर्त्त्यः सर्व्वश्लाघ्यतरो द्विजाः ।†
सर्व्वसम्पत्समायुक्तोऽप्यगुणी निन्दितोजनैः‡ ॥ ५० ।
अहोऽकीर्त्तिसमो मृत्युस्त्रिषु लोकेषु नो नृणाम्§ ।
तथा कीर्त्तिसमा माता त्रिषु लोकेषु नो नृणाम् ॥ ५१
यदा बाहुर्व्वनं यातस्तदा तद्राष्ट्रगा जनाः ।
सन्तोषं परमं याताः स्वरिपौ निहते यथा¶ ॥ ५२ ।
निन्दितो बाहुजो बाहुर्मृतवत्कानने स्थितः ।
न हन्ति कमपयशो लोके विबुधसत्तमाः ॥ ५३ ।
नास्त्यकीर्त्तिसमो मृत्युर्नास्ति क्रोधसमो रिपुः ।
नास्ति निन्दासमं पापं नास्ति मोहसमं भयम्‖ ॥ ५४ ।

---

* ततोऽगुणान् सगणय्य इति (क), ततीगुणानसंगणय्य इति (घ) ।

† एष श्लोक (घ) पुस्तके नास्ति ।

‡ योऽगुणी निन्दितोजनै. इति (क) ।

§ (घ) पुस्तके उभयत्र यो नृणामिति पाठो वर्त्तते, स तु भ्रान्त एव । (ख) पुस्तके परार्द्धं नास्ति पूर्व्वार्द्धे योनृणामिति पाठ. ।

¶ (ख) पुस्तके स्वरिपौ विगते यथा इति पाठः । तत्र जन इति सविशेषण एकवचनान्तः ।

‖ मोहसमो रिपु. इति (ख) ।

नास्त्यसूयासमाऽकीर्त्तिर्नास्ति कामसमोऽनलः।
नास्ति रागसमः पाशो* नास्ति सङ्गसमं विषम् ॥ ५५ ।
एवं विलप्य बहुधा बाहुरत्यन्तदुःखितः ।
जीर्णाङ्गो मनसस्तापाद्वृद्धभावमुपागतः ॥ ५६ ।
गते बहुतिथे काले और्व्वाश्रमसमीपगः ।
स बाहुर्व्याधिसंयुक्तो† ममार मुनिसत्तमाः ॥ ५७ ।
तस्य भार्य्यातिदुःखार्त्ता गर्भिणी विजने वने ।
विलप्य‡ बहुधा तत्र सहगन्तुं मनोदधे ॥ ५८ ।
आनीय सा ततस्त्विन्धान्§ चितां कृत्वाऽतिदुःखिता ।
आरोप्य पतिमारोढुं स्वयं समुपचक्रमे ॥ ५९ ।
एतस्मिन्नन्तरे धीमानौर्व्वस्तेजोनिधिर्मुनिः¶ ।
एतद्विज्ञातवान्सर्व्वं परमेण समाधिना ॥ ६० ।
भूतञ्च वर्त्तमानञ्च भावि चाऽपि मुनीश्वराः ।
गताऽसूया महात्मानः पश्यन्ति ज्ञानचक्षुषा ॥ ६१ ।
तपोधिस्तेजसां राशिरौर्व्वः पुण्यतमो मुनिः ।

---

* पाप इति (ख), (ग)।

† व्याधिभिर्युक्तः इति (ग) ।

‡ चिरं विलप्य बहुधा इति (ख), (ग)।

§ ततस्तेषां इति (ख), (ग)।

¶ निधिर्द्विजः इति (ख)।

प्राप्तवांस्तरसा* साध्वी यत्र बाहुप्रिया स्थिता ॥ ६२ ।
चितामारोढुमुद्युक्तां तां दृष्ट्वा मुनिसत्तमः ।
प्रोवाच धर्म्ममूलानि वाक्यानि विबुधर्षभाः ॥ ६३ ।
ऋषिरुवाच । †
राजवर्य्यप्रिये साध्वि मा कुरुष्वातिसाहसम् ।
तवोदरे चक्रवर्त्ती शत्रुहन्ता हि तिष्ठति‡ ॥ ६४ ।
बालापत्याश्च गर्भिण्यो ह्यदृष्टऋतवस्तथा ।
रजस्वला राजसुते नारोहन्ति चितां शुभे ॥ ६५ ।
ब्रह्महत्यादिपापानां प्रोक्ता निष्कृतिरुत्तमैः ।
दम्भस्य निन्दकस्याऽपि भ्रूणघ्नस्य न निष्कृतिः ॥ ६६ ।
नास्तिकस्य कृतघ्नस्य धर्म्मोपेक्षारतस्य च ।
विश्वासघातकस्याऽपि निष्कृतिर्नास्ति सुव्रते ॥ ६७ ।
तस्मादेतन्महापापं कर्त्तुं नार्हसि भाविनि ।
तदेतद्दुःखमुत्पन्नं तत्सर्व्वं शान्तिमेष्यति ॥ ६८ ।
इत्युक्ता मुनिना साध्वी निशम्य तदनुग्रहम्§ ।
विललापातिदुःखार्त्ता निगृह्य चरणौ मुनेः ॥ ६९ ।

---

* तपसा इति (क), (घ) ।

† (ख) पुस्तके ऋषिरुवाचस्थाने और्व्व उवाच इति पाठः ।

‡ शत्रुहन्ताभितिष्ठति इति (क), (ख) ।

§ विश्वस्य तदनुग्रहम् इति (ख), (ग) ।

और्व्वोऽपि तां पुनः प्राह सर्व्वशास्त्रार्थकोविदः ।
मा रोदी राजतनये श्रियमन्यां गमिष्यसि ॥ ७० ।
मा मुञ्चास्रु महाबुद्धे* प्रेतं दहति तत्त्वतः ।
तस्माच्छोकं परित्यज्य कुरु कालोचितां क्रियाम् ॥ ७१ ।
पण्डिते वाऽतिमूर्खे वा दरिद्रे वा श्रियान्विते ।
दुर्व्वृत्ते वा यतौ वाऽपि मृत्योः सर्व्वत्र तुल्यता ॥ ७२ ।
नगरे वा वने वाऽपि समुद्रे पर्व्वतेऽपि च† ।
यत्कृतं जन्तुना येन‡ तद्भोक्तव्यं न संशयः ॥ ७३ ।
अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते ॥ ७४ ।
यद्यत्पुरातनं§ कर्म्म तत्तद्देवेह भुज्यते ।
कारणं दैवमेवाऽत्र नान्योऽस्त्यौपाधिको जनः ॥ ७५ ।
गर्भे वा बाल्यभावे वा यौवने वाऽपि वार्द्धके ।
मृत्योर्व्वशं¶ प्रयातव्यं जन्तुभिः कमलानने ॥ ७६ ।
हन्ति पाति च गोविन्दो जन्तून् कर्म्मवशस्थितान् ।

---

* महामाये इति (क) ।

† पर्व्वतेऽपि वा इति (ग) ।

‡ प्राणिना येन इति (ख) ।

§ पुराकृतं इति (ख) ।

¶ वशमिति (क), (घ) ।

प्रवादं रोपयन्त्यज्ञा* हेतुमात्रेषु जन्तुषु ॥ ७७ ।
तस्मादेतन्महद्दुःखं परित्यज्य सुखीभव ।
कुरु पत्युश्च कर्म्माणि विवेकेषु स्थिरा भव† ॥ ७८ ।
एतच्छरीरं दुःखानां व्याधीनामयुतैर्युतम् ।
दुःखभोगमहत्‡क्लेशकर्म्मपाशेन यन्त्रितम् ॥ ७९ ।
इत्याश्वस्य महाबुद्धिस्तथा कर्म्माण्यकारयत् ।
त्यक्तशोका च सा तन्वी ववन्दे चाब्रवीन्मुनिम् ॥ ८० ।
किमत्र चित्रं यत्सन्तः§ परार्थफलकाङ्क्षिणः ।
नहि द्रुमाः स्वभोगार्थं फलन्ति पृथिवीतले ॥ ८१ ।
योऽन्यदुःखानि विज्ञाय साधुवाक्यैः प्रबोधयेत् ।
सएव विष्णुसत्वस्थो यतः सर्व्वहिते रतः ॥ ८२ ।
अन्यदुःखेन यो दुःखी योऽन्यहर्षेण हर्षितः ।
सएव जगतामीशो नररूपधरो हरिः ॥ ८३ ।
सद्भिः श्रुतानि शास्त्राणि सुखदुःखविमुक्तये¶ ।
सर्व्वेषां दुःखनाशाय यदि सन्तो‖ वदन्ति हि ॥ ८४ ।

---

* प्रमादं रोपयन्त्यज्ञा इति (ग), मत्र चारोपयन्त्यज्ञा इति (ख) ।

† एतदर्द्धं (घ) पुस्तके नास्ति ।

‡ सुखतोषमहत्क्लेशं इति (घ), सुखं शोकं महत्क्लेशं कर्म्मपाशेन तत्पर इति (ख) ।

§ ये सन्तः इति (क), (घ) ।

¶ न स्वदुःखविमुक्तये इति (क) ।

‖ भवन्ति हि इति (क) ।

यत्र सन्तः प्रवर्त्तन्ते तत्र दुःखं न बाधते ।
वर्त्तते यत्र मार्त्तण्डः कथं तत्र तमो भवेत्* ॥ ८५ ।
इत्येवं वादिनी सा तु स्वपत्युश्चोत्तराः क्रियाः ।
प्रचकार सरित्तीरे† मुनिचोदितमार्गतः‡ ॥ ८६ ।
तस्मिन्मुनौ गवे दृष्टे स राजा देवराड़िव ।
ज्वलद्विमानकोटीग्रः प्रपेदे परमं पदम् ॥ ८७ ।
कलेवरं वा तद्भस्म तद्धूमञ्चाऽपि§ सत्तमाः ।
यदि पश्यति पुण्यात्मा स याति परमं पदम्¶ ॥ ८८ ।
महापातकयुक्तो वा युक्तो वा सर्व्वपातकैः ।
परं पदं प्रयात्येव महद्भिरवलोकितः ॥ ८९ ।
पत्युः कृतक्रिया सा तु गत्वाश्रमपदं मुनेः ।
चकारानुदिनं तत्र शुश्रूषामादरात्पराम्‖ ॥ ९० ।

इति श्रीवृहन्नारदीये पुराणे सप्तमोऽध्यायः ।



---

* (ख) पुस्तके इत्यतः श्लोकादनन्तरं सूत उवाच इति पाठो वर्त्तते ।

† चकार तत्सरित्तीरे इति (ग), चकार सरितस्तीरे इति (ख) ।

‡ मुनिचोदितमानसा इति (ग) ।

§ तद्धूमस्थाऽपि इति (ग) ।

¶ एष श्लोकः (क) पुस्तके नास्ति । (ख), (ग) पुस्तकयोरेष श्लोको महापातकयुक्तो वेत्यादि श्लोकादनन्तरं दृश्यते ।

‖ एष श्लोकः (क) पुस्तके नास्ति । परम् इति (ख), (ग) ।

# अथाष्टमोऽध्यायः ।

सूत उवाच ।

सा तस्यानुदिनं चक्रे शुश्रूषां भक्तिसंयुताम् ।
भूलेपनादिभिः सम्यक् साध्वी सद्भावसंयुता ॥ १ ॥
गते बहुतिथे काले गरेण सहितं सुतम् ।
लेभे पुण्यतमे* काले शुश्रूषागतकल्मषा ॥ २ ॥
अहो सत्सङ्गतिर्लोके किं विषं न निवारयेत् ।
न ददाति शुभं† किं वा नराणां मुनिसत्तमाः ॥ ३ ॥
ज्ञानाज्ञानकृतं पापं यच्चाऽपि कारितं परैः‡ ।
तत्सर्वं नाशयत्याशु परिचर्या महात्मनाम् ॥ ४ ॥
जडोऽपि याति पूज्यत्वं सत्सङ्गाज्जगतीतले ।
कलामात्रोऽपि यश्चन्द्रः शम्भुना स्वीकृतो यथा ॥ ५ ॥
सत्सङ्गतिः परामृद्धिं ददाति हि नृणां सदा ।
इहामुत्र च विप्रेन्द्राः सन्तः पूज्यतमाः स्मृताः§ ॥ ६ ॥

---

* पुण्यतमा इति (ग) ।

† सुखं किं वा इति (ख), (ग) ।

‡ यच्चान्यत्कारितं परैः इति (क) ।

§ पूज्यतरास्ततः इति (ख), (ग) ।

अहो महद्गुणान्वक्तुं कः समर्थो मुनीश्वराः।
गर्भस्थितो गरो नष्टः सत्त्वेष्वपि समाश्रयः* ॥ ७ ।
गरेण सहितं पुत्रं दृष्ट्वा तेजोनिधिर्म्मुनिः ।
जातकर्म्म चकाराऽसौ नाम्ना च सगरन्तथा ॥ ८ ।
पुपोष सगरं बालं मधुक्षीरादिभिर्मुनिः ।
तपःप्रभावसम्पन्नैरौर्व्वस्तेजोनिधिस्तथा† ॥ ९ ।
कृत्वा चौड़ादिकर्म्माणि सगरस्य मुनीश्वरः।
शास्त्राण्यध्यापयामास राजयोग्यानि मन्त्रवित् ॥ १० ।
समर्थं सगरं दृष्ट्वा किञ्चिदुद्भिन्नशैशवम्‡ ।
मन्त्रवत्सर्व्वशस्त्राणि§ दत्तवान्मुनिसत्तमः ॥ ११ ।
सगरः शिक्षितस्तेन सम्यगौर्व्वेण सत्तमाः ।
बभूव बलवान्धन्वी कृतज्ञो गुणवाञ्छुचिः ॥ १२ ।
धर्म्मज्ञः सोऽपि सगरो¶ मुनेरमितविक्रमः ।
समित्कुशादिकं सोऽथ काल्यं काल्यमुपानयत्‖ ॥ १३ ।
स कदाचिद्गुणनिधिः प्रणिपत्य स्वमातरम् ।
उवाच प्राञ्जलिर्भूत्वा सगरो विनयाऽन्वितः ॥ १४ ।

---

* सत्त्वष्वतिसमाश्रयः इति (घ), सत्त्वस्वपि समाश्रयः इति (ख), (ग) ।

† औौर्व्वस्तं तेजसां निधिः इति (ख) ।

‡ रोमशं इति (ख) ।

§ मन्त्रवत् सर्व्वकर्म्माणि इति (घ) ।

¶ सर्व्वज्ञः सोऽपि सगर इति (क), धर्म्मज्ञः सोऽपि तत्त्वज्ञः इति (ग) ।

‖ समित्कुशादिकं साधु काले कालेषूपानयत् इति (ख) ।

सगर उवाच ।

मातः क्व याता मत्तातः कुत्रास्ते नाम तस्य किम्* ।
सोऽपि कः सर्व्वमेतन्मे यथावद्वक्तुमर्हसि ॥ १५ ।
पित्रा विहीना ये लोके जीवन्तोऽपि मृतोपमाः ।
दरिद्रोऽपि पिता यस्य आस्ते स धनदोपमः† ॥ १६
यस्य माता पिता नास्ति सुखन्तस्य न विद्यते ।
धर्म्महीनो यथा मूर्खः परत्राऽमुत्र सत्तमे‡ ॥ १७ ।
मातः§ पितृविहीनस्याप्यज्ञस्याप्यविवेकिनः ।
अपुत्रस्य वृथा जन्म ऋणग्रस्तस्य चैव हि ॥ १८ ।
चन्द्रहीना यथा रात्रिः पद्महीनं यथा सरः ।
पतिहीना यथा नारी तथा पितृवियोजितः ॥ १९ ।
धर्म्महीनो यथा¶ जन्तुर्धनहीनो यथा‖ गृही ।
शिशुहीनं** यथा वेश्म तथा पितृवियोजितः ॥ २० ।

---

* तस्य नाम किम् इति (ख) ।

† ह्यास्ते स त्वनलोपमः इति (ख) ।

‡ (क) पुस्तके श्लोकानामेतेषां स्थाने सपादैकः श्लोको दृश्यते, यथा, "मातः क्व यातो मत्तातः कुत्रास्ते धनदोपमः । यस्य माता पिता नास्ति सुखं तस्य न विद्यते । यथा हीनो यथा मूर्खः परत्राऽमुत्र सत्तमे ॥" इति । यथा मृत्युः इति (क) ।

§ मातापितृविहीनस्येति (ख), (ग) ।

¶ कर्म्महीनो यथा इति (ख) ।

‖ धर्म्महीनो यथा इति (ख), (ग) ।

** पशुहीनं इति (ख), (ग) ।

हरिभक्तिविहीनस्तु यथा धर्म्मो मुनीश्वराः ।
न फलेत मनुष्याणां तथाऽपितृकजीवनम्* ॥ २१ ।
अस्वाध्यायो यथा विप्रोऽनातिथेयो यथा गृही ।
दानशून्यं यथा द्रव्यं तथा पितृवियोजितः ॥ २२ ।
सत्यहीनं यथा वाक्यं मन्त्रिहीना यथा सभा† ।
तपो यथा दयाहीनं तथा पितृवियोजितः‡ ॥ २३ ।
गुणहीना यथा नारी जलहीना यथा नदी ।
अशान्तिदा§ यथा विद्या तथाऽपितृकजीवनम् ॥ २४ ।
यथा लघुतरो लोके मातर्य्याज्ञापरो नरः ।
तथा पितृविहीनस्तु लघुर्दुःखशतान्वितः¶ ॥ २५ ।

सूत उवाच ।

इतीरितं सुतेनैषा श्रुत्वा निश्वस्य दुःखिता ।
आदितस्तु यथा वृत्तं सर्व्वं तस्मै न्यवेदयत् ॥ २६ ।

---

* तथा पितृवियोजितः इति (घ), (ग) पुस्तके पूर्व्वार्द्धे हरिभक्तिविहीनस्तु यथा धर्म्ममपीश्वर इति पाठो वर्त्तते । (ख) पुस्तके श्लोकोऽयमेवं पठितः
'हरिभक्तिविहीनास्तु यथा धर्म्मा मुनीश्वराः ।
न फलन्ति मनुष्याणां तथाऽपितृकजीवनम् ॥'

† मन्त्रिहीना यथा सभा इति (ख), (ग), (घ) ।

‡ तथाऽपितृकजीवनं इति (क) ।

§ शान्तिहीना यथा विद्या इति (ख) ।

¶ दुःखायुतान्वितः इति (ख), (ग) ।

तच्छ्रुत्वा सगरः क्रुद्धः कोपसंरक्तलोचनः* ।
हनिष्यामि रिपून्सद्यः† प्रतिज्ञामकरोत्तदा ॥ २७ ।
प्रदक्षिणीकृत्य पुनः‡र्जननीञ्च प्रणम्य सः ।
प्रस्थापितः प्रतस्थे च तेनैव मुनिना तदा ॥ २८ ।
और्व्वाश्रमाद्विनिष्क्रान्तः सगरः सत्यवाक् शुचिः ।
वशिष्ठं प्राप्तवान् शीघ्रं स्ववंशस्य पुरोहितम् ॥ २९ ।
प्रणम्य कुलगुरवे§ वशिष्ठमुनये सुधीः ।
सर्व्वं विज्ञापयामास ज्ञानदृष्ट्या विजानतः ॥ ३० ।
ऐन्द्राऽस्त्रं वारुणं ब्राह्ममाग्नेयं सगरो नृपः ।
तेनैव मुनिनावाप¶ खड्गञ्चानुपमं धनुः ॥ ३१ ।
ततस्तेनाऽभ्यनुज्ञातः सगरः सौमनस्यवान् ।
आशीर्भिः प्रेषितः सद्यः प्रतस्थे प्रणिपत्य तम् ॥ ३२ ।
एकेनैव तु चापेन सगरः परिपन्थिनः‖ ।
सपुत्रपौत्रान्सगणानकरोत्स्वर्गवासिनः ॥ ३३ ।

---

* क्रोधसंरक्तलोचनः इति (ग) ।

† हनिष्यामीत्यरातीन् स इति (ख), (ग), (घ) ।

‡ प्रदक्षिणीकृत्य पुनः इति (क), (ख) ।

§ स्वस्य गुरवे इति (ख) ।

¶ तेनैव मुनिना वाप्यं इति (क) । खड्गं वज्रोपमं धनु. इति (ग) । तस्मादेव मुनेराप खड्गं वज्रोपमं धनुरिति (ख) ।

‖ स सूरः परिपन्थिन इति (ग), एकेनैव तु वाणेन स सूरः परिपन्थिन इति (ख) ।

तच्चापमुक्तबाणाग्निसन्तप्तास्ते ह्यरातयः।
केचिद्विनष्टाः संत्रस्तास्तथा चान्ये प्रदुद्रुवुः॥ ३४॥
केचिद्विकीर्णकेशाश्च वल्मीकोपरि संस्थिताः।
तृणान्यभक्षयन् केचित्* नग्नाश्च विविशुर्जलम्॥ ३५॥
शकाश्च यवनाश्चैव तथा चान्ये महीभृतः।
तद्गुरुं शरणं जग्मुर्वशिष्ठं प्राणलोलुपाः॥ ३६॥
जितक्षितिर्बाहुपुत्रो रिपून् गुरुसमीपगान्।
चारैर्विज्ञातवान् सद्यः प्रपेदे गुरुसन्निधिम्॥ ३७॥
तमागतं बाहुसुतं निशम्य
मुनिर्वशिष्ठः शरणागतांस्तान्।
त्रातुञ्च शिष्याभिमतञ्च कर्त्तुं
विचारयामास तदा क्षणेन॥ ३८॥
चकार पार्थिकान्मुण्डाञ्जवनान् लम्बमूर्द्धजान्।
अन्यांश्च श्मश्रुलान्मुण्डानन्यान्वेदबहिष्कृतान्॥ ३९॥
वशिष्ठमुनिना तेन हतप्रायान्निरीक्ष्य सः।
प्रहसन्नाह† सगरस्तं गुरुं तपसां निधिम्॥ ४०॥

सगर उवाच।

भो भो गुरो दुराचारानेतान्रक्षसि किं वृथा।
सर्व्वथाऽहं हनिष्यामि मद्राष्ट्र‡हरणोद्यतान्॥ ४१॥

---

* तृणान्यभक्षन् केचित्तु इति (क), (घ)।

† प्राह इति (ग)।

‡ मद्राज्य इति (ग)।

दृष्ट्वा तु य उपेक्षेत धर्म्मस्य* परिपन्थिनः ।
स एव सर्व्वनाशाय हेतुभूतो न संशयः ॥ ४२ ।
बाधन्ते प्रथमं मत्ता दुर्ज्जनाः सकलं जगत् ।
तएव बलहीनाश्चेद्भजन्तेऽत्यन्तसाधुताम् ॥ ४३ ।
अहो मायाकृतं कर्म्म खलाः कल्मषचेतसः ।
तावत्कुर्व्वन्ति कार्पण्यं यावत्स्यात्प्रबलं बलम् ॥ ४४ ।
दासभावञ्च शत्रूणां वारस्त्रीणाञ्च सौहृदम् ।
साधुभावञ्च सर्पाणां† श्रेयस्कामी न विश्वसेत् ॥ ४५ ।
प्रहासं कुर्व्वते पूर्व्वं यान्दन्तान्दर्शयन् खलाः‡ ।
तानेव दर्शयन्त्याशु स्वसामर्थ्यविपर्य्यये ॥ ४६ ।
पिशुना जिह्वया पूर्व्वं परुषं ह्यवदन् यया ।
अतीव करुणं वाक्यं वदन्त्येव तयाऽबलाः§ ॥ ४७ ।
श्रेयस्कामी गुरोणा¶ यस्तु नीतिशास्त्रार्थकोविदः ।
साधुत्वं दासभावञ्च खलानां नैव विश्वसेत् ॥ ४८ ।

---

* स्वधर्म्म इति (ख) ।

† दर्पाणां इति (घ) ।

‡ यानदन्तान्दशस्मितान् इति (क) ।

§ (ग) पुस्तके एतच्छ्लोकीय "यया" "तया" स्थाने यथाक्रमं "यथा" "तथा" वर्त्तते ।

¶ गुरवस्तु इति (घ) ।

मा कुरुष्व मनःप्रीतिं दुर्ज्जने प्रणतिङ्गते ।
अवलम्ब्य खलाः कोपादाहरन्त्येव जीवनम्* ॥ ४९ ।
दुर्ज्जनं प्रणतिं यातं, मैत्रं कैतवशीलिनम् ।
दुष्टाञ्च भार्य्यां† विश्वस्तो मृत एव न संशयः ॥ ५० ।
मा रक्ष तस्मादेतान्वै गोरूपान् व्याघ्रकर्म्मिणः ।
हत्वैतानखिलान् शत्रून्‡ त्वत्प्रसादान्मही भुजे ॥ ५१ ।
वशिष्ठस्तद्वचः श्रुत्वा मनसि प्रीतिमाप्तवान् ।
कराभ्यां सगरस्याङ्गं स्पृशन्निदमभाषत ॥ ५२ ।

वशिष्ठ उवाच ।

साधु साधु महाभाग सत्यमात्थ§ न संशयः ।
तथाऽपि मद्वचः श्रुत्वा परां शान्तिं लभस्व तत् ॥ ५३ ।
मयैता निहताः पूर्व्वं तत्प्रतिज्ञाविरोधिनः ।
हतानां हनने कीर्त्तिः का समुत्पत्स्यते¶ तव ॥ ५४ ।
पृथ्वीश जन्तवः सर्व्वे कर्म्मपाशेन यन्त्रिताः ।
तथाऽपि पापैर्निहताः|| किमर्थं तान् हनिष्यसि ॥ ५५ ॥

---

* (ग) पुस्तके श्लोकोऽयं—"मार्दव सुमन.प्रीतिं दुर्ज्जने प्रणतिङ्गते । अवलम्ब्य तुखां कोपादाहरत्येव जीवनम्"—इत्येवं पठितः ।

† भार्य्यां सजारां इति (ग), (घ) ।

‡ सर्व्वान् इति (ग) ।

§ सत्यमाह न संशयः इति (घ) ।

¶ समुत्पद्यते इति (क), (घ) ।

|| निहतान् इति (ग) ।

देहस्तु पापजनितः पूर्व्वमेवैनसा हतः।
आत्मा ह्यभेद्यः पूर्णत्वा*च्छास्त्राणामेष निर्णयः॥ ५६।
स्वकर्म्मफलभोगानां हेतुमात्रा हि जन्तवः।
कर्म्माणि दैवमूलानि दैवाधीनमिदं जगत्॥ ५७।
तस्माद्दैवं हि साधूनां रक्षिता दुष्टशिक्षिता।
ततो नरैरस्वतन्त्रैः किं कार्य्यं साध्यते वद॥ ५८।
शरीरं पापसम्भूतं पापेनैव प्रवर्द्धते†।
पापमूलमिदं ज्ञात्वा कथं हन्तुं समुद्यतः॥ ५९।
आत्मा शुद्धोऽपि देहस्थो देहीति प्रोच्यते बुधैः।
तस्मादिदं वपुर्भूप‡ पापमूलं न संशयः॥ ६०।
पापमूलं वपुर्हन्तुः का कीर्त्तिस्तव बाहुज।
भविष्यतीति निश्चित्य§ तान्न हिंस ततः परम्॥ ६१।

सूत उवाच।

इति श्रुत्वा गुरोर्वाक्यं विरराम स कोपतः।
स्पृशन् करेण सगरं ननन्द च मुनिस्तदा॥ ६२।

---

* पूर्णत्वादिति (क), (घ)।

† प्रवर्त्तते इति (घ)।

‡ पुनर्भूय इति (घ)।

§ निश्चित्यैतान् इति (ग)।

अथाथर्व्वनिधि*स्तस्य सगरस्य महात्मनः।
राज्याभिषेकं कृतवान्मुनिभिः सह सुव्रतैः॥ ६३॥
भार्य्याद्वयञ्च तस्यासीत्केशिनी सुमतिस्तथा।
कौशिकस्य† विदर्भस्य तनये मुनिसत्तमाः॥ ६४॥
राज्ये प्रतिष्ठितं श्रुत्वा‡ मुनिरौर्व्वस्तपोनिधिः।
वनादागत्य राजानं सम्भाष्य स्वाश्रमं ययौ॥ ६५॥
कदाचित्तस्य भूपस्य भार्य्याभ्यां प्रार्थितो मुनिः।
वरं ददावपत्यार्थमौर्व्वो भार्गवमन्त्रवित्॥ ६६॥
और्व्वः संप्रार्थितस्ताभ्यां परमेण समाधिना।
केशिनीं सुमतिञ्चैव प्रोक्तवान् हर्षयन्मुनिः॥ ६७॥

मुनिरुवाच।

एका वंशधरं पुत्रमन्या षड्युतानि च।
यस्याश्च§ यदभिमतं तदाशु व्रियतामिति॥ ६८॥
केशिन्येकसुतं वव्रे वंशहेतुं विचक्षणा।
अन्या हि मूढ़ा पुत्राणां वव्रे षड्युतानि च॥ ६९॥
केशिन्येकसुतं लेभे असमञ्जससंज्ञकम्।
सुमत्याः षष्टिपुत्राणां सहस्राण्यभवन्मुने॥ ७०॥

---

* अथाथर्व्वविदः इति (ग)।

† काश्यपस्य इति (ग), (घ)।

‡ दृष्ट्वा इति (ग), (घ)।

§ यथा च यदभिप्रेतं इति (ग), यस्याश्च यदभिप्रेतं इति (क)।

असमञ्जसनामा तु बालत्वेनाऽपि सत्तमाः ।
असमञ्जसकर्म्माणि चकारोन्मत्तपण्डितः ॥ ७१ ।
तं दृष्ट्वा सागराः सर्व्वे ह्यासन्दुर्व्वृत्तचेतसः ।
तद्बालभावकर्म्मेति* मेने बाहुसुतो नृपः ॥ ७२ ।
अहो कष्टतरा लोके दुर्ज्जनानां हि सङ्गतिः ।
कारुकैस्ताड्यते वह्निरयःसंयोगमात्रतः ॥ ७३ ।
अंशुमान्नाम तनयो जज्ञे वै ह्यसमञ्जसः ।
सत्यज्ञो गुणवान्धर्म्मी पितामहहिते रतः ॥ ७४ ।
दुर्व्वृत्ताः सागराः सर्व्वे लोकोपद्रवकारिणः ।
अनुष्ठानवतां नित्यमन्तराया भवन्ति ते ॥ ७५ ।
हुतानि यानि यज्ञेषु हवींषि विधिवद्द्विजैः ।
बुभुजुस्तानि सर्व्वाणि निराकृतदिवौकसः ॥ ७६ ।
स्वर्गादाहृत्य सततं रम्भाद्यप्सरसः स्त्रियः ।
विमानिताः सागरैस्तैर्बलात्कारकचग्रहैः ॥ ७७ ।
पारिजातादिवृक्षाणां पुष्पाण्यादाय ते खलाः ।
स्वशरीराण्युपस्कुर्व्वन्मद्यपानपरायणाः† ॥ ७८ ।
आजह्रुः साधुवित्तानि सर्व्वधर्म्माननाशयन् ।
पित्रैव योद्धुमारब्धा बलिनोऽत्यन्तपापिनः ॥ ७९ ।

---

* तं बालभावकर्त्तेति (क) ।

† मद्यपानरताः सदा इति (ग) ।

एतद्दृष्ट्वाऽतिदुःखार्त्ता देवा इन्द्रादयस्तथा* ।
विचारं परमं चक्रुरेतेषां नाशहेतवे ॥ ८० ॥
निश्चित्य विबुधाः सर्व्वे पातालान्तरगोचरम् ।
कपिलं विष्णुसदृशं ययुः प्रच्छन्नरूपिणम् ॥ ८१ ॥
ध्यायन्तं निर्म्मलं विष्णुं परानन्दैकरूपिणम् ।
प्रणम्य दण्डवद्भूमौ तुष्टुवुस्त्रिदशास्तदा ॥ ८२ ॥

देवा ऊचुः ।

नमस्तपोनिधे तुभ्यं त्यक्तरागादिशालिने ।
नररूपपरिच्छन्नविष्णवे जिष्णवे नमः ॥ ८३ ॥
नमः परेशभक्ताय लोकानुग्रहहेतवे ।
संसाराऽरण्यदावाग्निज्ञानसम्पन्न ते नमः ॥ ८४ ॥
महते वीतकामाय तुभ्यं भूयो नमो नमः ।
सागरैर्दुःखितानस्मान्त्रायस्व शरणागतान् ॥ ८५ ॥
इति स्तुतः कपिलर्षिः सर्व्वशास्त्रविशारदः ।
उवाच हर्षयन्देवान्यथावत्परिपूजितान् ॥ ८६ ॥

कपिल उवाच ।

ये नाशं तरसा यान्ति सम्पदायु†र्यशोबलैः ।
त एव लोकान् बाधन्ते नात्राश्चर्य्यं सुरोत्तमाः ॥ ८७ ॥

---

* तदा इति (ग) ।

† सम्पदाद्यै. इति (ग) ।

यस्तु बाधितुमुद्युक्तो जनान्निरपराधिनः ।
तं विद्यात्सर्व्वलोकेषु पापभोगरतं बुधाः ॥ ८८ ।
कर्म्मणा मनसा वाचा यस्त्वन्यान् बाधते सदा ।
तं हन्ति दैवमेवाशु नाऽत्र कार्य्या विचारणाः ॥ ८९ ।
आयुःसन्तानतेजोभिर्यः शीघ्रं नाशमेष्यति ।
स बाधते जन सर्व्वमिति सन्तो वदन्ति हि ॥ ९० ।
अहोभिरल्पैरेवाशु तेषां नाशो भविष्यति ।
तस्माद्दुःखं परित्यज्य गच्छध्वं नाकमुत्तमाः ॥ ९१ ।
इत्युक्ता मुनिना तेन कपिलेन महात्मना ।
प्रणम्य तं यथान्यायं गता नाकं दिवौकसः ॥ ९२ । *
अत्रान्तरे तु सगरो वशिष्ठाद्यैर्महर्षिभिः ।
आरेभे हयमेधाख्यं यज्ञं कर्त्तुमनुत्तमम् ॥ ९३ ।
तं यज्ञयोजितं सप्तिमपहृत्य सुरेश्वरः ।
पाताले स्थापयामास कपिलो यत्र तिष्ठति ॥ ९४ ।
गूढ़विग्रहशक्रेण† हृतमश्वन्तु सागराः ।
अज्ञात्वा बभ्रमुर्लोकान् भूरादीन् सप्त विस्मिताः ॥ ९५ ।
अदृष्टसप्तयस्तत्र पाताले गन्तुमुद्यताः ।
चख्नुः‡र्महीतलं सर्व्वं त्वेकैकयोजनं पृथक् ॥ ९६ ।

---

(९१) (९२) एतौ श्लोकौ (क) पुस्तके न स्तः ।

† गूढ़विग्रहशक्रेण इति (घ) ।

‡ चेरु. इति (क), (घ) ।

मृत्तिकां खनितां काश्चिदब्धितीरे समाकिरन्।
एकैकयोजनोद्भूतां प्रत्येकं ते ह्यतञ्चयन्॥ ९७।
तद्द्वारेण गताः सर्व्वे पातालं* सगरात्मजाः।
विचेष्टन्तो† हयं तत्र ययुः शीघ्रं रसातलम्॥ ९८।
तत्राऽपश्यन्महात्मानं कोटिसूर्य्यसमप्रभम्।
कपिलं ध्याननिरतं सन्निच्चैव तदन्तिके॥ ९९।
प्रमत्ताः पापनिरताः सागरा अविवेकिनः‡।
सर्व्वे ते सहसा ह्येत्य मुनिं बन्धुं समुद्यताः§॥ १००।
हन्यतां हन्यतामेष वध्यतां वध्यतामिति।
गृह्यतां गृह्यतामाशु इत्यूचुस्ते परस्परम्।¶ १०१।
कृत्वाश्वं साधुवदसौ वकध्यानपरायणः।
आडम्बरमहो लोके कुर्व्वन्ति सततं खलाः।‖
इत्युक्तवन्तो** जहसुः कपिलं ते मुनीश्वरम्॥ १०२।
समस्तेन्द्रियसम्मोहं नियम्यात्मानमात्मनि।
पश्यन्मुनिवरस्तेषां तत्कर्म्मज्ञोऽभवन्नहि††॥ १०३।

---

* पाताले इति (घ)।

† विचेष्टन्त इति आर्षं, विचेष्टमाना इति साधु।

‡ अतिपापिनः इति (क)।

§ तं मुनिं बन्धुमुद्यताः इति (क)। एतदर्द्धं (घ) पुस्तके नास्ति।

¶ एष श्लोकश्च (घ) पुस्तके नास्ति।

‖ (क)(ग) पुस्तकयोः परस्वं ध्यायते येन ध्यायते परजीवनम् इत्यधिकमस्ति।

** इत्युच्चरन्तः इति (क)।

†† तत्कर्म्मज्ञानवान्नहि इति (क)।

आसन्नमृत्यवस्तन्तु विनष्टमतयो मुनिम् ।
पद्भिः संताड़यामासुर्बाहुञ्च जगृहुः परे ॥ १०४ ।
परित्यक्तसमाधिस्तु तान्दृष्ट्वा विस्मितो मुनिः* ।
उवाच भावगम्भीरं लोकोपद्रवकारिणः ॥ १०५ ।
ऐश्वर्य्यमदमत्तानां क्षुधितानाञ्च कामिनाम् ।
अहङ्काररतानाञ्च विवेको नहि जायते ॥ १०६ ।
निधेराधारमात्रेण मही ज्वलति सर्व्वदा ।
तमेव मानवो भूत्वा ज्वलतीति† किमद्भुतम् ॥ १०७ ।
किमत्र चित्रं सुजनान् बाधन्ते यदि दुर्ज्जनाः ।
महीरुहांस्तटरुहान् पातयन्ति नदीरयाः ॥ १०८ ।
यत्र श्रीर्यौवनं वाऽपि परदारोऽपि‡ तिष्ठति ।
तत्र सर्व्वान्धता नित्यमौख्यञ्चाऽपि प्रजायते ॥ १०९ ।
अहो कनकमाहात्म्यं व्याख्यातुं केन शक्यते ।
नामसाम्यादहो चित्रं धूस्तूरोऽपि मदप्रदः ॥ ११० ।
भवेद्यदि खलस्य श्रीः सैव लोकविनाशिनी ।
यथा सखाग्नेः पवन उरगस्य पयो यथा ॥ १११ ।
अहो धनमदान्धस्तु पश्यन्नपि न पश्यति ।
यदि पश्यत्यात्महितं स पश्यति न संशयः ॥ ११२ ।

---

* तान्दृष्ट्वान् प्रेक्ष्य विस्मितः इति (क), (ग) ।

† तमेव मानवा भूत्वा ज्वलन्तीह इति (ग), ज्वलतीव इति (घ) ।

‡ परदारापि तिष्ठति इति (ग) । परदारा अपि तिष्ठन्ति इति साधु, दारशब्दस्य पुंस्त्वं बहुत्वञ्च ।

इत्युक्ता कपिलः क्रुद्धो नेत्रादग्निं विसृष्टवान् ।
स वह्निः सागरान्सर्व्वान्भस्मसादकरोत्तदा* ॥ ११३ ।
तन्नेत्रजानलं† दृष्ट्वा पातालतलवासिनः ।
अकालप्रलयं मत्वा चुक्रुशुः सकला जनाः‡ ॥ ११४ ।
तदग्नितापिताः सर्व्वे दन्दशूकाश्च राक्षसाः ।
सागरं विविशुः सर्व्वे सतां कोपो हि दुःसहः ॥ ११५ ।
अथ तस्य महीपस्य समागम्याध्वरन्तदा ।
नारदः सागरायैतद्यथावृत्तं न्यवेदयत् ॥ ११६ ।
एतत्सर्व्वं समाकर्ण्य सगरः सर्व्ववित्प्रभुः ।
दैवेन शिक्षिता दुष्टा इत्युवाचातिहर्षितः ॥ ११७ ।
माता वा जनको वाऽपि भ्रातरस्तनयोऽपि वा ।
अधर्म्मं कुरुते नित्यं स एव रिपुरुच्यते ॥ ११८ ।
यः स्वधर्म्मेष्वनिरतः सर्व्वलोकविरोधकृत् ।
तं रिपुं परमं विद्याच्छास्त्राणामेष निर्णयः ॥ ११९ ।
सगरः पुत्रनाशेऽपि न कदाचिच्छुशोच ह ।
दुर्व्वृत्तनिधनं यस्मात्सतामुत्साहकारणम् ॥ १२० ।
यज्ञेष्वनधिकारत्वादपुत्राणां महीपतिः ।
असमञ्जसपुत्रं तं पौत्रं जग्राह पुत्रवत् ॥ १२१ ।
अंशुमन्तं महावीर्य्यं सुधियं वाग्विदां वरम् ।

---

* क्षणात् इति (ग) ।

† यज्ञेवस्याऽनलं इति (क), (घ) ।

‡ शोकलालसाः इति (ग) ।

युयोज सारविद्रूपो ह्यश्वानयनकर्म्मणि ॥ १२२ ।
स गत्वा तद्विलद्वारा दृष्ट्वा तं मुनिपुङ्गवम् ।
कपिलं तेजसां राशिं संपूज्य च ननाम च* ॥ १२३ ।
कृताञ्जलिपुटो भूत्वा विनयात्† पार्श्वसंस्थितः ।
अर्घ्याादिपूजितं शान्तं मुनिमेतदुवाच सः ॥ १२४ ।

अंशुमानुवाच ।

दौःशील्यं यत्कृतं ब्रह्मन्मत्तातैस्तत्क्षमस्व मे‡ ।
परोपदेशनिरताः क्षमासारा हि साधवः ॥ १२५ ।
दुर्ज्जनेष्वपि सत्त्वेषु दयां कुर्व्वन्ति साधवः§ ।
न हि संहरते ज्योत्स्नां चन्द्रश्चाण्डालवेश्मनि ॥ १२६ ।
बाध्यमानोऽपि सुजनः सर्व्वेषां हितकृद्भवेत् ।
ददाति परमां तुष्टिं भुज्यमानोऽमरैः शशी ॥ १२७ ।
दारितश्छेदितो¶ वापामोदेनैव तु|| चन्दनः ।
सौरभं कुरुते सर्व्वं तथैव सुजनो जनः ॥ १२८ ।
क्षमाशान्त्या तपसाचारैः सद्गुणज्ञा** मुनीश्वराः ।

---

* सः इति (ग) ।
† विनयी इति (ग) ।
‡ क्षमस्व च इति (क), (घ) ।
§ एतदर्द्धं (क) पुस्तके नास्ति ।
¶ दारितः सूदितः इति (क), दारितः खोदितः इति (ख) ।
|| मोदेनैव च इति (क), मोदते चैव इति (ख), एष पाठो न युक्तः ।
** स्वगुणस्था इति (ख) ।

सञ्जाताः शासितुं लोकांस्तान्विदुः पुरुषोत्तमान्*॥ १२९ ।
नमो ब्रह्मन्मुने तुभ्यं नमस्ते ब्रह्ममूर्त्तये ।
नमो ब्रह्मण्यशीलाय ब्रह्मध्यानपराय ते† ॥ १३० ।
इति स्तुतो मुनिस्तेन प्रसन्नवदनस्तदा ।
वरयेति वरं प्राह प्रसन्नोऽस्मीति सादरम् ॥ १३१ ।
एवमुक्ते मुनौ तस्मिन्नंशुमान्प्रणिपत्य तम् ।
प्रापयास्मत्पितॄन् ब्रह्मलोकमित्यभ्यभाषत ॥ १३२ ।
ततस्तस्योक्तिसन्तुष्टो मुनिस्तं प्राह सादरम्‡ ।
गङ्गामानीय पौत्रस्ते नयिष्यति न संशयः ॥ १३३ ।
त्वत्पौत्रेण समानीता गङ्गा पुण्यजला नदी ।
कृते तान् हृतपापान्वै नयिष्यति परं पदम् ॥ १३४ ।
प्रापयेमं हयं पुत्र पितामहमखोचितम् ।
भव धर्म्मपरो नित्यं तव श्रेयो भविष्यति§ ॥ १३५ ।
इत्युक्तस्तु¶ प्रणम्याशु हयमादाय सत्वरः ।
सगरं तं पुनः प्राप्य यथावृत्तं न्यवेदयत् ॥ १३६ ।
जज्ञे ह्यंशुमतस्तस्माद्दिलीप इति विश्रुतः ।
तस्माद्भगीरथो जातो गङ्गामाहृतवान् हि यः ॥ १३७ ।

---

* त्वं विभुः परमेश्वरः इति (ख) ।

† (ख) पुस्तके एतच्छ्लोकादनन्तरं "सूत उवाच" इति पाठो वर्त्तते ।

‡ (ख) पुस्तके एतदनन्तरं "कपिल उवाच" इति पाठो वर्त्तते ।

§ नित्यमतः श्रेयो भविष्यति इति (ख) ।

¶ इत्युक्तः स प्रणम्याशु इति (ख) ।

भगीरथाऽन्वये जातः सुदासाख्यो महाबली।
तस्य पुत्रो मित्रसहः सर्व्वलोकेषु विश्रुतः॥ १३८।
वशिष्ठशापतः प्राप्तः सौदासो राक्षसीं तनुम्।
गङ्गाविन्द्वभिषेकेन कथं भूयो विमोच्चितः* ॥ १३९।

इति श्रीबृहन्नारदीयपुराणेऽष्टमोऽध्यायः।

## अथ नवमोऽध्यायः।

ऋषय ऊचुः।

प्राप्तः* कथं वशिष्ठेन सौदासो मुनिसत्तम।
गङ्गाविन्द्वभिषेकेण कथं भूयो विमोचितः† ॥ १।
सर्व्वमेतदशेषेण सूत नो वक्तुमर्हसि।
शृखतां वदताञ्चैव गङ्गा पापप्रणाशिनी‡ ॥ २।

सूत उवाच।

सौदासः सर्व्वधर्म्मज्ञः सर्व्वज्ञो गुणवान् शुचिः।

---

* विमुक्तिं प्राप्तवान् पुनः इति (ख)।

---

* प्राप्त इति (घ)।
† विमोचितः इति (क), (घ)।
‡ आख्यानं वदताञ्चैव गङ्गा पापविनाशिनी इति (घ)।

बुभुजे पृथिवीमेतां धर्म्मैकरसनिष्ठितः* ॥ ३ ।
सगरेण यथापूर्व्वं महीयं सप्तसागरा† ।
रक्षिता तेन विधिवत्तथा धर्म्माविरोधिना‡ ॥ ४ ।
पुत्रपौत्रसमायुक्तः सर्व्वैश्वर्य्यसमन्वितः ।
त्रिंशदब्दसहस्राणि बुभुजे पृथिवीं पुरा§ ॥ ५ ।
सौदास एकदा राजा मृगयाभिरतिर्वनम् ।
विवेश सबलः सम्यक् शोधितं ह्याप्तमन्त्रिभिः¶ ॥ ६ ।
वने स विचरन्|| राजा निसूदन् मृगसञ्चयान् ।
आजगाम नदीं रेवां मध्याह्नेऽतिपिपासितः** ॥ ७ ।
सुदासतनयस्तत्र कृत्वा कर्म्माण्यतन्द्रितः ।
भुक्त्वा च मन्त्रिभिः सार्द्धं निशां तत्र निनाय सः ॥ ८ ।
ततः प्रातः समुत्थाय कल्यं कर्म्म समाप्य च ।
बभ्राम मन्त्रिभिः सार्द्धं मृगयाभिरतिर्वने†† ॥ ९ ।

---

* धर्म्मैकरसनिष्ठिताम् इति (ग) । धर्म्मनिष्कर्षसस्थिताम् इति (ख) ।

† सगरेण मही सर्व्वा यथेयं सप्तसागरा इति (क), (घ) । धरित्री सप्तसागरा इति (ख) ।

‡ धर्म्माविरोधिनी इति (ग) ।

§ पृथिवी युवा इति (ख) ।

¶ रोधितं ह्याप्तबन्धुभि इति (क) । शोचितं ह्याप्तमन्त्रिभिः इति (ख) । शोभितो ह्याप्तबन्धुभिः इति (घ) ।

|| व्यचरत् इति (घ) ।

** अतिमात्रपिपासितः इति (ख) ।

†† श्लोकोऽयं (ख) पुस्तके नास्ति।

वनाद्वनान्तरं गच्छन्नेक एव महीपतिः* ।
आकर्णाकृष्टबाणः सन्† कृष्णसारं समन्वयन् ।
एकदाऽदृष्टसैन्योऽसावनुगच्छन् मृगं रुरुम् ।
व्याघ्रद्वयं गुहासंस्थं दृष्टवान्सुरते रतम् ॥ १०।११ ।
रुरुमार्गं परित्यज्य व्याघ्रयोः सम्मुखे‡ ययौ ।
पातयामास तत्रैकं शरेण शरमन्त्रवित् ॥ १२ ।
पतमानो§ऽभवद्व्याघ्रो योजनत्रिंशदायतः ।
युगान्तमेघनिर्घोषो राक्षसो घोरविग्रहः ॥ १३ ।
पतितं राक्षसं वीक्ष्य व्याघ्रोऽन्यो वेगसंयुतः¶ ।
प्रतिक्रियां करिष्यामीत्युक्त्वा चान्तर्दधे ततः ॥ १४ ।
राजाऽपि भयसंविग्नो दृष्टः सैन्येन तद्वने‖ ।
कथयन्मन्त्रिणां सर्व्वं स्वां पुरीं संन्यवर्त्तत ॥ १५ ।
स राजा स्वपुरं प्राप्य सर्व्वालङ्कारसंयुताम्** ।
धर्म्मतः पृथिवीमेतां शशास हृदि शङ्कितः ॥ १६ ।
गते बहुतिथे काले अश्वमेधमखं नृपः ।

---

* एकदा स महीपतिः इति (ध) ।

† आकर्णाकृष्टबाणश्च इति (ग) । कृष्णसारं समन्वयात् इति (ख) ।

‡ सम्मुखं इति (क), (ख) । संयुगे इति (ग) ।

§ पतमान इति आर्षं, पतन् पात्यमानो वा साधुः ।

¶ व्याघ्रश्चान्यो वेगेन संयुतः इति (ख) ।

‖ राजाऽपि सभयोद्विग्नो दृष्टः सैन्येन सत्त्ववान् इति (घ) । सैन्यैर्दृष्टस्तु तद्वने इति (ख) ।

** सर्व्वालङ्कारसंयुतः इति (क), (ख), (घ) ।

आरेभे परमप्रीतो वशिष्ठाद्यैर्मुनीश्वरैः ॥ १७ ।
तत्र ब्रह्मादिदेवानां हविर्दत्त्वा यथाविधि* ।
समाप्य यज्ञं निष्क्रान्तो† वशिष्ठः स्नानकारणात् ॥ १८ ।
अत्रान्तरे राक्षसोऽसौ नृपेणानेन बाधितः‡ ।
कर्त्तुं प्रतिक्रियामस्मै ह्यायातः§ क्रोधमूर्च्छितः ॥ १९ ।
सुरते क्रियमाणे तु सुरतां¶ हतवान्नृपः ।
तेनैव दुःखितो दैत्यः समायातोऽतिकोपनः ॥ २० ।

स राक्षसस्तस्य गुरौ प्रयाते
वशिष्ठवेशन्तु तथैव कृत्वा‖ ।
राजन्समासाद्य भोजनार्थं
मांसं समेष्याम्यहमित्युवाच ॥ २१ ।
भूयः समास्थाय स सूदवेशं
राज्ञे ददौ मानुषमांसमाशु ।
स्थितश्च राजाऽपि हिरण्यपात्रे
धृत्वा गुरोरागमनं प्रतीक्ष्य ॥ २२ ।

---

* हविर्दत्तं यथाविधि इति (घ) । (ख) पुस्तके श्लोकस्य प्रथमात्पादद्वयं नास्ति ।

† समाप्तयज्ञो निष्क्रान्तः इति (घ) ।

‡ नृपबाणेन बाधितः इति (घ) । नृपेणानेन यो हतः इति (ख) ।

§ प्रयातः इति (क), (घ), ह्यागत इति (ख) ।

¶ सुरतिमिति (क), (ग), युवतिमिति (ख) । अत्र न पूर्व्वापरसङ्गतिः, पूर्व्वत्र हतस्य पुंस्त्वमुक्तमत्र स्त्रीत्वमिति ।

‖ धृत्वा इति (क), (घ), तदेव धृत्वा इति (ख) ।

तन्मांसं हेमपात्रस्थं सौदासो विनयान्वितः ।
समागताय गुरवे ददौ तस्मै स सादरम् ॥ २३ ।
तद्दृष्ट्वा* चिन्तयामास किमेतदिति विस्मितः ।
अपश्यन्मानुषं मांसं परमेण समाधिना ॥ २४ ।
अहोऽस्य राज्ञो दौःशील्यमभोज्यं दत्तवान्ममं† ।
इति विस्मयमापन्नः प्रमन्युरभवन्मुनिः‡ ॥ २५ ।
अभोज्यं मद्विधानाञ्च§ दत्तं यस्मात्त्वितीश्वर ॥
तस्मात्तवाऽपि भवतु एतदेव हि भोजनम् ॥ २६ ।
नृमांसं रक्षसामेव भोज्यं दत्तं त्वया मम ।
तथाहि राक्षसत्वं त्वं तदाहारोचितं व्रजम्¶ ॥ २७ ।
इति शापं ददत्यस्मिन्सौदासो भयविह्वलः ।
आज्ञप्तो भवतैवेति‖ सङ्कल्पोऽस्य व्यजिज्ञपत् ॥ २८ ।
भूयश्च चिन्तयामास वशिष्ठस्तेन चोदितः ।
रक्षसा वञ्चितं भूपं ज्ञातवान् ज्ञानचक्षुषा ॥ २९ ।

---

* दृष्ट्वा तदिति (घ) ।

† मामभोज्य प्रदत्तवानिति (ग) ।

‡ समन्युरभवन्मुनि' इति (ख) । अत्र श्लोकादेतस्मादनन्तरं वशिष्ट उवाच इति पाठश्च वर्त्तते ।

§ अभोज्यं मद्विधानां यदिति (ग) ; मद्विधानार्थमिति (क) ।

¶ तदाहारोचितं परमिति (क), तथाहि राक्षसश्च त्वं तदाहारी भविष्यसि इति (ख) ।

‖ भवता चेति इति (घ) ।

राजाऽपि जलमादाय वशिष्ठं शप्तुमुद्यतः।
अविवेकी वृथा शापमुत्ससर्ज्ज मयीति सः* ॥ ३० ।
गुरुं शप्तुं समुद्यन्तं राजानं क्रोधमूर्च्छितम्।
मदयन्तीति विख्याता प्रिया तस्येत्युवाच तम् ॥ ३१ ।
मदयन्त्युवाच।†
भो भोः क्षत्रियदायाद कोपं संहर्त्तुमर्हसि‡।
त्वया यत्कर्म्म भोक्तव्यं तत्प्राप्तं नान्यदुत्तम§ ॥ ३२ ।
गुरुं हूंकृत्य हूंकृत्य यो वदेन्मूढधीर्नरः।
अरण्ये निर्ज्जने देशे भवति ब्रह्मराक्षसः ॥ ३३ ।
जितेन्द्रियास्तपोनिष्ठा गुरुशुश्रूषवस्तथा।
प्रयान्ति ब्रह्मसदनमिति शास्त्रेषु निश्चितम् ॥ ३४ ।¶
तयोक्तो भूपतिः कोपं त्यक्त्वा भार्य्यां ननन्द च।
जलं कुत्र क्षिपामीति‖ चिन्तयामास चात्मना ॥ ३५ ।
तज्जलं यत्र संसिक्तं भवेत्तद्भस्म निश्चितम्।
इति मत्वा जलं तत्तु स्वपादावभ्यसेचयत् ॥ ३६ ।
तज्जलस्पर्शमात्रेण पादौ कल्मषतां गतौ।

---

* मयीति च इति (घ)।

† एष पाठः (ग) पुस्तके नास्ति।

‡ संहर्त्तुमिच्छसि इति (क)।

§ नान्यदुत्तममिति (क), (ख)।

¶ अतः पर (ख) पुस्तके सूत उवाच इति पाठोऽस्ति।

‖ जलं क्व प्रक्षिपामीति (ख)।

तदाप्रभृति लोकेऽस्मिन् स कल्माष इति श्रुतः* ॥ ३७ ॥
कल्माषपादो मतिमान् प्रियया शमितस्तदा† ।
मनसा भीतिमापन्नो ववन्दे चरणौ गुरोः‡ ॥ ३८ ॥
उवाच प्राञ्जलिर्भूत्वा विनयानयकोविदः ।
क्षमस्व भगवन्सर्व्वं नापराधः कृतो मया ॥ ३९ ॥
पुनश्चोवाच भूपालं मुनिर्निश्वस्य दुःखितः ।
आत्मानं गर्हयामास अविवेकपरायणम् ॥ ४० ॥
अविवेको हि सर्व्वासां परमं पदमापदाम्§ ।
विवेकरहितो लोके पशुरेव न संशयः ॥ ४१ ॥
राज्ञस्तु ज्ञानशून्यत्वादेतत्कर्म्मोचितं कृतम् ।
विवेकसहितोऽहं¶ वै महापापं समाचरम् ॥ ४२ ॥
विवेकनिरतो याति यो वा को वाऽपि निर्वृतिम् ।
विवेकरहितो याति यो वा कोवाऽप्यनिर्वृतिम्॥ ॥ ४३ ॥
प्रत्युवाच मुनिर्भूप**मित्युक्त्वात्मानमात्मना ।

---

* इति स्मृतः इति (क), (ग), (घ) ।

† शंसितस्तदा इति (ग), (घ) । आश्वासित इति (ख) । शासित इति (ङ) ।

‡ मुनेरिति (ग) ।

§ आपदां परमं पदमिति (घ) ।

¶ रहितोऽहमिति (क), (ख), (ग) ।

|| (ग), (ङ) पुस्तकयोः केवलं श्लोकार्द्धं पठितम् । यथा—"विवेकरहितो याति यो वा को वाऽप्यनिर्वृतिम् ॥" (ख) पुस्तके पूर्व्वार्द्धमात्रं पठितम् ।

** पुनर्भूपमिति (ख) । तत्र एतस्माच्छ्लोकार्द्धादनन्तरं वशिष्ठ उवाच इति पाठो वर्त्तते ।

नात्यन्तिकमेतदिति द्वादशाब्दं भविष्यति ॥ ४४ ।
गङ्गाविन्दुभिषिक्तस्तु त्यक्त्वा वै राक्षसीं तनुम्* ।
त्वं पुनारूपमापन्नो भोक्ष्यसे पृथिवीमिमाम्† ॥ ४५ ।
तद्विन्दुषेकसम्भूतज्ञानेन हतकल्मषः‡ ।
हरिसेवापरो भूत्वा परां शान्तिं गमिष्यसि§ ॥ ४६ ।
इत्युक्त्वा धर्म्मसम्पन्नो वशिष्ठः स्वाश्रमं ययौ ।
राजाऽपि दुःखसम्पन्नो राक्षसीं तनुमाश्रितः ॥ ४७ ।
क्षुत्पिपासाविशेषार्त्तो नित्यं क्रोधपरायणः ।¶
कृष्णपादद्युतिर्भीमो बभ्राम विजने वने ॥ ४८ ।
मृगांश्च विविधांस्तत्र मानुषांश्च सरीसृपान् ।
विहङ्गांश्च प्लवङ्गांश्च प्रमत्तस्तानभक्षयत् ॥ ४९ ।
अस्थिभिर्बहुभिर्विप्राः पीतरक्तकलेवरैः ।
रक्तान्त्रप्रेतकेशैश्च|| तेनासीद्भूर्भयङ्करा ॥ ५० ।
ऋतुत्रये** स पृथिवीं शतयोजनविस्तृताम् ।

---

* एतदर्द्धं (ग) पुस्तकेऽत्र नास्ति (४५) श्लोकादनन्तरमस्ति ।

† मेदिनीमिमामिति (ग)। अपूर्व्वरूपमापन्न इति (ङ) ।

‡ गतकल्मष इति (क), (ख) ।

§ शान्तिमवाप्सतीति (ख) । तत्रातः परं सूत उवाचेति पाठो वर्त्तते ।

¶ (घ) पुस्तके श्लोकार्द्धमात्र वर्त्तते । यथा—"क्षुत्पिपासार्द्दितो भीतो बभ्राम विजने वने ।"

|| रक्तात्तप्रेतरूपैश्चेति (क) ।

** ऋतुद्वये इति (क), (ग) ।

कृत्वा विदूषितां* पश्चाद्वनान्तरमगात्पुनः† ॥ ५१ ।
तत्राऽपि कृतवानित्थं नरमांसाशनः सदा ।
जगाम नर्म्मदातीरं मुनिसिद्धनिषेवितम् ॥ ५२ ।
विचरन्नर्म्मदातीरे सर्व्वलोकभयङ्करः ।
अपश्यत्कञ्चन मुनिं रमन्तं‡ प्रियया सह ॥ ५३ ।
क्षुधातपनसन्तप्त§स्तं मुनिं समुपाद्रवत् ।
जग्राह चातिवेगेन व्याघ्रो मृगशिशुं यथा ॥ ५४ ।
ब्राह्मणी स्वपतिं वीक्ष्य निशाचरकरस्थितम् ।
शिरस्यञ्जलिमाधाय प्रोवाच भयविह्वला ॥ ५५ ।

ब्राह्मण्युवाच ।

भो भोः क्षत्रियदायाद त्राहि मां भयविह्वलाम् ।
प्रियप्राणप्रदानेन सुसम्पूर्णमनोरथाम्¶ ॥ ५६ ।
नाम्ना मित्रसहस्त्वं हि रविवंशसमुद्भवः ।
न राक्षसस्ततोऽनाथां‖ पाहि मां विजने वने ॥ ५७ ।
या नारी भर्तृरहिता जीवन्त्यपि मृतोपमा ।
तथाऽपि बालवैधव्यं किं वक्ष्याम्यरिमर्द्दन ॥ ५८ ।

---

* कृत्वाऽस्थिभूषितामिति (घ), कृत्वाऽतिदूषितामिति (ख), (ङ) ।

† वनान्तरमुपागमदिति (ख) ।

‡ रमन्तमिति आर्षं, रममाणमिति साधु ।

§ क्षुधानलेन सतप्तः इति (ग), (ख) ।

¶ कुहि पूर्णमनोरथामिति (घ), असम्पूर्णमनोरथामिति (ख) ।

‖ सतीनाथ इति (घ) ।

न मातापितरौ जाने नाऽपि बन्धुं कथञ्चन।
पतिरेव परो बन्धुः परमं जीवनं मम॥ ५९।
भवान्वेत्त्यखिलान्धर्म्मान्योषितां वर्त्तनं तथा*।
त्रायस्व बन्धुरहितां बालाऽपत्यां जनेश्वर॥ ६०।
कथं जीवामि पतिना हीनाऽस्मिन् विजने वने।
दुहितृत्वं तव गता पाहि मां पतिदानतः॥ ६१।
प्राणदानात्परं दानं न भूतं न भविष्यति।
वदन्तीति† महाप्राज्ञाः प्राणदानं कुरुष्व मे॥ ६२।
इत्युक्त्वा राक्षसस्यास्य सा पपात पदद्वये।
पतिदानेन मां पाहि त्वत्सुताऽस्मि न संशयः॥ ६३।
इति संप्रार्थ्यमानोऽपि राक्षसो ब्राह्मणन्तु तम्‡।
अभक्षयत्कृष्णसारशिशुं व्याघ्रो यथा बलात्॥ ६४।
ततो विलप्य बहुधा तस्य पत्नी पतिव्रता।
पूर्व्वशापहतं दुष्टमशपत्क्रोधिता पुनः§॥ ६५।
मत्पतिं सुरतासक्तं यस्माद्धिंसितवान्बलात्।
तस्माद्यदा रतिं यासि तदा नाशमुपैष्यसि॥ ६६।
शप्त्वैवं ब्राह्मणी क्रुद्धा पुनः शापान्तरं ददौ।

---

* यथा इति (ग)।

† वदन्ति च इति (घ)।

‡ ब्राह्मण हतमिति (घ)।

§ (घ) पुस्तके एष श्लोकः परश्लोकस्य पूर्व्वार्द्धञ्च न दृश्यते। क्षोभिता पुनः इति (ख)।

राक्षसत्वं ध्रुवं तेऽस्तु मत्पतिं हतवान्यतः ॥ ६७ ।*
सोऽपि शापद्वयं श्रुत्वा तया दत्तं निशाचरः ।
प्रमन्युः प्राह विसृजन्मुखादङ्गारसञ्चयम् ॥ ६८ ।
दुष्टे कथं प्रदत्तासि† वृथा शापद्वयं मम ।
एकस्यैवाऽपराधस्य शापस्त्वेकस्तथोचितः ॥ ६९ ।
यस्माच्छप्ताऽसि दुष्टाग्ये मयि शापान्तरं ततः ।
पिशाचयोनिमद्यैव याहि पुत्रसमन्विता‡ ॥ ७० ।
इति शप्ता ब्राह्मणी सा पिशाचत्वं गता तदा ।
क्षुधार्त्ता सुस्वरं भीता रुरोदापत्यसंयुता ॥ ७१ ।
राक्षसश्च पिशाची च क्रोशन्तौ विजने वने ।
जग्मतुर्नर्म्मदातीरे वटं राक्षससेवितम् ॥ ७२ ।
उदासीनं गुरोः कृत्वा§ राक्षसीं तनुमाश्रितः ।
तत्रास्ते दुःखबहुलः¶ कश्चिल्लोकविरोधकृत् ॥ ७३ ।
राक्षसञ्च पिशाचीञ्च दृष्ट्वा स्ववटमागतौ ।
उवाच क्रोधबहुलो वटस्थो ब्रह्मराक्षसः ॥ ७४ ।

वटस्थराक्षस उवाच ।

किमर्थमागतौ भीमौ युवां मद्रूपधारिणौ ।

---

* (ख) पुस्तके एतस्माच्छ्लोकादनन्तरं सूत उवाच इति पाठो वर्त्तते ।

† दुष्टे कस्मात्प्रमत्तासीति (क), (घ), (ङ) । कस्मात्प्रदत्तासीति (ख) ।

‡ तत्रातः परं सूत उवाच इति पाठो वर्त्तते ।

§ उदासीनं गुरुं कृत्वा इति (घ) ।

¶ धर्म्मबहुल. इति (घ) ।

ईदृशौ केन पापेन जातौ तत्सम्यगुच्यताम् ॥ ७५ ।*
सौदासस्तद्वचः श्रुत्वा तया तेन च यत्कृतम् ।
तत्सर्व्वं कथयित्वाऽस्मै पश्चादेतदुवाच ह ॥ ७६ ।

सौदास उवाच ।

कस्त्वं भद्र महाभाग त्वया वै किं कृतं पुरा ।
सख्युर्म्ममातिस्नेहेन तत्सर्व्वं वक्तुमर्हसि ॥ ७७ ।
करोति वञ्चनं मित्रे यो वा को वा नराधमः ।
स हि पापफलं भुङ्क्ते युगानां कोटिकोटिषु† ॥ ७८ ।
नराणां सर्व्वदुःखानि क्षीयन्ते मित्रदर्शनात्‡ ।
तस्मान्मित्रेषु सुमतिर्न§ कुर्य्याद्वञ्चनं सदा ॥ ७९ ।
व्याधितस्य दरिद्रस्य वञ्चितस्यातिदुःखिनः¶ ।
मित्रस्य दर्शनादेव सर्व्वं दुःखं विनश्यति ॥ ८० ।
कल्माषपादेनेत्युक्तो वटस्थो ब्रह्मराक्षसः ।
उवाच प्रीतिमापन्नो धर्म्मवाक्यानि सत्तमाः‖ ॥ ८१ ।

---

* तत्सर्व्वं सम्यगुच्यतामिति (क) । (ख) पुस्तकेऽतः परं सूत उवाच इति पाठो वर्त्तते ।

† कोटिकोटिशः इति (घ)

‡ क्षीयन्ते न कदाचन इति (क) ।

§ मतिमान्न इति (ख) ।

¶ अतिदुःखित इति (ख), (ग), (घ) ।

‖ एतदर्द्धं (घ) पुस्तके नास्ति । (ख) पुस्तके श्लोकादस्मात्पूर्व्वं सूत उवाच इति पाठो वर्त्तते ।

वटस्थब्रह्मराक्षस उवाच* ।

अहमासं पुरा विप्रो मागधो वेदपारगः ।
सोमदत्त इति ख्यातो नाम्ना धर्म्मपरायणः ॥ ८२ ।
प्रमत्तोऽहं महाभाग विद्यया वयसा धनैः ।
उदासीनं गुरोः कृत्वा† प्राप्तवानीदृशीं दशाम् ॥ ८३ ।
न लभामि‡ सुखं किञ्चिन्निराहारोऽतिदुःखितः ।
तथापि भक्षिता विप्राः शतशोऽथ सहस्रशः ॥ ८४ ।
क्षुत्पिपासातुरो नित्यं मनस्तापेन पीड़ितः§ ।
जगत्त्रासकरो नित्यं मांसाशनपरायणः ॥ ८५ ।
गुर्व्ववज्ञा मनुष्याणां राक्षसत्वप्रदायिनी ।
मयैव दृष्टा सा वाक् ततो धीमान्न कारयेत् ॥ ८६ ।

सौदास उवाच¶ ।

गुरुस्तु कीदृशः प्रोक्तः कस्त्वया श्लाघितः पुरा‖ ।
सखे वदस्व तत्सर्व्वं परं कौतूहलं हि मे** ॥ ८७ ।

---

* एष पाठः (ग) पुस्तके नास्ति ।

† उदासीनं गुरुं कृत्वा इति (क), (घ) ।

‡ लभामीति आर्षं, लभे इति साधु ।

§ अन्तस्तापेन पीड़ितः इति (घ) । मांसाशनपरायण इति (ग), तत्र श्लोकस्यास्य द्वितीयार्द्धं नास्ति ।

¶ कल्माषपाद उवाच इति (क), (ख), (ग) ।

‖ कस्त्वया श्लाघ्यते पुनः इति (ख) ।

** महत्कौतूहलं हि मे इति (क) ।

सोमदत्त उवाच।

गुरवः सन्ति बहवः पूज्या वन्द्याश्च सादरम्।
तानहं कथयिष्यामि शृणु नान्यमनाः सखे॥ ८८।
अध्येतारश्च वेदान्ये वेदार्थानाञ्च बोधकाः।
ये च शास्त्रार्थवक्तारो वक्ता धर्म्मस्य यः सदा* ॥ ८९।
नीतिशास्त्रार्थवक्तारो वक्ता धर्म्मांश्च यः सदा† ।
मन्त्राणां वेदवाक्यानां सन्देहच्छेदिनस्तथा॥ ९०।
व्रतानि वदते यस्तु भयत्राता तथैव च।
अन्नदातोपनेता च‡ यस्त्वकर्म्म निवारयेत्§ ॥ ९१।
श्वशुरो मातुलश्चैव ज्येष्ठभ्राता तथा पिता।
निषेकादीनि कर्म्माणि कृतवांश्च महीपते॥ ९२।
एते वै गुरवः प्रोक्ताः केचिदुक्ता मया तव।
एते वन्द्याश्च पूज्याश्च नाऽत्र कार्य्या विचारणा॥ ९३।

सौदास उवाच¶।

बहवो गुरवः प्रोक्ता एतेषां कतमो वरः‖ ।
तत्र सर्व्वे च तुल्या वा यथावद्वक्तुमर्हसि॥ ९४।

---

* एतदर्द्धं (घ) पुस्तके नास्ति। वक्ता धर्म्मांश्च यः सदा इति (ङ)।

† मन्त्रव्याख्याकृतश्च ये इति (ख)।

‡ उपनीतेति बहुषु पुस्तकेषु पाठः।

§ यस्तु कर्म्माणि कारयेत् इति (ख)।

¶ कल्माषपाद उवाच इति (क), (ख), (घ), (ङ)।

‖ गुरुः इति (ग)।

सोमदत्त उवाच ।

साधु साधु महाप्राज्ञ यत्पृष्टं तद्वदाम्यहम् ।
अस्माकमपि वेगेन* महच्छ्रेयो भविष्यति ॥ ९५ ।
वयं राक्षसभावस्थाः क्षुत्पिपासातुरा अपि ।
गुरुमाहात्म्यनिरतास्ततः श्रेयो भविष्यति ॥ ९६ ।
एते सम्मानपूजार्हाः सर्व्वदा नात्र संशयः ।
तथापि शृणु वक्ष्यामि शास्त्राणां सारमुत्तमम् ॥ ९७ ।
अध्यापकस्तु वेदानां मन्त्रव्याख्यानकृत्तथा ।
पिता च धर्म्मवक्ता च विशेषगुरवः स्मृताः ॥ ९८ ।
एतेषामपि भूपाल शृणुष्व परमं गुरुम् ।
सर्व्वशास्त्रार्थतत्त्वज्ञैर्भाषितं प्रवदामि ते ॥ ९९ ।
यः पुराणानि वदति धर्म्मयुक्तानि पण्डितः† ।
संसारपापविच्छेदकारणानि स उत्तमः‡ ॥ १०० ।
वेदपूजार्हकर्म्माणि देवतापूजने फलम् ।
धर्म्मोपायश्च वदति§ स गुरुः परमः स्मृतः¶ ॥ १०१ ।
सर्व्ववेदार्थसाराणि पुराणानीति देवताः ।
वदन्ति मुनयश्चैव तद्वक्ता परमो गुरुः ॥ १०२ ।

---

* अतिवेगेन इति (ख), (ग), (घ), (ङ) ।

† स गुरुः परमः स्मृत इति (ख) ।

‡ संसारपाशविच्छेदकरस्तु मुनिसत्तमा इति (ख) ।

§ योगोपायश्च वदति इति (ख) ।

¶ परमो मतः इति (ग) ।

य: संसारार्णवं तर्त्तुमुद्योगं कुरुते नरः ।
शृणुयाच्च पुराणानि इति शास्त्रेषु निश्चितम् ॥ १०३ ।
सर्व्वधर्म्माणि वक्ष्यन्ति* पुराणानि द्विजोत्तमाः† ।
तस्माद्विचक्षणै‡र्ज्ञेयस्तद्वक्ता परमोगुरुः ॥ १०४ ॥
वेदव्यासस्तु धर्म्मात्मा वेदशास्त्रविभागकृत् ।
प्रोक्तवान्सर्व्वधर्म्माणि पुराणेषु महीपते ॥ १०५ ।
तर्कश्च वादहेतुः स्यान्नीतिस्त्वैहिकसाधनम् ।
पुराणानि महाबुद्धे इहामुत्र सुखाय वै§ ॥ १०६ ।
यः शृणोति पुराणानि¶ सततं भक्तिसंयुतः ।
तस्य स्याद्विमला बुद्धिर्भूप धर्म्मपरायणा ॥ १०७ ।
यः शृणोति पुराणानि भक्तिमान् प्रणतः सदा‖ ।
हरिभक्तिर्भवेत्तस्य समस्तगुणदायिनी ॥ १०८ ।
पुराणश्रवणान्नृणां बुद्धिर्धर्म्मे प्रवर्त्तते ।
धर्म्मात्पापानि नश्यन्ति ज्ञानं** शुद्धञ्च जायते ॥ १०९ ।
धर्म्मार्थकाममोक्षाणां ये फलान्यभिलिप्सवः ।
शृणुयुस्ते महात्मानः पुराणानि न संशयः ॥ ११० ।

---

* सर्व्वधर्म्माणि रक्षन्ति इति (घ) ।

† पुराणेषु महीपते इति (ख) । अत्र इतः सार्द्धैक. श्लोको नास्ति ।

‡ विलक्षणै. इति (क), (ग) ।

§ सुखाय हि इति (क), (घ) ।

¶ महाबुद्धे इति (क) ।

‖ प्रयतः सदा इति (ग) ।

** स्नानमिति (घ) ।

अहन्तु गौतमाख्येन मुनिना ब्रह्मवादिना ।
श्रुतवान्सर्व्वधर्म्मांश्च गङ्गातीरे मनोरमे ॥ १११ ।
पुराणशास्त्रकथनैस्तेन सम्बोधितो ह्यहम् ।
कृतवान्सर्व्वधर्म्मांश्च तेनोक्तानखिलानहम् ॥ ११२ ।
कदाचित्परमेशस्य पूजां कुर्व्वन्नहं सखे ।
उपस्थितायाऽपि तस्मै प्रणामं न ह्यकारिषम्* ॥ ११३ ।
स तु शान्तो महाबुद्धिर्गौतमस्तेजसां निधिः ।
मयोदितानि कर्म्माणि करोतीति मुदं ययौ ॥ ११४ ।
स त्वर्च्चितो महादेवः शिवः सर्व्वजगद्गुरुः ।
गुर्व्ववज्ञाकृतं पापं राक्षसत्वे नियुक्तवान् ॥ ११५ ।
ज्ञानतोऽज्ञानतो वापि अवज्ञां कुरुते तु यः† ।
महत्सु तस्य नश्यन्ति श्रेयोऽपत्यधनक्रियाः ॥ ११६ ।
शुश्रूषां कुरुते यस्तु महतां सादरं नरः ।
तस्य सम्पद्भवेत्साध्वी इति प्राहुर्विपश्चितः‡ ॥ ११७ ।
तेन पापेन दह्यामि अन्तश्चैव क्षुधाग्निना§ ।
मोक्षं कदाऽहं यास्यामि¶ न जाने नृपसत्तम ॥ ११८ ।

---

* न ह्यकारयम् इति (ग) ।

† (ग) पुस्तके ज्ञानतोऽज्ञानतो वाप्यवज्ञा कुरुते तु यः एवं पाठोऽस्ति, ततश्च छन्दोभङ्गः । अज्ञानतो ज्ञानतो वाप्यवज्ञा कुरुते तु यः एव कृते न कश्चिद्दोषः ।

‡ विचक्षणाः इति (ग) ।

§ युतश्चैव क्षुधाग्निना इति (घ) ।

¶ मोक्षं कदाहं यामीतीति (क), (ग), कदा हि यास्यामीति (घ) ।

सूतस्योक्तिः* ।

एवं वदति विप्रेन्द्रा वटस्थेऽस्मिन्निशाचरे ।
धर्म्मशास्त्रप्रसङ्गेन तयोः पापं चयं गतम् ॥ ११९ ।
एतस्मिन्नन्तरे प्राप्तः कश्चिद्विप्रोऽतिधार्म्मिकः ।
कलिङ्गदेशसम्भूतो नाम्ना गर्ग इति श्रुतः ॥ १२० ।
वहन् गङ्गाजलं स्कन्धे स्तुवन्विश्वेश्वरं प्रभुम् ।
गायन्नामानि तस्यैव समायातोऽतिहर्षितः ॥ १२१ ।
तमागतं मुनिं दृष्ट्वा पिशाची राक्षसौ च तौ ।
प्राप्ता नः पारणेत्युक्त्वा भुजमुद्यम्य† तं ययुः ॥ १२२ ।
तेन कीर्त्तितनामानि श्रुत्वा दूरे व्यवस्थिताः ।
अशक्तास्तं द्विजं गन्तुमिदमूचुश्च राक्षसाः ॥ १२३ ।

राक्षसा ऊचुः‡ ।

अहो भद्र महाभाग नमस्तुभ्यं महात्मने§ ।
नामस्मरणमाहात्म्याद्राक्षसा अपि दूरगाः ॥ १२४ ।
अस्माभिर्भक्षिताः पूर्व्वं विप्राः कोटिसहस्रशः ।
नामप्रावरणं विप्र रक्षति त्वां महाभयात्¶ ॥ १२५ ।
नामश्रवणमात्रेण|| राक्षसा अपि गोचराः ।

---

* एष पाठः (ग) पुस्तके नास्ति ।

† भुजावुद्गम्य इति (क), भुजानुद्यम्य इति (ग) ।

‡ एष पाठः (क), (ग) पुस्तकयोर्नास्ति ।

§ परात्मने इति (क), महामुने इति (घ) ।

¶ एष श्लोकः (क) पुस्तके नास्ति ।

|| स्मरणमात्रेण इति (घ) ।

परां शान्तिं समापन्ना महिमाऽहोऽच्युतस्य कः ॥ १२६ ।
सर्व्वथा त्वं महाभाग रागादिरहितो द्विजः ।
गङ्गाजलाभिषेकेण पाह्यस्मात्* पातकोत्तमात् ॥ १२७ ।
हरिसेवापरो भूत्वा यस्त्वात्मानन्तु तारयेत् ।
स तारयेज्जगत्सर्व्वमिति शंसन्ति सूरयः ॥ १२८ ।
अघापहं हरेर्नाम घोरसंसारभेषजम् ।
आत्मनो लभते मुक्तिं तेनोपायेन पण्डितः† ॥ १२९ ।
लौहोडुपेन‡ प्रतरन्निमज्जत्युदके यथा ।
तथैवाकृतपुण्यास्तु तारयन्ति कथं परान्§ ॥ १३० ।
अहो चरित्रं महतां सर्व्वलोकसुखावहम् ।
यथाहि¶ सर्व्वजगतां ह्लादको वै कलानिधिः ॥ १३१ ।
पृथिव्यां यानि तीर्थानि पवित्राणि द्विजोत्तम‖ ।
तानि सर्व्वाणि गङ्गायाः कणस्याप्यसमानि वै ॥ १३२ ।
तुलसीदलसंमिश्रमल्पं सर्षपमात्रकम् ।
गङ्गाजलं पुनात्येव कुलानामेकसप्ततिम्** ॥ १३३ ।

---

* पाह्यस्मानिति (ङ) ।

† आत्मान लभते मुक्तिमिति (क), केनोपायेन पण्डित इति (ग) । एतदर्द्धं (ख) पुस्तके नास्ति ।

‡ महोडुपेन इति (क) ।

§ परमिति (क), (ग) ।

¶ तथापीति (ग), तथाहीति (ख), (ङ) ।

‖ सरांसि जलदा नद्य इति (क) ।

** एकविंशतिमिति (ख), (ग) ।

तस्माद्ब्रह्मन्महाभाग सर्व्वशास्त्रार्थकोविद* ।
गङ्गाजलप्रदानेन पाह्यस्मान् पापकर्म्मणः† ॥ १३४ ।
इत्याख्यातं राक्षसैस्तैर्गङ्गामाहात्म्यमुत्तमम् ।
निशम्य विस्मयाविष्टो बभूव द्विजसत्तमः ॥ १३५ ।
एषामपीदृशी‡ भक्तिर्गङ्गायां लोकमातरि ।
किमु ज्ञातप्रभावाणां महतां पुण्यशालिनाम् ॥ १३६ ।
अथाऽसौ मनसा धर्म्मं निश्चित्य§ ब्राह्मणोत्तमः ।
सर्व्वभूतहिते युक्तः प्राप्नोति¶ परमम्पदम् ॥ १३७ ।
ततो विप्रः कृपाविष्टो गङ्गाजलमनुत्तमम् ।
तुलसीदलसंमिश्रं तेषु रक्षःस्वसेचयत् ॥ १३८ ।
राक्षसास्तेन सिक्तास्ते सर्षपोपमविन्दुना ।
विसृज्य राक्षसं भावमभवन्देवतोपमाः ॥ १३९ ।
ब्राह्मणी पुत्रयुक्ता सा सोमदत्तस्तथैव च ।
कोटिसूर्य्यप्रतीकाशमापन्नौ विबुधर्षभाः ॥ १४० ।
शङ्खचक्रगदाधारौ हरिसारूप्यमागतौ ।
स्तुवन्तौ ब्राह्मणं सम्यग्जग्मतुर्हरिमन्दिरम् ॥ १४१ ।
स तु कल्माषपादस्तु निजरूपं समागतः ।

---

* सर्व्वशास्त्रविशारद इति (घ), (ङ) ।

† पापकर्म्मिण इति (ख) ।

‡ येषामपि इति (ग) ।

§ विचिन्त्य इति (ग) ।

¶ प्राप्नोतीति परम्पदमिति (घ) ।

ततोऽपि मनसा चिन्तां महतीमाप्तवांस्तदा ॥ १४२ ।
तस्मिन्नाजनि दुःखार्त्ते गूढ़रूपा सरस्वती ।
धर्म्ममूलं महावाक्यं बभाषे विप्रसत्तमाः ॥ १४३ ।
भो भो राजन्महाभाग न दुःखं गन्तुमर्हसि ।
तवाऽपि राज्यभोगान्ते महच्छ्रेयो भविष्यति ॥ १४४ ।
सत्कर्म्मधूतपापा ये हरिभक्तिपरायणाः ।
प्रयान्ति नाऽत्र सन्देहस्तद्विष्णोः परमम्पदम् ॥ १४५ ।
सर्व्वभूतदयायुक्ताः श्रुतिमार्गप्रवर्त्तिनः ।
प्रयान्ति परमं स्थानं गुरुपूजापरायणाः* ॥ १४६ ।
इतीरितं समाकर्ण्य सौदासो नृपसत्तमः† ।
मनसा निर्वृतिं प्राप्य सस्मार च गुरोर्वचः‡ ॥ १४७ ।
स्तुवन् गङ्गाञ्च तं विप्रं विश्वेशञ्चाऽतिहर्षितः ।
पूर्व्ववृत्तन्तु विप्राय सर्व्वं तस्मै न्यवेदयत् ॥ १४८ ।
ततोनृपस्तं कालिङ्गं प्रणम्य विधिवद्दिजाः§ ।
नामानि व्याहरन्विष्णोः सद्यो वाराणसीं ययौ ॥ १४९ ।
आगत्य गङ्गां षण्मासान्दृष्ट्वा विश्वेश्वरं विभुम्¶ ।

---

* गुरुभक्तिपरायणाः इति (घ) । (ख) पुस्तकेऽत. परं सूतउवाचेति पाठो वर्त्तते ।

† मुनिसत्तमा इति (घ) । भारत्या नृपसत्तम इति (ङ) ।

‡ गुरोर्व्वरमिति (ग) ।

§ द्विजमिति (ख), (ग) ।

¶ अय कश्चात्रपादस्तु दृष्टा विश्वेश्वर प्रभुमिति (ख) । तत्र (१५१) श्लोको नास्ति । प्रभुमिति (घ) ।

परां निर्वृतिमापन्नः स्वकं राज्यमवाप्तवान् ॥ १५० ।
अभिषिक्तो वशिष्ठेन भुक्त्वा भोगान्मनोरमान् ।
सर्व्वां मह्हीञ्च संरक्ष्य ततो निर्वृतिमाप्तवान् ॥ १५१ ।

सूत उवाच ।

तस्माच्छृणुध्वं विप्रेन्द्रा गङ्गाया महिमोत्तमम् ।
ब्रह्मविष्णुशिवैर्वाऽपि पारं गन्तुं न शक्यते ॥ १५२ ।
यन्नामश्रवणादेव* महापातककोटिभिः ।
विमुक्तो ब्रह्मसदनं नरो याति न संशयः ॥ १५३ ।
गङ्गा गङ्गेति यन्नाम सकृदुच्चार्य्यते† यदा ।
तदैव पापनिर्म्मुक्तो ब्रह्मलोके महीयते ॥ १५४ ।
ये पठन्तीममध्यायं भक्त्या शृण्वन्ति ये नराः ।
गङ्गास्नानफलं पुण्यं भूयात्तेषां न संशयः‡ ॥ १५५ ।

इति श्रीबृहन्नारदीये पुराणे नवमोऽध्यायः ।



---

* यन्नामस्मरणादेव इति (घ) ।

† सकृदप्युच्यते यथा इति (ख), सकृदुच्चरते यदा इति (ग) ।

‡ (१५४) (१५५) एतौ श्लोकौ (क) पुस्तके न स्तः ।

## अथ दशमोऽध्यायः ।

ऋषय ऊचुः ।

विष्णुपादार्घ्यसम्भूता येयं गङ्गेति गीयते* ।
मुनिभिस्तन्महाभाग सूत नो वक्तुमर्हसि ॥ १ ।

सूत उवाच ।

शृणुध्वमृषयः सर्व्वे विष्णुध्यानपरायणाः ।
गीतं सनत्कुमाराय नारदेन महात्मना ॥ २ ।
उपाख्यानं महापुण्यं वदतां शृण्वतां तथा ।
सर्व्वपापप्रशमनमपवर्गफलप्रदम् ॥ ३ ।
आसीदिन्द्रादिदेवानां जनकः कश्यपो द्विजः ।
दक्षात्मजे तस्य भार्य्ये दितिश्चादितिरेव च ॥ ४ ।
अदितिर्देवमाता सा† दैत्यानां जननी दितिः‡ ।
तेऽपि देवासुराः सर्व्वे परस्परजयैषिणः ॥ ५ ।
प्रह्लादात्मजपुत्रस्तु श्रीमान्वैरोचनो बली ।
बलिर्नाम§ राक्षसेन्द्रो बुभुजे¶ पृथिवीमिमाम् ॥ ६ ।
बलेन महता युक्तो बलिर्वैरोचनोऽसुरः ।

---

* कीर्त्त्यते इति (घ) । (ख) पुस्तके एष श्लोको नास्ति ।

† अदितिर्देवतामाता इति (ग) ।

‡ दैत्यानां दितिरेव च इति (ख) ।

§ बलिर्नाम चासुरेन्द्र इति (ङ) ।

¶ बुभुजे पृथिवीमिमामिति आर्षं, बुभोज पृथिवीमिमामिति साधु ।

विजित्य वसुधामेतां* स्वर्गञ्जेतुम्मनो दधे ॥ ७ ।

गजाश्च यस्याऽयुतकोटिलचा-
स्तावन्त एवाश्वरथा मुनीन्द्राः ।
गजे गजे पञ्चशती पदातिः †
किं वर्ण्यते तस्य बलेः प्रशस्तिः‡ ॥ ८ ।

अमात्यकोटिप्रवरावमात्यौ
कुम्भाण्डनामाऽप्यथ कूपकर्णः ।
पिता समः शास्त्रपराक्रमाभ्यां§
वाणो बलेः पुत्रशताग्रजोऽभूत् ॥ ९ ।

बलिः सुराञ्जेतुमनाः प्रमत्त
सैन्येन युक्तो महता प्रतस्थे ।
ध्वजातपत्रैर्गगनाम्बुराशे-
स्तरङ्गविद्युत्स्मरणं प्रकुर्व्वन् ॥ १० ।

अवाप्य वृत्राऽरिपुरं सुरारी
रुरोध दैत्यैर्मृगराजगाढ़ैः ।
सुराश्च युद्धाय पुरात्तदैव
विनिर्ययुर्वज्रकराद्यश्च ॥ ११ ।

ततः प्रववृते युद्धं घोरं गीर्व्वाणरचसाम् ।

---

* एनामिति (ग) ।

† पञ्चशत पदातेः इति (घ) । (ख) पुस्तके पर श्लोको नास्ति ।

‡ तस्य च मूढ़ताशी इति (क), (ख), (घ) ।

§ सत्त्वपराक्रमाभ्यामिति (ग) ।

कल्पान्तमेघनिर्घोषडिण्डिमध्वानविभ्रमम्* ॥ १२ ।
मुमुचुः शरजालानि राक्षसा देवतागणे ।
देवाश्च राक्षसाऽनीके संग्रामेऽत्यन्तदारुणे ॥ १३ ।
जहि जह्यसुरं भिन्धि भिन्धि दारय दारय ।
वध्यतामिति विप्रेन्द्रा महान् घोषः समुन्नतः ॥ १४ ।
सुरदुन्दुभिनादैश्च सिंहनादैश्च रक्षसाम् ।
फीत्कारैश्च† रथानाञ्च वाणटङ्कारनिस्वनैः ॥
अश्वानां ह्रेषितैश्चैव गजानां वृंहितैस्तथा ।
टङ्कारैर्धनुषाञ्चैव लोकः शब्दमयोऽभवत् ॥ १५ । १६ ।
सुरासुरविनिर्मुक्तवाणनिष्पेषजानलम् ।
अकालप्रलयं मेने निरीक्ष्य सकलं जगत् ॥ १७ ।
बभौ सा राक्षसी सेना स्फुरच्छस्त्रौघधारिणी ।
चलद्विद्युन्निभा रात्रिश्छादिता जलदैरिव ॥ १८ ।
तस्मिन्युद्धे महाघोरे गिरीन् क्षिप्तान्सुरारिभिः ।
नाराचैश्चूर्णयामास मघवान्मेघनिस्वनः ॥ १९ ।
केचित्सन्ताड़यामासुर्नागैर्नागान्रथैरथान् ।
अश्वैरश्वांश्च केचिच्च दण्डान्दण्डैश्च केचन‡ ॥ २० ।
परिघैस्ताड़िताः केचित्पेतुः शोणितकर्द्दमे ।

---

* सम्भ्रममिति (ग) ।

† चीत्कारैश्च इति (ख), (ग) ।

‡ गदादण्डैश्च केचन इति (घ) ।

समुत्क्रान्तास्ततः* केचिद्विमानानि समाश्रिताः ॥ २१ ।
राक्षसा निहता देवैर्यें त एव तदैव हि ।
देवभावं समुत्पन्ना असुरान्समुपाद्रवन् ॥ २२ ।
अथ ते राक्षसाः सर्व्वे ताद्यमानाः सुरैर्भृशम् ।
सर्व्वे एव समाजघ्नुः शस्त्रैर्बहुविधैः सुरान् ॥ २३ ।
द्रुघणैर्भिन्दिपालैश्च खड्गैः परशुतोमरैः ।
परिघैश्छुरिकाभिश्च दण्डैश्चक्रैश्च शङ्कुभिः† ॥ २४ ।
मुषलैरङ्कुशैश्चैव लाङ्गलैः पट्टिशैस्तथा ।
शतघ्नुपलशतघ्नीभिः प्रासायोदण्डमुष्टिभिः ॥ २५ ।
शूलैः कुठारैः पाशैश्च क्षुद्रायष्टिबृहच्छरैः‡ ।
अयोमुखैश्च तुण्डैश्च चक्रदण्डैर्भयङ्करैः ॥ २६ ।§
क्षुद्रपट्टिशनाराचैः क्षेपणीयास्त्रसंकुलैः ।
रथाश्वनागपादातसङ्कुलो ववृधे रणः ॥ २७ ।
देवाश्च विविधास्त्राणि राक्षसेभ्यः समाक्षिपन् ।
एवमब्दसहस्राणि युद्धमासीत्सुदारुणम् ॥ २८ ।
अथो रक्षोबले वृद्धे पराभूता दिवौकसः ।
सुरलोकं परित्यज्य भीताः सर्व्वे¶ प्रदुद्रुवुः ॥ २९ ।

---

* समुत्क्रान्तास्तव. इति (ङ) ।

† चक्रैर्भयङ्करैरिति (ख) ।

‡ एतदर्द्धं (ग) पुस्तके नास्ति । शूलैः परशुपाशैश्च क्षुद्रास्त्रष्टिपरश्वधैरिति (क) ।
क्षुद्राऽस्त्रष्टिबृहच्छरैरिति (ङ) ।

§ (ख) पुस्तके (२४) (२५) (२६) श्लोका न सन्ति ।

¶ सर्व्वे भीता. इति (घ), (ङ) ।

देवाः स्वर्गं परित्यज्य रक्षोभिः परिभङ्गिताः ।
नररूपपरिच्छन्नाः* विचेरुरवनीतले ॥ ३० ।
वैरोचनिस्त्रिभुवनं नारायणपरायणः ।
बुभुजेऽव्याहतैश्वर्य्यं प्रवृद्धश्रीर्महाबलः ॥ ३१ ।
इयाज यज्ञैर्दैत्येन्द्रो विष्णुप्रीणनतत्परः ।
इन्द्रत्वञ्चाकरोल्लोके दिक्पालत्वन्तथैव च ॥ ३२ ।
देवानां प्रीणनार्थाय ये† क्रियन्ते द्विजैर्मखाः ।
तेषु यज्ञेषु सर्व्वेषु हविर्भुङ्क्ते स राक्षसः ॥ ३३ ।
अदितिः स्वात्मजान्वीक्ष्य देवमाताऽतिदुःखिता ।
वृथापुत्राऽहमस्मीति जगाम हिमवद्गिरिम् ॥ ३४ ।
शक्रस्यैश्वर्य्यमिच्छन्ती दैत्यानाञ्च पराजयम् ।
हरिध्यानपरा भूत्वा तपस्तेपेऽतिदुश्चरम्‡ ॥ ३५ ।
कञ्चित्कालं समासीना तिष्ठन्ती च ततः परम् ।
पादेनैकेन तिष्ठन्ती ततः पादाग्रमात्रतः ॥ ३६ ।
कञ्चित्कालं फलाहारा ततः शीर्णदलाशना ।
ततोदकमरुद्वृत्ति§र्निराहारा क्रमादिति¶ ॥ ३७ ।
सच्चिदानन्दसन्दोहं ध्यायन्त्यात्मानमात्मना ।

---

* नररूपविनिर्भिन्ना इति (ग) ।
† यैः इति (ख), (ग), (ङ) ।
‡ अतिदुष्करमिति (ख) ।
§ तत उदक इति साधु ।
¶ निराहारा कृताञ्जिला इति (घ) ।

दिव्याब्दानां सहस्रं सा तपस्तेपेऽतिदुश्चरम्* ॥ ३८ ।
उदन्तमेतं श्रुत्वा तु राक्षसा मायिनो दितिम् ।
देवतारूपमास्थाय संप्रोचुर्बलिनोदिताः ॥ ३९ ।
किमर्थं तप्यते† मातः शरीरमतिशोषितम् ।
यदि जानन्ति रक्षांसि मद्दुःखं भविष्यति ॥ ४० ।
त्यजेदं दुःखबहुलं कायशोषणकारणम् ।
प्रयाससाध्यं सुकृतं न प्रशंसन्ति पण्डिताः ॥ ४१ ।
शरीरं यत्नतो रक्ष्यं धर्म्मसाधनतत्परैः ।
ये शरीरमुपेक्षन्ते ते स्युरात्मविघातिनः ॥ ४२ ।
तत्तावत्तिष्ठतु शुभे पुत्रानस्मान्न खेदय ।
मात्रा हीना जना मातर्मृता एव न संशयः ॥ ४३ ।
यस्य माता गृहे नास्ति भार्य्या चाप्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ ४४ ।
खगा वा पशवो वाऽपि पन्नगा वा महीरुहाः ।
न लभन्ते सुखं किञ्चिन्मात्रा हीना मृतोपमाः ॥ ४५ ।
दरिद्रो वाऽपि रोगी वा देशान्तरगतोऽपि वा ।
मातुर्द्दर्शनमात्रेण लभन्ते परमं सुखम् ॥ ४६ ।
अन्ने वा सलिले वाऽपि धनादौ वा प्रियासु च ।
कदाचिद्विमुखो वाऽपि जनो मातरि कोऽपि न ॥ ४७ ।
यस्य माता गृहे नास्ति पुत्रा धर्म्मपरायणाः ।

---

* अतिदुष्करमिति (ख)। सुदुश्चरमिति (घ)।

† तप्यसे इति (घ)।

साध्वी च स्त्री पतिप्राणा यातव्यं तेन वै वनम्* ॥ ४८ ।

धर्म्मश्च नारायणभक्तिहीना
धनञ्च सम्भोगविवर्ज्जितञ्च ।
गृहञ्च भार्य्यातनयैर्विहीनं
यथा तथा मातृविहीनमर्त्यः† ॥ ४९ ।

तस्माद्देवि परित्राहि दुःखार्त्तानात्मजांस्तव ।
इत्युक्ताऽप्यदितिर्दैत्यैर्नं चचाल समाधितः ॥ ५० ।
एवमुक्त्वाऽसुराः सर्व्वे परध्यानपरायणाम् ।
निरीक्ष्य क्रोधितास्ते तु हन्तुं चक्रुर्मनोरथम् ॥ ५१ ।
कल्पान्तमेघनिर्घोषाः क्रोधसंरक्तलोचनाः ।
दंष्ट्राग्रैरसृजन्वह्निं दग्धुं तत्काननं क्षणात् ॥ ५२ ।
अदहत्काननं सोऽग्निः शतयोजनमायतम्‡ ।
तेनैव राक्षसा दग्धा सा न जानाति किञ्चन ॥ ५३ ।

सैकाऽवशिष्टा जननी सुराणां
तेनाऽनलेनाच्युतसक्तचित्ता ।
संरक्षिता विष्णुसुदर्शनेन
नारायणध्यानपरायणा सा ॥ ५४ ।

इति श्रीबृहन्नारदीये पुराणे दशमोऽध्यायः ।

——:——

* गन्तव्यं तेन वै वनमिति (घ) ।

† मातृविहीनमर्त्यः इति (ग) ।

‡ विस्तृतमिति (ग) ।

# अथ एकादशोऽध्यायः ।

ऋषय ऊचुः ।

अहो चित्रमिदं प्रोक्तमस्माकं सूत यत्त्वया ।
स वह्निरदितिं त्यक्त्वा कथं तानदहत्क्षणात् ॥ १ ।
वदादितेर्महासत्त्वं त्वमद्याश्चर्य्यकारणम्* ।
परोपदेशनिरताः† सज्जना हि मुनीश्वराः ॥ २ ।

सूत उवाच ।

विप्राः शृणुध्वं माहात्म्यं हरिभक्तिरतात्मनाम् ।
हरिध्यानपराणाञ्च कः समर्थः‡ प्रबाधितुम् ॥ ३ ।
हरिभक्तिपरो यत्र तत्र ब्रह्मा हरिः शिवः ।
तत्र देवाश्च सिद्धाश्च नित्यं तिष्ठन्ति सत्तमाः ॥ ४ ।
हरिरास्ते महाभागा हृदये शान्तचेतसाम् ।
हरिनामरतानाञ्च§ किमु ध्यानरतात्मनाम् ॥ ५ ।
शिवपूजापरो वापि हरिपूजापरोऽपि वा ।
यत्र तिष्ठति तत्रैव लक्ष्मीः सर्व्वाश्च देवताः ॥ ६ ।
यत्र पूजापरो विष्णोस्तत्र विघ्नो न बाधते ।
राजाऽपि तस्करो वाऽपि व्याधयश्च न सन्ति हि ॥ ७ ।

---

* एतदर्द्धं (ङ) पुस्तके नास्ति ।

† परोपकारनिरता इति (ग) ।

‡ कः शक्तश्च इति (क) ।

§ हरिनामपराणाञ्चेति (क), (ग) । (क) पुस्तकेऽतः परं चत्वारः श्लोका न सन्ति ।

प्रेताः पिशाचाः कुष्माण्डा ग्रहा बालग्रहास्तथा ।
डाकिन्यो राक्षसाश्चैव न बाधन्तेऽच्युतार्च्चकम् ॥ ८ ।
परपीड़ारता ये च भूतवेतालकादयः ।
नश्यन्ति* यत्र सद्भक्तो हरिलिङ्गार्च्चने रतः ॥ ९ ।
जितेन्द्रियः सर्व्वहितो मृदुर्विष्ण्वर्च्चने रतः ।
यत्र तिष्ठति तत्रैव सभार्य्याश्चैव देवताः ॥ १० ।
निमिषं निमिषार्द्धं वा यत्र तिष्ठन्ति योगिनः ।
तत्रैव सर्व्वतीर्थानि तत्तीर्थं तत्तपोवनम् ॥ ११ ।
यन्नामोच्चारणादेव सर्व्वे नश्यन्त्युपद्रवाः ।
स्तोत्रैर्व्वा अर्हणाद्यैर्व्वा किमु ध्यानेन कथ्यते ॥ १२ ।
तस्मान्न बाधते चाग्निर्दैत्या चान्ये च सत्तमाः ।
नश्यन्ति सर्व्वदुःखानि हरिस्मरणमात्रतः ॥ १३ ।
ततः प्रसन्नवदनः पद्मपत्रायतेक्षणः ।
प्रादुरासीत्समीपेऽस्याः शङ्खचक्रादिभृद्धरिः ॥ १४ ।
ईषद्धासस्फुरद्दन्तप्रभाभासितदिङ्मुखः† ।
स्पृशन् करेण पुण्येन प्राह कश्यपवल्लभाम् ॥ १५ ।

श्रीभगवानुवाच ।

देवमातः प्रसन्नोऽस्मि तपसाराधितस्त्वया ।
चिरं श्रान्तासि भद्रं ते भविष्यति न संशयः ॥ १६ ।
वरं वरय दास्यामि यत्ते मनसि वर्त्तते ।

---

* न सन्ति इति (घ) ।

† प्रत्युद्भासितदिङ्मुखः इति (घ) ।

मा भैर्भद्रे महाभागे ध्रुवं श्रेयो भविष्यति ॥ १७।
इत्युक्ता देवमाता सा देवदेवेन चक्रिणा।
तुष्टाव प्रणिपत्यैनं सर्व्वलोकसुखावहम् ॥ १८।

अदितिरुवाच।

नमस्ते देवदेवेश सर्व्वव्यापिञ्जनार्द्दन।
सत्त्वादिगुणभेदेन लोकव्यापारकारण ॥ १९।
नमस्ते बहुरूपाय नीरूपाय महात्मने*।
सर्व्वैकरूपरूपाय निर्गुणाय गुणात्मने ॥ २०।
नमस्ते लोकनाथाय परमज्ञानरूपिणे।
सद्भक्तजनवात्सल्यशीलिने मङ्गलात्मने ॥ २१।
यस्यावताररूपाणि अर्च्चयन्ति मुनीश्वराः।
तमादिदेवं पुरुषं नमामीष्टार्थसिद्धये ॥ २२।
यन्न जानन्ति मुनयो यन्न जानन्ति सूरयः।
तं नमामि जगद्धेतुं मायिनन्तममायिनम् ॥ २३।
यस्याऽवलोकनं† चित्रं मायोपद्रवकारणम्‡।
जगद्रूपं जगद्धेतुं तं वन्दे सर्व्ववन्दितम् ॥ २४।
यत्पादाम्बुजकिञ्जल्कसेवारञ्जितमस्तकाः।
अवापुः परमां सिद्धिं तं वन्दे पद्मजापतिम्§ ॥ २५।

---

* विष्णवे परमात्मने इति (क)।

† तस्यावलोकनमिति (घ)।

‡ मायोपद्रवकारकमिति (ङ)।

§ पद्मजाधवमिति (क), (ग), (ङ)।

श्रुतयोऽपि* न जानन्ति महिमानन्तु यद्धरेः ।
अत्यासन्नञ्च† भक्तानां तं वन्दे भक्तिसङ्गिनम् ॥ २६ ।
देवो यस्त्यक्तसङ्गानां शान्तानां करुणार्णवः ।
करोति ह्यात्मनः सङ्गं तं वन्दे सङ्गवर्ज्जितम् ॥ २७ ।
यज्ञेश्वरं यज्ञभुजं यज्ञकर्म्मसु निष्ठितम् ।
नमामि यज्ञफलदं यज्ञकर्म्मप्रबोधकम्‡ ॥ २८ ।
अजामिलोऽपि पापात्मा यन्नामोच्चारणोद्धृतः§ ।
प्राप्तवान्परमं धाम तं वन्दे लोकसाक्षिणम्¶ ॥ २९ ।
हरिरूपी महादेवः शिवरूपी जनार्द्दनः ।
इति लोकस्य ते नाथ नतोऽस्मि जगतां गुरुम्‖ ॥ ३० ।
ब्रह्माद्या अपि ये देवा यन्मायापाशयन्त्रिताः ।
न जानन्ति परं भावं तं वन्दे सर्व्वनायकम् ॥ ३१ ।
हृत्पद्मनिलयोऽज्ञाना**द्दूरस्थ इव†† भाति यः ।
प्रमाणातीतसद्भावं तं वन्दे ज्ञानसाक्षिणम् ॥ ३२ ।
यन्मुखाद्ब्राह्मणो जातो बाहुभ्यां क्षत्रियोऽजनि ।

---

* सूरयोऽपि इति (क), (घ) ।

† अन्यासङ्गञ्च इति (क), अत्यासक्तञ्च इति (घ), (ङ) ।

‡ (क) पुस्तके श्लोकस्यैतस्य पूर्व्वार्द्धं नास्ति । यज्ञकर्म्मविबोधकमिति (ङ) ।

§ यन्नामोच्चारणागतः इति (घ) ।

¶ सङ्गवर्ज्जितमिति (ग) ।

‖ तं नतोऽस्मि जगद्गुरुमिति (क), (ग)

** हृत्पद्मनिलयो ज्ञानमिति (ग) ।

†† इति इति (घ) ।

तथैव चोरुतो वैश्यः पद्भ्यां शूद्रोऽप्यजायत* ॥ ३३ ॥
मनसश्चन्द्रमा जातो जातः सूर्य्यश्च चक्षुषः ।
मुखादग्निरथेन्द्रश्च† श्रोत्राद्वायुरजायत‡ ॥ ३४ ।
ऋग्यजुःसामरूपाय सप्तस्वरगतात्मने§ ।
षड़ङ्गरूपिणे तुभ्यं भूयो भूयो नमो नमः ॥ ३५ ।
त्वमिन्द्रः परमः सोमस्त्वमीशानस्त्वमन्तकः¶ ।
त्वमग्निर्वरुणश्चैव निर्ऋतिस्त्वं दिवाकरः ॥ ३६ ।
देवाश्च स्थावराश्चैव पिशाचाश्चैव राक्षसाः ।
गिरयः सिद्धगन्धर्व्वास्तथा भूमिश्च सागराः ॥ ३७ ॥
त्वमेव जगतामीशो यस्मान्नास्ति परात्परः‖ ।
यद्रूपमखिलं देव तस्मान्नित्यं नमोऽस्तु ते ॥ ३८ ।
अनाथनाथ सर्व्वज्ञ** भूतादिर्वेदविग्रहः†† ।
रक्षोभिर्बाधितान् पुत्रान्मम त्राहि जनार्द्दन ॥ ३९ ।
इति स्तुत्वा देवधात्री देवं नत्वा पुनः पुनः ।
उवाच प्राञ्जलिर्भूत्वा हर्षाश्रुक्षालितस्तनी ॥ ४० ।

---

* अभ्यजायत इति (क), व्यजायत इति (ग), ह्यजायत इति (ङ) ।
† मुखादिन्द्रश्च वह्निश्च इति (क), (घ), (ङ) ।
‡ प्राणाद्वायुरजायत इति (क), (ङ), प्राणेभ्यः इति साधु ।
§ सप्तस्वर्गात्मने नम इति (क) ।
¶ एतदर्द्धं (ग) पुस्तके नास्ति ।
‖ त्वत्तो नास्ति परात्परः इति (ग) ।
** अनाथानाथ सर्व्वज्ञ इति (क) ।
†† देवविग्रह इति (घ) ।

अदितिरुवाच ।

अनुग्रह्योऽस्ति देवेश यदि सर्व्वादिकारण ।
अकण्टकां श्रियं देहि मत्सुतानां दिवौकसाम् ॥ ४१ ।
अन्तर्यामिञ्जगद्रूप सर्व्वज्ञ परमेश्वर ।
अज्ञातं किं त्वया देव किं मां मोहयसि प्रभो ॥ ४२ ।*
तथापि तव वक्ष्यामि यन्मे मनसि रोचते ।
वृथापुत्राऽस्मि देवेश रक्षोभिः परिपीड़िता ॥ ४३ ।
तान्न हिंसितुमिच्छामि मत्सुता दितिजा यतः† ।
तानहत्वा श्रियं देहि मत्सुतायेति‡ चाब्रवीत् ॥ ४४ ।
इत्युक्तो देवदेवेशः पुनः प्रीतिमुपागतः ।
उवाच हर्षयन्साध्वीं समालिङ्ग्य महोत्सवात्§ ॥ ४५ ।

श्रीभगवानुवाच ।

प्रीतोऽस्मि देवि भद्रन्ते भविष्यामि सुतस्तव ।
यतः¶ सपत्नीपुत्रेषु अपि वात्सल्यशालिनी ॥ ४६ ।
त्वया तु यत्कृतं स्तोत्रं पठन्ति भुवि ये नराः‖ ।
तेषां पुत्रा धनं सम्पन्न हीयन्ते कदाचन ॥ ४७ ।

---

* (ख) पुस्तके प्रथमतो द्वाचत्वारिंशच्छ्लोका न सन्ति ।

† दितिजादय इति (क), दितिजातयः इति (ग), (ङ) ।

‡ मत्पुत्रायेतीति (ख), तत्रास्माच्छ्लोकादनन्तरं सूत उवाच इति पाठो वर्त्तते ।

§ महोत्सवामिति (ख), (ङ) ।

¶ यया इति (ग) ।

‖ मानवा. इति (क), (ग) । पठिष्यन्ति च मानवा इति (ख) ।

आत्मजे वाऽन्यपुत्रे वा यः समत्वेन वर्त्तते।
न तस्य पुत्रशोकः स्यादित्याह भगवान् हरिः॥ ४८।

अदितिरुवाच।

नाहं वोढुं* क्षमा देव त्वामाद्य पुरुषोत्तमम्†।
ब्रह्माण्डकोटिसाहस्रं रोम्णि रोम्णि तवाऽव्ययः‡॥ ४९।
यस्य भावं न जानन्ति श्रुतयः सर्व्वदेवताः।
तमहं देवदेवेशं धारयामि कथं प्रभो॥ ५०।
अणोरणीयांसमजं परात्परतरं विभुम्§।
धारयामि कथं देव त्वामहं पुरुषोत्तमम्¶॥ ५१।
महापातकयुक्तोऽपि यन्नामस्मृतिमात्रतः‖।
प्रयाति मुक्तिं देवेश तं कथं धारयाम्यहम्॥ ५२।

सूत उवाच।

तयोक्तं वचनं श्रुत्वा देवदेवो जनार्द्दनः।
दत्वाऽभयं देवमातुरिदं वचनमब्रवीत्॥ ५३।
सत्यमुक्तं महाभागे त्वया नास्त्यत्र संशयः।

---

* सोढुमिति (ग)।

† पुरुषं प्रभुमिति (ग)।

‡ तवाऽव्यय इति (क)। एतदर्द्धं (ख), (ग) पुस्तकयोः एवं पठितं "ब्रह्माण्डकोटिसाहस्रं रोम्णि रोम्णि तवाऽव्यय।"

§ प्रभुमिति (क), (घ)।

¶ पुरुषोत्तम इति (ङ)। तत्र (५०) श्लोको नास्ति।

‖ यन्नामोच्चारमात्रत इति (क)।

तथापि तव वक्ष्यामि* गुह्याद्गुह्यतरं शुभे ॥ ५४ ।
रागद्वेषविहीना ये मद्भक्ता मत्परायणाः ।
वहन्ति सततं ते मां गतासूया अदाम्भिकाः ॥ ५५ ।
परोपतापविमुखाः शिवार्च्चनपरायणाः ।
मत्कथाश्रवणासक्ता वहन्ति सततं हि माम् ॥ ५६ ।
पतिव्रताः पतिप्राणाः पतिभक्तिपरायणाः† ।
वहन्ति सततं बाले स्त्रियोऽपि त्यक्तमत्सराः ॥ ५७ ॥
मातापित्रोश्च शुश्रूषुर्गुरुभक्तोऽतिथिप्रियः ।
हितकृद्ब्राह्मणानां यः स मां वहति सर्व्वदा ॥ ५८ ।
सत्कथाश्रवणे सक्तो यतिशुश्रूषुरेव च‡ ।
स्वाश्रमाचारनिरतः स मां वहति सर्व्वदा ॥ ५९ ।
पुण्यतीर्थरता नित्यं सत्सङ्गनिरताः सदा ।
लोकानुग्रहशीलाश्च वहन्ति सततं हि माम्§ ॥ ६० ।
परोपकारनिरताः परद्रव्यपराङ्मुखाः ।
नपुंसकाः परस्त्रीषु वहन्ति सततं हि माम् ॥ ६१ ।
तुलस्युपासनरताः सदा नामपरायणाः ।
गोरक्षणपराः¶ ये च वहन्ति सततं हि माम् ॥ ६२ ।

---

* तथापि शृणु वक्ष्यामि इति (क), (ख), (ग) ।

† पतिभक्तिसमन्विताः इति (क), (घ,) (ङ) ।

‡ शुश्रूषणेषु च इति (क)। एष श्लोकः (ख) पुस्तके नास्ति ।

§ एतच्छ्लोकपूर्व्वार्द्धं (ख) पुस्तके नास्ति ।

¶ गोरक्षणरताः इति (घ), (ङ) ।

प्रतिग्रहविहीना ये परार्थविमुखास्तथा* ।
अन्नोदकप्रदातारो वहन्ति सततं हि माम् ॥ ६३ ।
त्वं हि देवि पतिप्राणा साध्वी भूतहिते† रता ।
संप्राप्य पुत्रभावं ते माययास्यरिसङ्कुलम् ॥ ६४ ।
इत्युक्ता देवदेवेशः अदितिं देवमातरम् ।
दत्त्वा कण्ठगतां मालामभयञ्च तिरोदधे‡ ॥ ६५ ।
साऽपि तं तुष्टमनसा§ देवसूर्दक्षनन्दिनी ।
प्रणम्य कमलाकान्तं पुनः स्वस्थानमन्वगात् ॥ ६६ ।
ततो दितिर्दक्षसुता¶ प्रथिता लोकवन्दिता ।
असूत समये पुत्रं सर्व्वलोकश्रियोज्ज्वलम् ॥ ६७ ।
शङ्खचक्रधरं शान्तं चन्द्रमण्डलमध्यगम् ।
सुधाकलसदध्यन्नकरं वामनसंज्ञितम् ॥ ६८ ।
सहस्रादित्यसङ्काशं व्याकोषकमलेक्षणम् ।
सर्व्वाभरणसंयुक्तं पीताम्बरधरं हरिम् ।
स्तुत्यं मुनिगणैर्युक्तं सर्व्वलोकैकनायकम् ॥ ६९ ।
आविर्भूतं हरिं ज्ञात्वा कश्यपो हर्षसंभ्रमः ।
प्रणम्य प्राञ्जलिर्भूत्वा स्तोतुं समुपचक्रमे ॥ ७० ।

---

* परान्नविमुखाश्च ये इति (ख), (घ), (ङ) ।

† सर्व्वभूतहिते रता इति (ग) ।

‡ (ख) पुस्तके एतस्मात् पूर्व्वं सूत उवाच इति पाठो वर्त्तते ।

§ सापि सन्तुष्टमनसा इति (क), (ग) ।

¶ देवमाता इति (क), प्रतीता इति (ङ) ।

कश्यप उवाच ।

नमो नमस्तेऽखिलकारणाय
नमो नमस्तेऽखिलपालकाय* ।
नमो नमस्तेऽखिलनायकाय†
नमो नमो दैत्यविनाशनाय ॥ ७१ ॥
नमो ममो भक्तजनप्रियाय
नमो नमः सज्जनरञ्जिताय ।
नमो नमो दुर्ज्जननाशकाय
नमोऽस्तु तस्मै जगदीश्वराय ॥ ७२ ॥
नमो नमः कारणवामनाय‡
नारायणायामितविक्रमाय ।
श्रीशार्ङ्गचक्राऽसिगदाधराय
नमोऽस्तु तस्मै पुरुषोत्तमाय ॥ ७३ ॥
नमः पयोराशिनिवासनाय
नमोऽस्तु ते हृत्कमलासनाय ।
नमोऽस्तु सूर्य्यांशुनिभप्रभाय
नमोनमः पुण्यकथागताय§ ॥ ७४ ॥
नमो नमोऽर्केन्दुविलोचनाय

---

* पावनाय इति (ग)। पालनाय इति (ङ)।

† अमरनायकाय इति (ख)।

‡ कारणकारणाय इति (क)।

§ पुण्यकथामृताय इति (क)।

नमोऽस्तु ते यज्ञफलप्रदाय।
नमोऽस्तु यज्ञाङ्गविराजिताय
नमोऽस्तु ते सज्जनवल्लभाय॥ ७५॥
नमो नमः कारणकारणाय*
नमोऽस्तु शब्दादिविवर्ज्जिताय†।
नमोऽस्तु ते दिव्यसुखप्रदाय
नमो नमो भक्तमनोगताय॥ ७६॥
नमोऽस्तु तस्मै‡ भ्रमनाशनाय
नमोऽस्तु ते मन्दरधारणाय।
नमोऽस्तु ते यज्ञवराहनाम्ने
नमो हिरण्याक्ष्यविदारणाय॥ ७७॥
नमोऽस्तु ते वामनरूपभाजे
नमोऽस्तु ते क्षत्रकुलान्तकाय।
नमोऽस्तु ते रावणमर्द्दकाय§
नमोऽस्तु ते नन्दसुताग्रजाय॥ ७८॥
नमस्ते कमलाकान्त नमस्ते सुखदायिने।
स्मृतार्त्तिनाशिने तुभ्यं भूयो भूयो नमो नमः॥ ७९॥

---

* कारणवामनाय इति (क), (ङ)।

† सत्त्वादिविवर्ज्जिताय इति (ख)।

‡ नमो नमस्ते भ्रमनाशकाय इति (ग)।

§ रावणमर्द्दनाय इति (ङ)।

य इदं वामनस्तोत्रं त्रिसन्ध्यं* पठते नरः ।
बलारोग्यार्थसन्तानैः†स्तस्य नित्योत्सवो भवेत् ॥ ८० ।
इति स्तुतः स देवेशो वामनो लोकपावनः‡ ।
उवाच प्रहसन्तुष्टिं वर्द्धयन् कश्यपस्य सः ॥ ८१ ।

श्रीभगवानुवाच ।

तात तुष्टोऽस्मि भद्रं ते भविष्यति सुरार्च्चित§ ।
अचिरात्साधयिष्यामि अखिलं त्वन्मनोरथम्¶ ॥ ८२ ।
अहं जन्मद्वयेऽप्येवं युवयोः पुत्रतां गतः ।
भाविजन्मन्यपि तथा साधयाम्युत्तमं सुखम्|| ॥ ८३ ।
अत्रान्तरे बलिर्दैत्यो दीर्घसत्रं महामखम् ।
आरेभे गुरुणा युक्तः काव्येन च मुनीश्वरैः ॥ ८४ ।
तस्मिन्मखे** समाहूतो विष्णुर्लक्ष्मीसमन्वितः ।
हविःस्वीकरणार्थाय ऋषिभिर्ब्रह्मवादिभिः । ८५ ।
प्रवृद्धैश्वर्य्यदैत्यस्य वर्त्तमाने महाक्रतौ ।

---

* त्रिसन्ध्यासु पठेन्नरः इति (क), (ख), (घ) । त्रिसन्ध्यं यः पठेन्नर. इति (ङ) ।

† धनारोग्यार्थसन्तानैरिति (ख) ।

‡ लोकपालकः इति (ग), (घ) ।

§ भविष्यसि सुरार्च्चितः इति (ग) । अहं तुष्टोऽस्मि भद्रं ते भविष्यति सुरार्च्चितम् इति (ख) ।

¶ सम्पूर्णं त्वन्मनोरथमिति (ग) ।

|| भविष्याम्युत्तमं सुखमिति (क) । भावयाम्युत्तमं सुखमिति (ङ) । अतः परं (ख) पुस्तके सूत उवाच इति पाठोऽस्ति ।

** यज्ञे इति (ग) ।

वामनाख्यो महाविष्णुराजगाम बलेर्म्मखम् ॥ ८६ ।
स्मितेन मोहयल्लोकं वामनो भक्तवत्सलः ।
बलेः प्रत्यक्षतां गत्वा हविर्भोक्तुमुपाययौ ॥ ८७ ।
दुर्वृत्तो वा सुवृत्तो वा जड़ो* वा पण्डितोऽपि वा ।
भक्तियुक्तो भवेत्तस्य सदा सन्निहितो हरिः ॥ ८८ ।
आयान्तं† वामनं दृष्ट्वा ऋषयो ज्ञानचक्षुषः ।
ज्ञात्वा नारायणं देवमुद्ययुर्ब्रह्मवादिनः‡ ॥ ८९ ।
एतज्ज्ञात्वा दैत्यगुरुरेकान्ते बलिमब्रवीत् ।
स्वसारमविचार्य्यैव§ खलाः कार्य्याणि कुर्व्वते ॥ ९० ।

भार्गव उवाच ।

भो भो दैत्यपते सौम्य अपहर्त्तुं तव श्रियम् ।
विष्णुर्वामनरूपेण अदितेः पुत्रतां गतः ॥ ९१ ।
तवाध्वरं समायाति त्वया तस्मात्सुरेश्वर ।
न किञ्चिदपि दातव्यं मन्मतं¶ शृणु पण्डित ॥ ९२ ।
आत्मबुद्धिः शुभकरी गुरुबुद्धिर्विशेषतः ।
परबुद्धिर्विनाशाय स्त्रीबुद्धिः प्रलयङ्करी ॥ ९३ ।
शत्रूणां हितकृद्यस्तु स हन्तव्यो विशेषतः ।

---

* अज्ञो वा इति (ख)।

† आयातमिति (क), (ङ)।

‡ तुष्टुवुर्ब्रह्मवादिन इति (क)। सुस्तुवुर्ब्रह्मवादिन इति (ङ)।

§ सारं सत्वं विचार्य्यैव इति (ङ)।

¶ तन्मतमिति (घ)।

सहाये नाशमायाते किं कार्य्यं साध्यते वद ॥ ९४ ।

बलिरुवाच ।

एवं गुरो न वक्तव्यं धर्म्ममार्गविरोधकम्* ।
यद्यादत्ते स्वयं विष्णुः किमस्मादधिकं परम्† ॥ ९५ ।
कुर्व्वन्ति विदुषो यज्ञान्विष्णुप्रीणनकारणम्‡ ।
स चेत्साक्षाद्विभुञ्जीत इतः§ कोऽप्यधिको भुवि ॥ ९६ ।
दरिद्रेणाऽपि यत्किञ्चिद्विष्णवे दीयते गुरो ।
तदेव परमं दानं दत्तं भवति चाक्षयम् ॥ ९७ ।
स्मृतोऽपि परया भक्त्या पुनाति पुरुषोत्तमः ।
येन केनाप्यर्च्चितस्तु ददाति परमां गतिम् ॥ ९८ ।
हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ॥ ९९ ।
जिह्वाग्रे वर्त्तते यस्य हरिरित्यक्षरद्वयम् ।
विष्णुलोकमवाप्नोति पुनरावृत्तिवर्ज्जितः¶ ॥ १०० ।
गोविन्देति सदा ध्यायेद्यस्तु रागादिवर्ज्जितः ।
स याति विष्णुभवनमिति प्राहुर्मनीषिणः ॥ १०१ ।

---

* विरोधतः इति (ख), (ग) ।

† अधिकं फलमिति (ख) ।

‡ कारणात् इति (ख) ।

§ साक्षाद्विर्भुञ्जेदत इति (ग), (घ) । भुञ्जेदार्षं भुञ्जीत इति साधु । हविर्भुञ्जीदत कोऽप्यधिकोभुवि इति (ङ) सचेत्साक्षाद्विभोजी मतः कोऽप्यधिको भुवीति (ख) ।

¶ पुनरावृत्तिदुर्लभमिति (घ) ।

अग्नौ वा ब्राह्मणे वाऽपि हूयते* यद्धविर्गुरो।
हरिबुद्ध्या महाभाग तेन विष्णुः प्रसीदति॥ १०२।
अहन्तु हरितुष्ट्यर्थं करोम्यध्वरमुत्तमम्।
स्वयमायाति चेद्विष्णुः कृतार्थोऽस्मि न संशयः† ॥ १०३।
एवं वदति दैत्येन्द्रे विष्णुर्वामनरूपधृक्।
प्रविवेशाध्वरगृहं हुतवह्निमनोरमम्॥ १०४।

सूत उवाच।

विष्णवेऽस्मै जगद्धाम्ने दत्वाऽर्घ्यं विधिवद्बलिः।
रोमाञ्चिततनुर्भूत्वा हर्षाश्रुनयनोऽब्रवीत्॥ १०५।

बलिरुवाच।‡

अद्य मे सफलं जन्म अद्य मे सफलो मखः।
जीवनं सफलं मेऽद्य कृतार्थोऽस्मि न संशयः॥ १०६।
अमोघाऽमृतवृष्टिर्मे समायाताऽतिदुर्लभा।
त्वदागमनमात्रेण अनायासो महोत्सवः॥ १०७।
एते च ऋषयः सर्व्वे कृतार्था नात्र संशयः।
यैः पूर्व्वं यत्तपस्तप्तं तदद्य सफलं प्रभो॥ १०८।
कृतार्थोऽस्मि कृतार्थोऽस्मि कृतार्थोऽस्मि न संशयः।
तस्मात्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः॥ १०९।

---

* क्षिप्यते इति (ग)।

† (ख) पुस्तकेऽतः परं सूत उवाच इति पाठो वर्त्तते।

‡ एषपाठः (ग), (घ) पुस्तकयोर्नास्ति।

त्वदाज्ञया त्वन्नियोगं* साधयामीति मे मनः ।
इत्युत्साहसमायुक्तं समाज्ञापय मां विभो† ॥ ११० ।
इत्युक्ते दीक्षिते तस्मिन् प्रहसन्वामनोऽब्रवीत् ।
देहि मे तपसि स्थातुं भूमिं त्रिपदसम्मिताम्‡ ॥ १११
एतच्छ्रुत्वा बलिः प्राह राज्यं याचितवान्नहि ।
ग्रामं वा नगरं वाऽपि धनं वा किं कृतन्त्वया§ ॥ ११२
तन्निशम्य बलिं प्राह विष्णुः कपटवेशधृक्¶ ।
आसन्नभ्रष्टराज्यस्य वैराग्यं जनयन्निव|| ॥ ११३ ।
शृणु दैत्येन्द्र वक्ष्यामि गुह्याद्गुह्यतरं परम् ।
सर्व्वसङ्गविहीनानां किमर्थैः साध्यते वद ॥ ११४ ।
अहन्तु सर्व्वभूतानामन्तर्यामीति भावय** ।
मयि सर्व्वमिदं दैत्य किमन्यैः साध्यते धनैः ॥ ११५ ।
रागद्वेषविहीनानां शान्तानां त्यक्तमायिनाम्†† ।

---

* यदाज्ञाप्यं यन्नियोगमिति (क) ।

† (ख) पुस्तकेऽतः परं सूत उवाच इति पाठो वर्त्तते ।

‡ संयुतामिति (क) ।

§ धन वापि कृतम्मया इति (क) । चात्यल्पिकञ्चिद्दत्तं त्वया इति (ख) । अचातः पर सूत उवाच इति पाठोऽस्ति ।

¶ वेषकृदिति (ग) ।

|| (ख) पुस्तके एतस्मादनन्तरं श्रीभगवानुवाच इति पाठो वर्त्तते । तत्र (११४) श्लोकस्य पूर्व्वार्द्धं नास्ति ।

** भावयेदिति (ग) ।

†† हतमायिनामिति (ग) । एष श्लोकः (ङ) पुस्तके नास्ति ।

नित्यानन्दस्वरूपाणां किमन्यैः साध्यते धनैः ॥ ११६ ।
आत्मवत्सर्व्वभूतानि पश्यतां शान्तचेतसाम् ।
अभिन्नमात्मनः सर्व्वं को दाता दीयते च किम् ॥ ११७ ।
पृथ्वीयं क्षत्रियवशा इति शास्त्रेषु निश्चितम्* ।
तदाज्ञया स्थिताः सर्व्वे लभन्ते परमं सुखम् ॥ ११८ ।
दातव्यो मुनिभिश्वाऽपि षष्ठांशो भूभुजे बले ।
महीयं ब्राह्मणानान्तु दातव्या सर्व्वयत्नतः ॥ ११९ ।
भूमिदानस्य माहात्म्यं शृणु त्वं† गदतो मम ।
न कोऽपि गदितुं शक्तो लोकेऽस्मिन्दैत्यसत्तम ॥ १२० ।
भूमिदानात्परं दानं न भूतं न भविष्यति ।
परं निर्व्वाणमाप्नोति भूमिदानान्न संशयः ॥ १२१ ।
स्वल्पामपि महीं दत्त्वा श्रोत्रियायाहिताग्नये ।
ब्रह्मलोकमवाप्नोति पुनरावृत्तिदुर्लभम् ॥ १२२ ।
भूमिदः सर्व्वदः प्रोक्तो भूमिदो मोक्षभाग्भवेत् ।
भूमिदानन्तु तज्ज्ञेयं सर्व्वपापप्रणाशनम् ॥ १२३ ।
महापातकयुक्तो वा युक्तो वा सर्व्वपातकैः ।
दशहस्तां महीं दत्त्वा सर्व्वपापैः प्रमुच्यते ॥ १२४ ।
सत्पात्रे भूमिदाता यः सर्व्वदानफलं लभेत् ।
भूमिदस्य समो नान्यस्त्रिषु लोकेषु विद्यते‡ ॥ १२५ ।

---

* गीयते इति (ख) ।

† शृणुत्वमिति (क), (ग) । शृणुष्व इति (ख) ।

‡ भूमिदानसमं नान्यत्त्रिषु लोकेषु वर्त्तते इति (घ) ।

द्विजस्य वृत्तिहीनस्य यः प्रदद्यान्महीं* बले ।
तस्य पुण्यफलं वक्तुं नाहं वर्षशतैरपि ॥ १२६ ।
सक्तस्य देवपूजासु वृत्तिहीनस्य भूमिप† ।
स्वल्पामपि महीं दद्यात्स विष्णुर्नात्र संशयः‡ ॥ १२७ ।
वृत्तिहीनस्य विप्रस्य दरिद्रस्य कुटुम्बिनः ।
अल्पामपि महीं दत्त्वा विष्णोः सायुज्यमाप्नुयात् ॥ १२८
सक्तस्य देवपूजासु विप्रस्याढ़किकां महीम् ।
दत्त्वा भवति गङ्गायां त्रिरात्रस्नानजं फलम् ॥ १२९ ।
विप्रस्य वृत्तिहीनस्य सदाचाररतस्य च ।
द्रोणिकां पृथिवीं दत्वा यत्फलं लभते शृणु ॥ १३० ।
गङ्गातीरेऽश्वमेधानां शतानि विधिवन्नरः ।
कृत्वा यत्फलमाप्नोति तदाप्नोति महत्फलम् ॥ १३१ ।
ददाति खारिकां भूमिं दरिद्राय द्विजातये ।
तस्य पुण्यं प्रवक्ष्यामि वदतस्तन्निशामय ॥ १३२ ।
अश्वमेधसहस्राणि वाजपेयशतानि च ।
विधाय जाह्नवीतीरे यत्फलं लभते ध्रुवम् ॥ १३३ ।
भूमिदानं महादानमतिदानं प्रकीर्त्तितम् ।
सर्व्वपापप्रशमनमपवर्गफलप्रदम् ॥ १३४ ।

---

* यश्च दद्यान्महीं बले इति (ख) ।

† शक्तस्य देवपूजार्थमिति (ङ) । दैत्यप इति (ग), (ङ) सर्व्वदा इति (ख) ।

‡ (ङ) पुस्तके अतः परं ''इक्षुगोधूमतुलसीपूगवृक्षादिसंयुता । पृथ्वी प्रदीयते येन स विष्णुर्नात्र संशयः ।" इत्यधिकः श्लोको वर्त्तते ।

इतिहासमिमं वच्मि* शृणु दैत्यकुलेश्वर।
यच्छ्रुत्वा श्रद्धया युक्तो भूमिदानफलं लभेत्॥ १३५॥
आसीत्पुरा द्विजवरो ब्रह्मकल्पो† महामुनिः।
दरिद्रो वृत्तिहीनश्च नाम्ना भद्रमतिर्बले॥ १३६॥
श्रुतानि सर्व्वशास्त्राणि‡ तेन वेदविदा बले।
श्रुतानि च पुराणानि धर्म्मशास्त्राणि सर्व्वशः॥ १३७॥
अभवंस्तस्य षट् पत्न्यः श्रुता सिन्धुर्यशोवती।
कामिनी मानिनी चैव शोभा चैव प्रकीर्त्तिता॥ १३८॥
तासु पत्नीषु तस्यासंश्चत्वारिंशच्छतत्रयम्§।
पुत्राणामसुरश्रेष्ठ सर्व्वे नित्यं बुभुक्षिताः॥ १३९॥
अकिञ्चनो भद्रमतिः क्षुधार्त्तानात्मजान् प्रियान्।
पश्यन् स्वयं क्षुधार्त्तश्च विललापाकुलेन्द्रियः॥ १४०॥
धिग्जन्म भाग्यरहितं धिग्जन्म धनवर्ज्जितम्।
धिग्जन्म यत्ननिरतं धिग्जन्म सुखवर्ज्जितम्॥ १४१॥
धिग्जन्म धर्म्मरहितं धिग्जन्मातिथ्यवर्ज्जितम्¶।
धिग्जन्माचाररहितं धिग्जन्म याच्ञया रतम्॥ १४२॥

---

* अहं वक्ष्ये इति (घ)।

† ब्रह्मकल्पे इति (घ)।

‡ सर्व्वशास्त्राण्यधीतानि इति (ख)।

§ शतद्वयमिति (ग)।

¶ धिग्जन्म यत्ननिरतं धिग्जन्मातिथ्यवर्ज्जितमिति (ग)।

धिग्जन्म बन्धुरहितं धिग्जन्म ख्यातिवर्ज्जितम्* ।
नरस्य बह्वपत्यस्य धिग्जन्मैश्वर्य्यवर्ज्जितम् ॥ १४३ ॥
अहो गुणाः सौम्यता च विद्वत्ता जन्म सत्कुले ।
दारिद्र्याम्बुधिमग्नस्य सर्व्वमेतन्न शोभते ॥ १४४ ॥
प्रियाः पुत्राश्च पौत्राश्च बान्धवा भ्रातरस्तथा ।
शिष्याश्च सर्व्वे मनुजास्त्यजन्त्यैश्वर्य्यवर्ज्जितम् ॥ १४५ ॥
चाण्डालो वा द्विजो वाऽपि भाग्यवानेव पूज्यते ।
दरिद्रः पुरुषो लोके शववल्लोकनिन्दितः† ॥ १४६ ॥
अहो सम्पत्समायुक्तो निष्ठुरो वाऽप्यनिष्ठुरः ।
गुणहीनोऽपि गुणवान्मूर्खो वाऽपि स पण्डितः ॥ १४७ ॥
निष्ठुरो वा गुणी वाऽपि धर्म्महीनोऽपि वा नरः ।
ऐश्वर्य्यगुणयुक्तश्चेत्पूज्य एव न संशयः ॥ १४८ ॥
अहो दरिद्रता दुःखं तत्राऽप्याशाऽतिदुःखदा ।
आशाभिभूताः पुरुषाः दुःखमश्नुवते स्वयम् ॥ १४९ ॥
आशाया दासवद्दासाः सर्व्वलोकस्य चैव हि ।
मानं हि महतां लोके धनमक्षयमुच्यते‡ ॥ १५० ॥

---

* (क) पुस्तके (१४१) (१४२) श्लोकौ न स्तः। धिग्जन्म सुखवर्ज्जितमिति (ग (ङ) पुस्तके एतदर्द्धं नास्ति। (ख) पुस्तके (१४१), (१४२), (१४३) श्लोकत्रयं नास्ति

† सर्व्वत्रैव हि निन्द्यते इति (ख)।

‡ (ख), (ग) पुस्तकयोरेतस्माच्छ्लोकात् पूर्व्वमार्य्येयं दृश्यते—
"आशा दासा येषां (न ?) ते दासाः सकललोकस्य।
आशा दासा येषां तेषां दासायते लोकः ॥"
(ख) पुस्तके परश्लोकस्य पूर्व्वार्द्धं नास्ति।

तदेवाशाख्यरिपुणा प्रनष्टाहो दरिद्रता* ।
सर्व्वशास्त्रार्थवेत्तापि दरिद्रो भाति मूर्खवत् ॥ १५१ ।
अकिञ्चनमहारोगग्रस्तानां को विमोचकः† ।
अहो दुःखमहो दुःखमहो दुःखं दरिद्रता ।
तत्राऽपि‡ पुत्रदाराणां बाहुल्यमतिदुःखदम् ॥ १५२ ।
एवमुक्त्वा भद्रमतिः सर्व्वशास्त्रार्थकोविदः§ ।
अल्पैश्वर्य्यपदं धर्म्मं मनसाऽचिन्तयत्तदा ॥ १५३ ।
भूमिदानं विनिश्चित्य सर्व्वदानोत्तमोत्तमम् ।
पावकं¶ परमं धर्म्मं सर्व्वकामफलप्रदम् ॥ १५४ ।
दानानामुत्तमं दानं भूदानं परिकीर्त्तितम् ।
यद्दत्त्वा समवाप्नोति यद्यदिष्टतमं नरः ॥ १५५ ।
इति निश्चित्य मतिमान्धीरो भद्रमतिर्बली ।
कौशाम्बीन्नाम नगरीं कलत्रसहितो ययौ ॥ १५६ ।
सुघोषं नाम विप्रेन्द्रं सर्व्वैश्वर्य्यसमन्वितम् ।
गत्वा याचितवान् भूमिं पञ्चहस्तायतां बली ॥ १५७ ।
सुघोषो धर्म्मनिरतस्तं निरीक्ष्य कुटुम्बिनम् ।

---

* सा प्रनष्टा दरिद्रता इति (क)। रिपुणाहोप्रनष्टा दरिद्रता इति (ग), (ङ)।

† महामोहग्रस्तानामिति (क), (ङ)। महाग्राहग्रस्तानामिति (ख)।

‡ तथापि इति (ग)। एतदर्द्धं (ङ) पुस्तके नास्ति।

§ सर्व्वशास्त्रपरायण इति (ख)। एतस्मात् पूर्व्वं सूत उवाच इति पाठो वर्त्तते।
सर्व्वशास्त्रार्थपारगः इति (घ), (ङ)।

¶ नायकं इति (क), (ग)।

मनसा प्रीतिमापन्नः समभ्यर्च्यैनमब्रवीत्* ॥ १५८ ।
कृतार्थोऽस्मि भद्रमते सफलं मम जन्म च ।
मत्कुलं चाऽनघं जातमनुग्राह्योऽस्मि ते यतः† ॥ १५९ ।
इत्युक्त्वा तं समभ्यर्च्य सुघोषो धर्म्मतत्परः ।
पञ्चहस्तप्रमाणन्तु ददौ तस्मै महामतिः ॥ १६० ।
पृथिवी वैष्णवी पुण्या, पृथिवी विष्णुपालिता ।
पृथिव्यास्तु प्रदानेन प्रीयतां मे जनार्द्दनः ॥ १६१ ।
मन्त्रेणानेन दैत्येन्द्र सुघोषस्तं द्विजेश्वरम्‡ ।
विष्णुबुद्ध्या समभ्यर्च्य तावतीं पृथिवीं ददौ§ ॥ १६२ ।
सोऽपि भद्रमतिर्विप्रो¶ धीमांस्तां याचितां भुवम्‖ ।
दत्तवान्हरिभक्ताय श्रोत्रियाय कुटुम्बिने ॥ १६३ ।
सुघोषो भूमिदानेन कोटिवंशसमन्वितः ।
प्रपेदे विष्णुभवनं यत्र गत्वा न शोचति ॥ १६४ ।
बले भद्रमतिश्चाऽपि यतः प्रार्थितवान् श्रियम्** ।
स्थितवान्विष्णुभवने सकुटुम्बो युगायुतम् ॥ १६५ ।

---

* समभ्यर्च्येदमब्रवीदिति (ख) ।

† मनुपाल्योऽस्मि ते वर इति (ख) । तत्र अस्माच्छ्लोकादनन्तरं श्रीकृष्ण उवाच इति पाठोऽस्ति ।

‡ द्विजोत्तममिति (ख) ।

§ भारतीं पृथिवीं ददौ इति (क), (घ) ।

¶ भद्रमतिर्धीर इति (क), (घ), (ङ) ।

‖ मह्यीमिति (ख) ।

** बले भद्रमतिस्त्वेवं कृत्वा प्रापितवान् श्रियमिति (क) ।

ततस्तु ब्रह्मसदने स्थित्वा युगशतायुतम्* ।
ऐन्द्रं पदं समाश्रित्य स्थितवान्कल्पपञ्चसु† ॥ १६६ ।
ततो भुवं समासाद्य सर्व्वैश्वर्य्यसमन्वितः ।
जातिस्मरो महाभागो बुभुजे भोगमुत्तमम् ॥ १६७ ।
ततो भद्रमतिर्दैत्य निष्कामी विष्णुतत्परः ।
पृथिवीं वृत्तिहीनानां ब्राह्मणानां प्रदत्तवान्‡ ॥ १६८ ।
तस्य विष्णुः प्रसन्नात्मादत्त्वैश्वर्य्यमनुत्तमम् ।
कोटिवंशसमेतस्य ददौ मोक्षमनुत्तमम्§ ॥ १६९ ॥
तस्माद्दैत्यपते मह्यं सर्व्वधर्म्मपरायण ।
तपश्चरिष्ये मोक्षाय देहि मे त्रिपदां महीम् ॥ १७० ।
विरोचनसुतो हृष्टः कलसं जलपूरितम् ।
आददे पृथिवीं दातुं वञ्चितो¶ भार्गवस्य सः ॥ १७१ ।

---

* युगशतं बले इति (क) ।

† (ख) पुस्तकेऽस्य श्लोकस्य पूर्व्वार्द्धं नास्ति, कल्पपञ्चकमिति (ग) ।

‡ (ख) पुस्तके (१६८) श्लोकोनास्ति, अत्र च ततो भद्रमतिर्दैत्यनिक्षेप इति पाठः । एतच्चरणद्वयं (घ) पुस्तके नास्ति । तत्र केवलं श्लोकार्द्धं विद्यते, तदप्यन्यविधं यथा—कोटिवंशसमेतस्य ददौ मोक्षमनुत्तमम् । हीनवृत्तीनां ब्राह्मणानामिति (ङ) ।

§ (ग) पुस्तके श्लोकस्यैतस्य परार्द्धं नास्ति, पूर्व्वार्द्धे च अदत्तैश्वर्य्यमिति पाठोऽस्ति । (घ) पुस्तके (१६८) श्लोकोनास्ति, अस्य च पूर्व्वार्द्धं नास्ति, (ङ) पुस्तके पूर्व्वार्द्धे तस्य विष्णुः प्रसन्नात्मा महैश्वर्य्यमनुत्तममिति पाठो वर्त्तते ।

¶ (ख) पुस्तके (१७१) श्लोकात्पूर्व्वं सूत उवाच इति पाठो वर्त्तते । बहुषु पुस्तकेषु वर्णितो भार्गवस्य स इति पाठो वर्त्तते, (ख) (ङ) पुस्तकयोस्तु वर्णितो वामनस्य सः इति पाठोऽस्ति ।

विष्णुः सर्व्वगतो ज्ञात्वा जलाधारविरोधिनम् ।
काव्यं हस्तस्य दर्भाग्रं तद्वारि सन्न्यवेशयत् ॥ १७२ ।
दर्भाग्रेऽभून्महाशस्त्रं रविकोटिसमप्रभम् ।
अमोघं ब्राह्ममत्युग्रं काव्याच्चियासलोलुपम् ॥ १७३ ।
शशाप* भार्गवः शूरां†नसुरानेकचक्षुषा ।
पश्येति व्यादिदेशैव दर्भाग्रं शस्त्रसन्निभम् ॥ १७४ ।
बलिर्ददौ महाविष्णोर्महीं त्रिपदसम्मिताम् ।
ववृधे सोऽपि विश्वात्मा आब्रह्मभवनं तदा ॥ १७५ ।
अमिमीत‡ महीं द्वाभ्यां पद्भ्यां विश्वतनुर्हरिः§ ।
आब्रह्माण्डकटाहान्तं पदान्येनामितप्रभः¶ ॥ १७६ ।
पादाङ्गुष्ठाग्रनिर्भिन्नो ब्रह्माण्डो बिभिदे द्विधा ।
तद्वारा वाह्यसलिलं वहुधारं समागतम् ॥ १७७ ।
धौतविष्णुपदं तोयं निर्म्मलं लोकपावनम् ।
अजाण्डवाह्यसलिलं धारारूपमवर्त्तत‖ ॥ १७८ ॥
तज्जलं पावनं श्रेष्ठं ब्रह्मादीन् पावयन् सुरान् ।
संसेवितं सप्तर्षिभिः पतितं मेरुमूर्द्धनि ॥ १७९ ।

---

* शशाम इति (क), (घ) ।

† सुरानिति (ख), (ग) ।

‡ अमीमित इति (क), (ग) ।

§ विष्णुतनुरिति (ख) ।

¶ पदं निन्येऽमितप्रभ इति (ग) ।

‖ (घ) पुस्तके श्लोकस्यैतस्य स्थाने केवलं श्लोकार्द्धमस्ति, यथा धौतविष्णुपदं तोयं धारारूपमवर्त्तत इति ।

इति दृष्ट्वाद्भुतं कर्म्म ब्रह्माद्या देवतागणाः।
ऋषयो मनवश्चैव अस्तुवन हर्षसंयुताः* ॥ १८० ।

ब्रह्माद्या ऊचुः।

नमः परेशाय परात्मरूपिणे†
परात्पराय पररूपधारिणे।
ब्रह्मात्मने ब्रह्मरतात्मबुद्धये‡
नमोऽस्तु ते व्याहतकर्म्मशालिने ॥ १८१ ।

परेश परमानन्द परमात्मन् परात्पर।
सनातन जगन्नाथ§ प्रमाणातीत ते नमः ॥ १८२ ।
विश्वतश्चक्षुषे तुभ्यं विश्वतोबाहवे नमः।
विश्वतः शिरसे तुभ्यं विश्वतोगतये नमः¶ ॥ १८३ ।
एवं स्तुतो महाविष्णुर्ब्रह्मादीनां दिवौकसाम्।
दत्त्वा स्वस्वपदन्तेषां प्रहसन्नभयं ददौ ॥ १८४ ।
विरोचनात्मजं दैत्यं बन्धयामास माधवः।
ददौ रसातलं तस्मै|| निवासं भोगसंयुतम् ॥ १८५ ।

---

* मुनयश्चैव अस्तुवन् हर्षसम्भ्रमाः इति (क), (घ), (ङ)।

† बहुषु पुस्तकेषु परमात्मरूपिणे इति पाठो वर्त्तते। (घ) पुस्तके परात्स्वरूपिणे (पर-स्वरूपिणे ?) इति पाठः।

‡ ब्रह्मविशुद्धबुद्धये इति (ख), ब्रह्मभवात्मबुद्धये इति (ङ)।

§ जगन्मूर्त्ते इति (क), (ख), (ङ)।

¶ (घ) पुस्तके श्लोकस्यैतस्य स्थाने केवल चरणद्वयमस्ति, यथा विश्वतश्चक्षुषे तुभ्यं विश्वतोगतये नमः इति। विश्वभोगभुवे नम इति (ख)।

|| तस्य इति (क), (ख), (ग)।

ऋषय ऊचुः ।

रसातले महाविष्णुर्विरोचनसुतस्य वै ।
किं भोज्यं कल्पयामास घोरे सर्पभयाकुले ॥ १८६ ।

सूत उवाच ।

अमन्त्रितो हविर्यस्तु हूयते जातवेदसि ।
अपात्रे दीयते यच्च तद्घोरं भोगसाधनम्* ॥ १८७ ।
हुतं हविरशुचिना दत्तञ्च कर्म्म यत्कृतम्† ।
तत्सर्व्वं तत्र भोगार्थमधःपातफलप्रदम् ॥ १८८ ।
एवं रसातलं विष्णुर्बलीन्द्राय प्रदत्तवान्‡ ।
राक्षसानाञ्च सर्व्वेषां सुराणां नाकमुत्तमम् ॥ १८९ ।
अर्च्यमानोऽमरगणैः स्तूयमानो महर्षिभिः ।
गन्धर्व्वैर्गीयमानश्च पुनर्वामनतां गतः§ ॥ १९० ।
एतद्दृष्ट्वा महत्कर्म्म मुनयो ब्रह्मवादिनः ।
परस्परं स्मितमुखाः प्रणेमुः पुरुषोत्तमम् ॥ १९१ ।
सर्व्वभूतात्मको विष्णुर्वामनत्वमुपागतः ।
मोहयन्नखिलं लोकं प्रपेदे तपसे वनम् ॥ १९२ ।
एवंप्रभावा सा देवी गङ्गा विष्णुपदोद्भवा ।

---

* तत्सर्व्वं भोगसाधनमिति (क) ।

† हुतं दत्तञ्चाशुचिना अन्यद्वा कर्म्म यत्कृतमिति (क) ।

‡ बलये वै प्रदत्तवान् इति (ख) ।

§ वामनतां ययौ इति (ङ) ।

यस्याः* स्मरणमात्रेण मुच्यते सर्व्वपातकैः† ॥ १८३ ।
गङ्गा गङ्गेति यो ब्रूयाद्योजनानां शतैरपि ।
सर्व्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ १८४ ।
यः पठेदिममध्यायं‡ शृणुयाद्वा समाहितः ।
देवालये वालये वा सोऽश्वमेधसहस्रकृत् ॥ १८५ ।
समाहितमना§ ये तु व्याख्यानं कुर्व्वते नराः ।
न तेषां पुनरावृत्तिर्गङ्गाविष्णुप्रसादतः ॥ १८६ ।

इति श्रीवृहन्नारदीये पुराणे एकादशोऽध्यायः।

---

## अथ द्वादशोऽध्यायः।

ऋषय ऊचुः ।

दानानि कस्य देयानि दानकालश्च कीदृशः ।
कश्च वा प्रतिगृह्णीयात्सूत नो वक्तुमर्हसि ॥ १ ।

---

* तस्याः इति (क)।

† सर्व्वपापैः प्रमुच्यते इति (ख)।

‡ ध्यायस्तुवन्नमस्यश्च इति (क)।

§ समाहितमना इति आर्षं, समाहितमनस इति साधु। 'समाहितमना यस्तु व्याख्यानं कुरुते नरः, न तस्य' इति सर्व्वत्रैकवचने कृते:तु न दोषः।

सूत उवाच ।

सर्व्वेषामेव वर्णानां ब्राह्मणः परमो गुरुः ।
तस्य दानानि देयानि स तारयति पण्डितः ॥ २ ॥
ब्राह्मणः प्रतिगृह्णीयात्सर्व्वत्राभीरवर्ज्जितः ।
न कदाचित्क्षत्रविशौ प्रतिग्रहपरौ स्मृतौ ॥ ३ ॥
दम्भस्य* पुत्रहीनस्य दम्भाचाररतस्य च ।
वेदविद्वेषिणश्चैव दत्तं भवति निष्फलम् ॥ ४ ॥
देवविद्वेषिणश्चैव द्विजविद्वेषिणस्तथा ।
स्वकर्म्मत्यागिनश्चाऽपि दत्तं भवति निष्फलम् ॥ ५ ॥
परदाररतस्याऽपि परद्रव्यरतस्य च ।
नक्षत्रपाठकस्याऽपि दत्तं भवति निष्फलम् ॥ ६ ॥
असूयाविष्टमनसः कृतघ्नस्य च मायिनः ।
अयाज्ययाजकस्याऽपि दत्तं भवति निष्फलम्† ॥ ७ ॥
नित्यं याच्ञापरस्याऽपि हिंसकस्य शठस्य च ।
नामविक्रयिणश्चाऽपि वेदविक्रयिणस्तथा‡ ॥ ८ ॥
स्मृतिविक्रयिणश्चापि धर्म्मविक्रयिणस्तथा§ ।

---

* षण्डस्य पुत्रहीनस्य इति (ख)। तत्र श्लोकस्यास्य परार्द्धं नास्ति।

† (क) पुस्तके (५) (६) (७) अङ्किताः श्लोका न सन्ति। (ग) पुस्तके 'दत्तं भवति निष्फलम्' एतच्चरणं तथा परश्लोकस्य प्रथमं चरणं नास्ति, तत्र अत्रैव हिंसकस्य शठस्य चेति चरणं वर्त्तते।

‡ नामविक्रयिणश्चैव देवविक्रयिणस्तथा इति (क)।

§ एतदर्द्धं (क) पुस्तके नास्ति।

परोपतापशीलस्य दत्तं भवति निष्फलम् ॥ ९ ।
ये केचित्पापनिरता निन्दिताः सुजनैः सदा* ।
न तेभ्यः प्रतिगृह्णीयान्न देयं वाऽपि किञ्चन ॥ १० ।
सत्कर्म्मनिरतायैव श्रोत्रियायाहिताग्नये ।
वृत्तिहीनाय वै देयं दरिद्राय कुटुम्बिने ॥ ११ ।
देवपूजासु सक्तस्य सत्कथाकथने तथा ।
देयं प्रयत्नतो विप्रा दरिद्रस्य विशेषतः ॥ १२ ।

इति श्रीबृहन्नारदीये पुराणे द्वादशोऽध्यायः† ।

---

## अथ त्रयोदशोऽध्यायः ।

ऋषय ऊचुः ।

कथं विज्ञातवान्सूत महाभागो भगीरथः ।
गङ्गायाः शुभमाहात्म्यं कथञ्चानीतवान्पुरा ॥ १ ।*

सूत उवाच ।

सम्यग्व्यवसिता बुद्धिर्युष्माकं द्विजसत्तमाः ।

---

* स्वजनैस्तथा इति (घ) ।

† (ख) पुस्तके एषोऽध्यायो न सम्यग्वर्त्तते ।

* (ख) पुस्तके श्लोकोऽयमेवं पठितः— कथं विज्ञातवान् सूत महाराजोभगीरथः नदीनामुत्तमाङ्गङ्गामाहात्म्यञ्च कथञ्चन, कथं वानीतवान्मन्या त्रैलोक्यानन्दवर्द्धिनीम् ।

यन्नामगहिमासक्ताः प्रयान्ति परमाङ्गतिम् ॥ २ ।
शृणुध्वमृषयः सर्व्वे नारदेन महात्मना ।
सनत्कुमारमुनये गीतं यत्पुण्यसाधनम् ॥ ३ ।
यच्छ्रुत्वा* पुण्यमाख्यानं सर्व्वपापप्रणाशनम् ।
ब्रह्महा शुद्धिमाप्नोति इत्याह भगवान्मुनिः ॥ ४ ।
कथमानीतवान्गङ्गां सागरेयो भगीरथः ।
केन प्रचोदितोऽप्यासीत्तत्सर्व्वं कथयामि वः ॥ ५ ।
भगीरथो महाराजः सगरान्वयसम्भवः ।
शशास पृथिवीमेनां सप्तद्वीपांससागराम् ॥ ६ ।
सर्व्वधर्म्मरतो† नित्यं सत्यवः सर्व्वधर्म्मवित् ।
सत्यव्रती महाभागो यायजूको विचक्षणः ॥ ७ ।
कन्दर्पसदृशो रूपे सोमवत्प्रियदर्शनः ।
प्रालेयाद्रिसमो धैर्य्ये‡ स वै धर्म्मसमो नृपः§ ॥ ८ ।
सर्व्वलक्षणसम्पन्नः सर्व्वशास्त्रार्थपारगः ।
सर्व्वसम्पत्समायुक्तः सर्व्वानन्दकरो नृपः ॥ ९ ।
अतिथिप्राणको¶ नित्यं वासुदेवार्च्चने रतः ।

---

* तच्छ्रुत्वा इति (क) ।

† सर्व्ववश्यरतः इति (घ) ।

‡ प्रालेयाद्रिसमः स्थैर्य्ये इति (क), (घ) ।

§ सर्व्वधर्म्ममयो नृपः इति (क), धर्म्मे धर्म्मसमो नृप इति (ख), सर्व्वधर्म्मसमो नृपः इति (घ) ।

¶ अतिथिप्रियतरो नित्यं इति (क), (ख), (ग), पाठेऽत्राक्षराधिक्यम् ।

पराक्रमी गुणनिधिर्मैत्रः प्राणिहिते रतः* ॥ १० ।
एवं बहुगुणनिधिं राजानन्तं भगीरथम् ।
धर्म्मराजो महाप्राज्ञः कदाचिद्द्रष्टुमागतः† ॥ ११ ।
समागतं धर्म्मराजमर्हणाभिर्भगीरथः ।
यथोचिताभिरभ्यर्च्य‡ ननाम क्षितिमण्डले ॥ १२ ।
कृतातिथ्यक्रियं कालं कृतासनपरिग्रहम् ।
उवाच प्राञ्जलिर्भूत्वा विनयेन भगीरथः ॥ १३ ।

राजोवाच ।

कृतार्थोऽस्मि महाभाग सर्व्वतत्त्वार्थकोविद§ ।
उपकर्त्तुं समर्थोऽस्मि कथं देवस्य मानुषः ॥ १४ ।
इत्युक्तं सागरं वीरं¶ प्रहसन्धादशात्मजः ।
कृपया परयाविष्टो वाक्यमेतदुवाच ह ॥ १५ ।

काल उवाच ।

राजन्धर्म्मविदां श्रेष्ठ प्रसिद्धोऽसि‖ जगत्त्रये ।
विद्धि मां द्रष्टुमायातं** धर्म्मज्ञं त्वां नृपोत्तमम् ॥ १६ ।

---

* भिक्षाणाञ्च हिते रतः इति (ख) ।

† (ख) पुस्तके श्लोकस्यास्य पूर्व्वार्द्धं नास्ति ।

‡ उद्गम्य इति (क) ।

§ सर्व्वशास्त्रार्थकोविद इति (ग) ।

¶ सागरं तत्र इति (क) ।

‖ प्रसिद्धोऽस्मि इति (ग) ।

** द्रष्टुमायान्तमिति (क), (ङ) ।

सन्मार्गनिरतं मर्त्त्यं सर्व्वभूतहिते रतम् ।
द्रष्टुमिच्छन्ति विबुधा उत्कृष्टगुणलोलुपाः ॥ १७ ।
कीर्त्तिर्नीतिश्च सम्पत्तिर्वर्त्तते यत्र भूपते* ।
वासं प्रकुर्व्वते तत्र† सन्तः सर्व्वाश्च देवताः ॥ १८ ।
अहो राजन्महाभाग शोभनं चरितं तव ।
सर्व्वभूतहितैषित्वं मादृशामपि दुर्लभम् ॥ १९ ।
इत्युक्तवन्तं धर्म्मेशं प्रणिपत्य यथाविधि ।
प्रोवाच भगवान्वाग्मी‡ सूनृतां वदतां वरः ॥ २० ।

राजोवाच ।

भगवन् सर्व्वधर्म्मज्ञ समदर्शिन् सुरेश्वर ।
कृपया परयाविष्टो यद्ब्रवीमि वदस्व मे§ ॥ २१ ।
धर्म्माः कीदृग्विधाः प्रोक्ताः के लोकाः¶ धर्म्मशीलिनः ।
कियन्त्यो‖ यातनाः प्रोक्ताः केषान्ताः परिकीर्त्तिताः ॥२२ ।
त्वया सम्माननीया ये** शासनीयास्तथा च ये ।
एतत्सर्व्वं महाभाग विस्तराद्वक्तुमर्हसि ॥ २३ ।

---

* यत्र भूतले इति (क), (ङ) ।

† वासं कुर्व्वन्ति तत्रैव इति (ङ) ।

‡ विनयाविष्ट इति (क), (ग) ।

§ यद्वदामि शृणुष्व इति (क), यत् पृच्छामि वदस्व तदिति (ग) ।

¶ के लोकं इति (ग), (घ) ।

‖ कियन्त्य इति आर्षं, कियत्य' इति साधु ।

** सम्मानशीला ये इति (क) ।

धर्म्मराज उवाच* ।

साधु साधु महाभाग† मतिस्ते विमलोज्ज्वला ।
धर्म्माऽधर्म्मान्‡ प्रवक्ष्यामि तत्त्वतः शृणु भूपते ॥ २४ ।
धर्म्मा बहुविधाः प्रोक्ताः§ पुण्यलोकप्रदायकाः ।
तथैव यातना घोरा असंख्याताः प्रकीर्त्तिताः ॥ २५ ।
विस्तराद्वदितुं नाऽलमपि वर्षशतैरपि¶ ।
तस्मात्समासतो वक्ष्ये शृणु नान्यमनाः प्रभो ॥ २६ ।
वृत्तिदानं द्विजातीनां महापुण्यं प्रकीर्त्तितम् ।
तच्चेदध्यात्मविदुषे दत्तं भवति चाक्षयम् ॥ २७ ।
कलत्रिणं वा शास्त्रज्ञं श्रोत्रियं वा गुणाऽन्वितम्‖ ।
यो दत्त्वा स्थापयेद्वृत्तिं तस्य पुण्यफल शृणु ॥ २८ ।
मातृतः पितृतश्चैव द्विकोटिकुलसंयुतः ।
निर्व्विश्य विष्णुना कल्पं तत्रैव परिमुच्यते ॥ २९ ।
गण्यन्ते पांशवो भूमेर्गण्यन्ते वृष्टिविन्दवः ।
न गण्यते विधात्राऽपि ब्रह्मसंस्थापनं फलम् ॥ ३० ।
समस्तदेवतारूपो ब्राह्मणः परिकीर्त्तितः ।

---

* (ग) पुस्तके काल उवाच इति पाठो दृश्यते ।

† महाबुद्धे इति (क), (ख), (घ), (ङ) ।

‡ सर्व्वधर्म्मानिति (क) ।

§ धर्म्माश्च विविधाः प्रोक्ता इति (ख) ।

¶ वर्षशतायुतमिति (क), (ख), (घ), (ङ) ।

‖ द्वितीयाप्रयोग आर्ष. ।

जीवनन्ददतस्तस्य कः पुण्यं गदितुं चमः ॥ ३१ ।
यो विप्रहितकृन्नित्यं स सर्व्वान् कृतवान्मखान् ।
स स्नातः सर्व्वतीर्थेषु तप्तं तेनाऽखिलं तपः ॥ ३२ ।
यो ददस्वेति विप्राणां जीवनं प्रोच्यते* नरः ।
सोऽपि तत्फलमाप्नोति किमन्यैर्बहुभाषितैः । ३३ ।
तड़ागं कारयेद्यस्तु स्वयमेव करोति यः† ।
वक्तुं तत्पुण्यगणनां नालं वर्षशतायुतम् ॥ ३४ ।
तड़ागकृन्नरो राजन् पञ्चकोटिकुलान्वितः ।
निर्व्विश्य विष्णुना कल्पं तत्रैव परिमुच्यते ॥ ३५ ।
यः कश्चिदध्वगो राजन्तत्तड़ागजलं पिवेत् ।
तत्कर्त्तुः सर्व्वपापानि नश्यन्त्येव न संशयः ॥ ३६ ।
एकाहमपि यः कुर्य्याद्भूमिष्ठमुदकं नरः ।
स मुक्तः सर्व्वपापेभ्यः शतवर्षं चरेद्दिवि । ३७ ।
कर्त्तुं तड़ागं यो मर्त्त्यः साधकः शक्तितो भवेत् ।
सोऽपि तत्फलमाप्नोति तदुपायप्रदश्च यः ॥ ३८ ।
मृदं तिलार्द्धमात्रं वा तड़ागाद्यः समाहरेत्‡ ।
वसेत्स दिवि पञ्चाशद्दिमुक्तः पापकोटिभिः ॥ ३९ ।
देवतायतनं यस्तु कुरुते कारयत्यपि ।

---

* यो ददाति स विप्राणां जीवनं प्रोच्यते इति (घ)। प्रोच्यते इति आर्षं, प्रवक्ति इति साधु।

† करोति वा इति (ख)।

‡ तड़ागान्त. समाहरेदिति (ग)।

शिवस्य वा हरेर्व्वापि तस्य पुण्यफलं शृणु ॥ ४० ।
मातृतः पितृतश्चैव लक्षकोटिकुलाऽन्वितः* ।
कल्पत्रयं विष्णुपदे स्थित्वा तत्रैव मुच्यते ॥ ४१ ।
दारुभिः कारयेद्यस्तु तस्यैव द्विगुणं फलम् ।
इष्टकाभिश्च त्रिगुणं शिलाभिश्च चतुर्गुणम् ॥ ४२ ।
स्फटिकादिशिलाभेदैर्ज्ञेयं दशगुणोत्तरम् ।
ताम्रैः शतगुणं ज्ञेयं† हेम्ना कोटिगुणं भवेत् ॥ ४३ ।
देवालयं तड़ागं वा ग्रामं वा पालयेत्तु यः ।
तेषां शतगुणं ज्ञेयं कर्त्तृभ्योऽपि महीपते ॥ ४४ ।
ये च शुश्रूषवो राजन्धर्म्मेष्वेतेषु जन्तवः ।
ते सर्व्वेऽश्नुवते नित्यं तद्विष्णोः परमं पदम् ॥ ४५ ।
उपाधिरहिता ये तु‡ बलाद्वा कारिताश्च ये ।
शतकोटिकुलैर्युक्ता§ मोदन्ते विष्णुना सह ॥ ४६ ।
तड़ागार्द्धं फलं राजन् कासारे परिकीर्त्तितम् ।
कूपे पादफलं ज्ञेयं कुल्यायां तच्छतोत्तरम्¶ ॥ ४७ ।
धनाढ्यः कुरुते ग्रामं ददाति गामकिञ्चनः ।
अपि हस्तप्रमाणं वा समं पुण्यं प्रकीर्त्तितम् ॥ ४८ ।

---

* नवकोटिगुणान्वितः इति (क)।

† प्रीतमिति (घ), (ङ)।।

‡ ये च इति (क)।

§ गुणैर्युक्ता इति (ख)।

¶ (ख) पुस्तके एतदर्द्धं स्थानान्तरे दृश्यते।

इष्टकाभिः कारयेद्यस्तु धनाढ्यो देवतागृहम् ।
मृदा दरिद्रः कुरुते समं पुण्यं प्रकीर्त्तितम् ॥ ४९ ।
धनाढ्यः कुरुते यस्तु तड़ागं फलसाधनम् ।
दरिद्रः कुरुते कूपं समं पुण्यं प्रकीर्त्तितम् ॥ ५० ।
आरामं कारयेद्यस्तु बहुजन्तूपकारकम्* ।
स याति ब्रह्मसदनं पुनरावृत्तिदुर्लभम्† ॥ ५१ ।
स्थापयेद्वृक्षमेकं वा दरिद्रो लोकसाधकम् ।
स याति ब्रह्मसदनं कुलत्रितयसंयुतः‡ ॥ ५२ ।
गावो वा ब्राह्मणो वाऽपि यो वा कोवाऽपि भूतले§ ।
क्षणार्द्धमपि तच्छायां तिष्ठन्नाकं नयत्यमुम् ॥ ५३ ।
आरामदा महाभागा देवतागृहकारिणः ।
तड़ागग्रामकर्त्तारः पूज्यन्ते हरिणा सदा ॥ ५४ ।
सर्व्वलोकोपभोगार्थं¶ पुष्पारामं जनेश्वर ।
कुर्व्वते देवतार्थं वा तेषां पुण्यफलं शृणु ॥ ५५ ।
तत्र यावन्ति पत्राणि‖ कुसुमानि भवन्ति च ।
तावत्कालं वसेत्स्वर्गे शतकोटिकुलान्वितः ॥ ५६ ।

---

* तडागफलसाधनमिति (क) । बहुवृक्षोपशोभकमिति (ग) ।

† स याति विष्णुसदनं कुलत्रितयसंयुतः इति (क), (ग), कुलत्रयसमन्वित इति (ख) ।

‡ एष श्लोक (क) (ग) पुस्तकयोर्न स्तः, (ङ) पुस्तके कुलद्वितीयसंयुत इति पाठः ।

§ भूपते इति (क), (ख), (ङ) ।

¶ सर्व्वलोकोपकारार्थमिति (क), (घ) ।

‖ पर्णानि इति (क), (ख), (ग), (ङ) ।

प्राकारकारिणस्तस्य कण्टकावरणप्रदाः।
ते युगत्रितयं राजन्* वसन्ति ब्रह्मणः पदे ॥ ५७ ।
आरामाणाञ्च प्राकारं कण्टकावरणन्तथा।
वसन्ति ते युगशतं यथायोग्यं दिवि प्रभो† ॥ ५८ ।
तुलसीरोपणं ये तु कुर्व्वते मनुजेश्वर।
तेषां पुण्यफलं वक्ष्ये गदतः‡स्तन्निशामय ॥ ५९ ।
सप्तकोटिकुलैर्युक्तो मातृतः पितृतस्तथा।
वसेत्कल्पशतं सार्द्धं नारायणसमीपतः§ ॥ ६० ।
ऊर्द्ध्वपुण्ड्रकरो यस्तु तुलसीमूलमृत्तिकाम्।
तत्रैव नेत्रं तस्यासीन्मूर्ध्नीन्दोर्बिभ्रयात्कलाम् ॥ ६१ ।
तृणानि तुलसीमूलाद्यावन्त्यपहृतानि वै।
तावन्ति ब्रह्महत्यानि छिनत्त्येव न संशयः¶ ॥ ६२ ।
तुलसीं सिञ्चयेद्यस्तु चुलुकोदकमात्रकम्।
क्षीरोदशायिना सार्द्धं वसत्याचन्द्रतारकम् ॥ ६३ ।
ददाति ब्राह्मणानान्तु तुलसीकोमलं दलम्।

---

* ते युगद्वितयं यावदिति (ख)।

† दिव प्रभो इति (ख)।

‡ (ख) पुस्तके ५८—६३ श्लोकाः, ६४ श्लोकस्य पूर्व्वार्द्धञ्च न सन्ति। वदतः इति (क), (घ)।

§ वसेद्दिवि कल्पशतं नारायणसमीपतः इति (ग)। नारायणसमीपगः इति (क), (ङ)।

¶ छिन्दन्त्येव न संशय, इति (ग)।

स याति विष्णुभवनं* कुलत्रितयसंयुतः ॥ ६४ ।
कर्णेन धारयेद्यस्तु तुलसीं सततं नरः ।
तत्काष्ठं धारयेद्यस्तु तस्य नास्त्यपपातकम् ॥ ६५ ।
कण्टकावरणं वाऽपि प्राकारं वाऽपि कारयेत् ।
तुलस्याः शृणु राजेन्द्र† तस्य पुण्यफलं महत् ॥ ६६ ।
यावद्दिनानि संतिष्ठेत्कण्टकावरणं प्रभो ।
कुलत्रययुतः सोऽपि तिष्ठेद्ब्रह्मपदे स्वयम्‡ ॥ ६७ ।
प्राकारकल्पको यः स्यात्तुलस्या मनुजेश्वर ।
कुलत्रयेण सहितो विष्णोः सारूप्यतां व्रजेत्§ ॥ ६८ ।
योऽर्च्चयेद्धरिपादाब्जं तुलस्याः कोमलैर्दलैः ।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कदाचन ॥ ६९ ।
द्वादश्यां पौर्णमास्याञ्च क्षीरस्नपनतो हरेः¶ ।
कुलायुतयुतः सोऽपि विष्णोः सायुज्य||माप्नुयात् ॥ ७० ।
प्रस्थप्रमाणपयसा यः स्नापयति केशवम् ।
कुलायुतयुतः सोऽपि विष्णोः सारूप्यमाप्नुयात्** ॥ ७१ ॥
घृतप्रस्थेन यो विष्णु द्वादश्यां स्नापयेन्नरः ।

---

* ब्रह्मसदनमिति (क) ।

† शृणु तुलस्या राजेन्द्र इति (ग) ।

‡ ब्रह्मपदे युगमिति (घ), (ङ) ।

§ (क) पुस्तके ६४—६७ श्लोका न सन्ति । सारूप्यमाव्रजेदिति तु सुष्ठु संस्कृतम् ।

¶ क्षीरस्नानरतोहरेः इति (क) । पौर्णमास्यां वा क्षीरैः इति (ग) ।

|| कुलायुतयुतोवीर इति (ख) । सारूप्यमिति (ग) ।

** सायुज्यमाप्नुयादिति (घ), (ङ) । ७१—७४ श्लोकाः (ग) पुस्तके न सन्ति ।

कुलकोटियुतो राजन् सायुज्यं लभते हरेः ॥ ७२ ।
पञ्चामृतेन स्नापयेदेकादश्यां जनार्द्दनम् ।
कुलकोटिसमायुक्तो विष्णोः सायुज्यमाप्नुयात् ॥ ७३ ।
एकादश्यां पौर्णमास्यां द्वादश्यां वा नृपोत्तम ।
नारिकेलोदकैर्विष्णुं स्नापयेत्तत्फलं शृणु ॥ ७४ ।
शतजन्मार्ज्जितैः पापैर्विमुक्तो मनुजो नृप ।
शतद्वयकुलैर्युक्तो विष्णुना सह मोदते ॥ ७५ ।
इक्षुक्षीरेण देवेशं यः स्नापयति केशवम् ।
कुलायुतयुतो भूत्वा* विष्णुना सह मोदते ॥ ७६ ।
पुष्पोदकेन देवेशं† तथा गन्धोदकेन च ।
स्नापयित्वा नरो भक्त्या युगं स्वर्गाधिपो भवेत् ॥ ७७ ।
जलेन वस्त्रपूतेन यः स्नापयति केशवम् ।
सर्व्वपापविनिर्मुक्तः शताब्दं दिवि मोदते‡ ॥ ७८ ।
क्षीरेण स्नापयेद्विष्णुं रविसंक्रमणेषु च ।
स वसेद्विष्णुभवने त्रिसप्तपुरुषान्वितः§ ॥ ७९ ।
शुक्लपक्षे चतुर्द्दश्यामष्टम्यां पूर्णिमादिने ।
एकादश्यां भानुवारे द्वादश्यां पञ्चमीदिने ।
सोमसूर्य्योपरागे च मन्वादिषु युगादिषु ।

---

* मर्त्य इति (घ), (ङ) ।

† गोविन्दमिति (क), (ङ) ।

‡ मोदते दिवि इति (क)। अत्र श्लोकादस्यादनन्तरं (७१) श्लोको वर्त्तते ।

§ त्रिसप्तपुरुषान्वित इति (ख) ।

व्यतीपाते वैधृतौ च गजच्छायाह्वये तथा ।
अर्द्धोदये च पुष्यार्के हस्तार्के रोहिणीबुधे ।
तथैव शनिरोहिण्यां भौमाश्विन्यान्तथैव च ।
शन्याश्विन्यां* बुधाश्विन्यां† भृगुपातेऽर्कवैधृतौ ।
तथा बुधानुराधायां श्रवणार्के तथैव च ।
तथापि सोमश्रवणे हस्तस्थे च बृहस्पतौ ।
बुधाष्टम्यां बुधाषाढ़े भृगुरेवतिसंयुते ।
स्नापयन् पयसा विष्णुं शिवं वा वाग्यतः शुचिः ।
घृतेन मधुना वाऽपि देवानान्तत्फलं‡ शृणु ॥ ८०।८१।
सर्व्वयज्ञफलं प्राप्य सर्व्वपापविमोचितः ।
वसेद्विष्णुपदे कल्पं त्रिसप्तपुरुषान्वितः ॥ ८२ ।
तत्र वै ज्ञानमासाद्य योगिनामपि दुर्लभम् ।
तत्रैव मोक्षमाप्नोति पुनरावृत्तिदुर्लभम् ॥ ८३ ।
कृष्णपक्षे चतुर्द्दश्यां सोमवारे च भूपते ।
शिवं संस्नाप्य दुग्धेन शिवसायुज्यमाप्नुयात् ॥ ८४ ।
नारिकेलोदकेनाऽपि शिवं संस्नाप्य भक्तितः ।
अष्टम्यामिन्दुवारे च शिवसायुज्यमाप्नुयात्§ ॥ ८५ ।
कृष्णपक्षे चतुर्द्दश्यान्तथाष्टम्याञ्च भूपते ।

---

* शुक्राश्विन्यामिति (ख) ।

† बुधादित्यामिति (ग) ।

‡ दध्ना वा तत्फलमिति (ख), (घ) ।

§ एतौ श्लोकौ (ख) (ग) पुस्तकयोर्न स्तः ।

घृतेन मधुना स्नाप्य शिवसायुज्यमाप्नुयात्* ॥ ८६ ।
शिवं संस्नाप्य† यत्नेन पुष्पोदकफलोदकैः ।
सोमवारे महाभाग वसेत्कल्पशतं दिवि‡ ॥ ८७ ।
तिलतैलेन संस्नाप्य विष्णुं वा शिवमेव वा ।
स याति तत्तत्सारूप्यं§ कुलत्रितयसंयुतः ॥ ८८ ।
शिवमिक्षुरसेनाऽपि यः स्नापयति भक्तितः¶ ।
शिवलोके‖ वसेत्कल्पं शतकोटिकुलान्वितः ॥ ८९ ।
घृतेन स्नापयेल्लिङ्गं पुण्यवान्** द्वादशीदिने ।
क्षीरेण वा महाभाग तत्फलं वदतः शृणु ॥ ९० ।
जन्मायुतार्ज्जितैः पापैर्विमुक्तो मनुजोत्तमः†† ।
कुलकोटिसमायुक्तः शिवसायुज्यमाप्नुयात् ॥ ९१ ।
यः स्नापयति पयसा उत्थानद्वादशीदिने ।
केशवं परया भक्त्या तत्फलं गदतः‡‡ शृणु ॥ ९२ ।

---

* मश्नुते इति (ख) ।

† सपूज्य इति (ग) ।

‡ स वसेदयुत दिवि इति (क) ।

§ तस्य सारूप्यमिति (ख) ।

¶ शक्तित इति (ग), (ङ) ।

‖ देवलोकमिति (क) ।

** उत्थाने द्वादशीदिने इति (ख) ।

†† मनुजेश्वर इति (ख) ।

‡‡ वदतः इति (क), (ख) ।

जन्मायुतार्ज्जितैः पापैर्विमुक्तः परमं पदम् ।
कुलकोटिसमायुक्तः स प्राप्नोति न संशयः* ॥ ९३ ।
मधुप्रस्थेन गोविन्दं कार्त्तिक्यां पूर्णिमादिने ।
संस्नाप्य† हरिमायाति शतकोटिकुलान्वितः ॥ ९४ ।
मनोहरैश्च गन्धैश्च पुष्पैश्चापि मनोहरैः ।
अभ्यर्च्च्य विष्णुमीशं वा तत्तत्सारूप्यमाप्नुयात्‡ ॥ ९५ ।
पद्मपुष्पेण यो विष्णुं§ शिवं वार्च्चति मानवः ।
स याति विष्णुभवनं¶ कुलत्रितयसंयुतः ॥ ९६ ।
हरिञ्च केतकीपुष्पैः शिवं धूस्तूरजैर्न्निशि‖ ।
सर्व्वपापविनिर्म्मुक्तो वसेद्विष्णुपदे युगम् ॥ ९७ ।
हरिञ्चम्पकपुष्पैश्च अर्कपुष्पैश्च शङ्करम् ।
समभ्यर्च्च्य महाभाग तत्तत्सारूप्यमाप्नुयात्** ॥ ९८ ।

---

* (घ) पुस्तके एष श्लोको नास्ति, (ङ) पुस्तके तु भिन्नरूपोऽस्ति, यथा—
जन्मायुतयुतैः पापैर्विमुक्तो मनुजोत्तमः ।
कुलकोटिसमायुक्त प्राप्नोति परम पदम् ॥

† सम्पूज्य इति (ग) ।

‡ तत्सारूप्यं ततोव्रजेदिति (ख), तत्तत्सारूप्यमाव्रजेदिति (घ), (ङ) ।

§ पद्मपुष्पेण विष्णुं वा इति (क) ।

¶ भवने इति (ग) ।

‖ धुस्तूरकैः इति (ग) । (ख) पुस्तके एतदारभ्य श्लोकस्यैतस्य पादत्रयं परश्लोकस्य चरणमेकञ्च न स्त ।

** तत्तत्सालोक्यमाप्नुयादिति (क), (ख) ।

जातिपुष्पैः* शिवं पूज्य† बन्धूककुसुमैर्हरिम्।
सर्व्वपापविनिर्मुक्तो मेरुमूर्ध्नि युगं वसेत्॥ ९९।
काकोलकुसुमैर्विष्णुं‡ रुद्रपुष्पैर्महेश्वरम्।
अभ्यर्च्य देवदेवेशं सारूप्यं यान्ति मानवाः॥ १००।
शिवं विष्णुञ्च§ संपूज्य प्रस्थपुष्पैर्मनोहरैः।
शमीपुष्पैश्च राजेन्द्र सर्व्वान् कामानवाप्नुयात्॥ १०१।
अपामार्गदलैर्यस्तु पूजयेद्गिरिजापतिम्।
स याति शिवसायुज्यं चतुर्द्दश्यां विशेषतः॥ १०२।
शङ्करस्याथवा¶ विष्णोर्घृतयुक्तञ्च गुग्गुलुम्।
दत्त्वा धूपं नरो भक्त्या सर्व्वपापैः प्रमुच्यते॥ १०३।
तिलतैलान्वितं दीपं विष्णोर्व्वा शङ्करस्य वा।
दत्त्वा नरः सर्व्वकामान् संप्राप्नोति नृपोत्तमः‖॥ १०४।
घृतेन दीपं यो दद्याच्छङ्करायाऽथ विष्णवे।
स मुक्तः सर्व्वपापेभ्यो गङ्गास्नानफलं लभेत्**॥ १०५।

---

* अर्चीपुष्पैः इति (ख)।

† पूज्य इति आर्षं, पूजयित्वा इति साधु।

‡ सत्फलाकुसुमैरिति (ख), (ग)।

§ शिवञ्च विष्णुमिति (क), (ख), (घ), (ङ)।

¶ शङ्करस्याऽथ विष्णोर्वा इति (क), (घ), (ङ)।

‖ वाप्नोति मनुजोत्तमः इति (क), संप्राप्नोति नरोत्तम इति (ख)।

** (क) (ङ) पुस्तकयोः एतदर्द्धं, १०७ श्लोकः, १०८ श्लोकः (१०९) श्लोकस्य पूर्व्वार्द्धञ्च न सन्ति।

शाम्येन वाऽपि तैलेन राजहव्येन वा पुनः ।
दीपं दत्त्वा महाविष्णोः शिवस्यापि फलं शृणु ॥ १०६ ।
सर्व्वपापविनिर्म्मुक्तः सर्व्वैश्वर्य्यसमन्वितः ।
तत्तत्सालोक्यमाप्नोति त्रिःसप्तपुरुषान्वितः ॥ १०७ ।
यद्यदिष्टतमं लोके तत्तदीशाय विष्णवे ।
दत्त्वा तु तत्पदं याति चत्वारिंशत्कुलान्वितः ॥ १०८ ।
यद्यदिष्टतमं वस्तु तत्तद्विप्राय दापयेत् ।
स याति ब्रह्मभवनं* पुनरावृत्तिदुर्ल्लभम् ॥ १०९ ।
भ्रूणहाऽप्यन्नदानेन शुद्धो भवति भूपते† ।
अन्नतोयसमं दानं न भूतं न भविष्यति ॥ ११० ।
अन्नदः प्राणदः प्रोक्तः प्राणदश्चापि सर्व्वदः ।
सर्व्वदानफलं तस्मादन्नदस्य नृपोत्तम ॥ १११ ।
अन्नदो ब्रह्मसदनं याति वंशायुतान्वितः ।
न तस्य पुनरावृत्तिरिति शास्त्रेषु निश्चितम्‡ ॥ ११२ ।
अन्नदानसमं दानं न भूतं न भविष्यति ।
सद्यस्तुष्टिकरं§ ज्ञेयं जलदानन्ततोऽधिकम् ॥ ११३ ।
महापातकयुक्तो वा युक्तो वा सर्व्वपातकैः ।
शृणुष्व चित्रं भूपाल शुध्यन्त्यन्नजलप्रदाः ॥ ११४ ।

---

* स याति विष्णुभवनमिति (ख), (घ), (ङ) ।

† भूतले इति (क), (घ), (ङ) ।

‡ इति वेदेषु निश्चितमिति (क), शास्त्रे विनिश्चितमिति (ग) ।

§ सर्व्वतुष्टिकरं ज्ञेयमिति (ख) ।

शरीरमन्नजं प्राहुः प्राणमन्नं प्रचक्षते।
तस्मादन्नप्रदो ज्ञेयः प्राणदः पृथिवीपते ॥ ११५ ।
सद्यस्तुष्टिकरं दानं सर्व्वकामफलप्रदम्।
तस्मादन्नसमं दानं न भूतं न भविष्यति ॥ ११६ ।
अन्नदस्य कुले जाता आसहस्रकुलान्नृप* ।
नरकांस्ते न पश्यन्ति तस्मादन्नप्रदो वरः ॥ ११७ ।
योऽतिथिं भक्तितो राजन् समभ्यर्च्य यथाविधि ।†
अन्नदो मोक्षमाप्नोति तस्मादन्नप्रदो भव ॥ ११८ ।
पादाभ्यङ्गं भक्तितो वा योऽतिथेः कुरुते नरः।
स स्नातः सर्व्वतीर्थेषु गङ्गास्नानपुरःसरम् ॥ ११९ ।
तैलाभ्यङ्गं महाराज‡ ब्राह्मणानां करोति यः।
स स्नातोऽब्दशतं साग्रं गङ्गायां नात्र संशयः ॥ १२० ।
रोगितान्§ ब्राह्मणान् यस्तु रक्षति क्षितिरक्षक ।
स कोटिकुलसंयुक्तो वसेद्ब्रह्मपुरे युगम् ॥ १२१ ।
यो रक्षेत् पृथिवीपाल एकं वा रोगिणं नरम्।
तस्य विष्णुः प्रसन्नात्मा सर्व्वान् कामान् प्रयच्छति ॥१२२।

---

* आसप्ततिकुलानि वै इति (ख)।

† योऽतिथि भक्तितोरक्षेत् समुत्पन्नं यथाविधि इति (ख), समुद्यम्य यथाविधि इति (घ), (ङ)।

‡ महाभाग इति (ख)।

§ रोगिण इति (क), (ख)।

कर्म्मणा मनसा वाचा यो रक्षत्यातुरं जनम्* ।
सर्व्वान् कामानवाप्नोति सर्व्वपापविवर्ज्जितः ॥ १२३ ।
यो ददाति महीपाल निवासं ब्राह्मणाय तु ।
तस्य प्रसन्नोदेवेशः प्रसन्नाः सर्व्वदेवताः ॥ १२४ ।
ब्राह्मणाय वेदविदे योदद्याद्गां पयस्विनीम् ।
स याति विष्णुभवनं पुनरावृत्तिवर्ज्जितः ॥ १२५ ।
अन्येभ्यः प्रतिगृह्यापि योदद्याद्गां महीपते ।
तस्य पुण्यफलं वक्तुं नहि शक्तोऽस्मि पण्डितः† ॥ १२६ ।
कपिलां वेदविदुषे यो ददाति पयस्विनीम् ।
स एव रुद्रो भूयाच्च सर्व्वपापविवर्ज्जितः‡ ॥ १२७ ।
विप्रायाध्यात्मविदुषे दद्यादुभयतो मुखीम्§ ।
तस्य पुण्यञ्च संख्यातुं न क्षमोऽव्दशतैरपि ॥ १२८ ।
यो दद्याच्चाभयं नृणां भूप विह्वलचेतसाम् ।
तस्य पुण्यफलं वक्तुं कः समर्थोऽस्ति पण्डितः ॥ १२९ ।
एकतः क्रतवः सर्व्वे समग्रवरदक्षिणाः ।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥ १३० ।

---

* योरक्षत्यामयाऽन्वितमिति (ख) ।

† (१२५) श्लोकस्य परार्द्धादारभ्य श्लोकद्वयं (ग) पुस्तके नास्ति ।

‡ (क) पुस्तके एष श्लोको नास्ति । (घ) पुस्तके एतत्परार्द्धं नास्ति ।

§ विप्राय वेदविदुषे दद्यादुभयतो मुखीमिति (ख) । (क) पुस्तके तु विप्राया-ध्यात्मविदुषे इत्येतदंशमात्रं वर्त्तते ।

संरक्षति महीपाल यो विप्रं भयविह्वलम्* ।
स स्नातोऽब्दशतं साग्रं गङ्गायां नाऽत्र संशयः ॥ १३१ ।
यो दद्यादभयं राजन् स विष्णुर्नाऽत्र संशयः ।
सर्व्वेषामेव धर्म्माणामुत्तमं तत्प्रचक्षते† ॥ १३२ ।
वस्त्रदो रुद्रभवनं कन्यादो ब्रह्मणः पदम् ।
हेमदो विष्णुभवनं प्रयाति कुलसंयुतः‡ ॥ १३३ ।
यस्तु कन्यामलङ्कृत्य दद्यादध्यात्मवेदिने§ ।
शतवंशसमायुक्तो ब्रह्मणः पदमश्नुते ॥ १३४ ।
कार्त्तिक्यां पौर्णमास्यां वा आषाढ्यां वाऽपि भूपते ।
वृषभं शिवतुष्ट्यर्थमुत्सृजेत्तत्फलं शृणु¶ ॥ १३५ ।
सप्तजन्मार्ज्जितैः पापैर्विमुक्तो रुद्ररूपधृक्|| ।
कुलसप्ततिसंयुक्तो रुद्रेण सह मोदते ॥ १३६ ।
शिवलिङ्गाङ्कितं** कृत्वा महिषं यः समुत्सृजेत् ।
न तस्य यातनालोकदर्शनं भवति प्रभो ॥ १३७ ।

---

* (क) पुस्तके एतदर्द्धं नास्ति।

† सर्व्वेषामेव धर्म्माणामुत्तमं धर्म्ममुच्यते इति (क) ; (ख) पुस्तके एतदर्द्धं नास्ति ।

‡ एष श्लोक (ख) पुस्तके नास्ति।

§ दद्यादध्यात्मवादिने इति (क), ददाति ब्रह्मवादिने इति (ख) ।

¶ उत्सृष्टानां (उत्सृष्टॄणां ?) फल शृणु इति (क), (घ), (ङ) ; उत्सृष्टं तत्फलं शृणु इति (ख) ।

|| रुद्ररूपभाक् इति (क), (ख), (घ), (ङ) ।

** शिवलिङ्गाकृतिमिति (क), (ग), (घ) ।

ताम्बूलदानं यः कुर्य्याद्भक्तितो नृपसत्तम ।
तस्य विष्णुः प्रसन्नात्मा ददाति श्रीयुतं पदम् ॥ १३८ ।
क्षीरदो घृतदश्चैव* मधुदो दधिदस्तथा ।
दिव्याब्दयुगपर्य्यन्तं स्वर्गलोके वसेत्सुखी ॥ १३९ ।
प्रयाति चन्द्रभवनमिक्षुदानान्नृपोत्तम ।
गन्धदः पुष्पफलदः प्रयाति ब्रह्मणः पदम् ॥ १४० ।
गुड़ेक्षुरसदश्चैव प्रयाति क्षीरसागरम् ।
मठदो† जलदो याति सूर्य्यलोकमनुत्तमम् ॥ १४१ ।
विद्यादानेन सायुज्यमतिदानं यतः स्मृतम् ।
विद्यादानं महादानं गोदानमुत्तमोत्तमम्‡ ॥ १४२ ।
त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ।
नरकादुद्धरन्त्येते विद्यादानन्ततोऽधिकम् ॥ १४३ ।
ज्ञानदानेन सायुज्यं सत्यदानं§ परन्तप ।
अक्रोधश्चार्ज्जवं चैव मोक्षदं परिकीर्त्तितम् ॥ १४४ ।
धान्यदः श्रियमाप्नोति ब्रह्मलोके परन्तप ।
तरन्ति धान्यदानेन मुच्यन्ते ह्युपपातकैः¶ ॥ १४५ ।

---

* मधुदश्चाऽपीति (ग) ।

† मिष्टान्नजलदो यातीति (क), सततं जलदो यातीति (ख), मठानां जलदो यातीति (घ) ।

‡ अस्य श्लोकस्य पूर्व्वार्द्धं (क) पुस्तके नास्ति । विद्यादानं महीदानमिति (ग) ।

§ सत्यं वापि परन्तपेति (ख) ।

¶ एष श्लोकः (ख) पुस्तके नास्ति । (क) पुस्तके "तरन्ति धान्यदानेन" इत्यत्र नरम्लिस्नदानेनेति पाठो वर्त्तते ।

ब्रह्माण्डकोटिदानेन यत् फलं लभते नरः।
तत् फलं समवाप्नोति शिवलिङ्गप्रदानतः* ॥ १४६ ।
शालग्रामशिलादानन्ततोऽपि द्विगुणं फलम्।
शालग्रामशिलारूपी विष्णुरेव न संशयः† ॥ १४७ ।
यो ददाति नरो दीपं घृतयुक्तं परं प्रभोः।
गङ्गास्नानफलन्तस्य सम्पूर्णं भवति प्रभो ॥ १४८ ।
रत्नान्वितसुवर्णस्य प्रदानेन नृपोत्तम।
परमं मोक्षमाप्नोति महादानं यतः स्मृतम्‡ ॥ १४९ ।
ततो माणिक्यदानेन परं मोक्षमवाप्नुयात्।
भुवर्लोकमवाप्नोति वज्रदानेन भूपते§ ॥ १५० ।
स्वर्गं विद्रुमदानेन मौक्तिकैः सोमसन्निधिम्।
वैदूर्य्यदो रुद्रलोकं पद्मरागप्रदस्तथा¶ ॥ १५१ ।
माणिक्यस्य प्रदानेन ब्रह्मलोकमवाप्स्यति‖ ।

---

* एष श्लोकः (क), (घ), (ङ) पुस्तकेषु नास्ति।

† विष्णुरेव इति श्रुतमिति (क), विष्णुरेवेति वै श्रुतिरिति (ख), विष्णुरेवेति विश्रुत इति (घ), (ङ)।

‡ परं मोक्षमवाप्नोति महादानं यतः स्मृतमिति (क), महद्दानमिति (ग), परं क्षेत्रमवाप्नोति महादानं यतः स्मृतमिति (घ)।

§ द्रुमदानेनेति (क), रवदानेनेति (ङ)।

¶ (क), (घ) पुस्तकयो श्लोकस्यास्य द्वितीयपादादारभ्य १५३ श्लोकस्य प्रथमचरणान्तं यावत् सन्दर्भो नास्ति। पद्मरागेत्यत्र पाषाणाद्रिप्रदस्तथा इति (ग)।

‖ मवाप्नुयादिति (ख)।

अलङ्कारप्रदानेन सर्व्वत्र सुखमश्नुते* ॥ १५२ ।
प्रयाति यानदानेन विमानारोहतां नरः ।
गवां तृणप्रदानेन रुद्रलोकमनुत्तमम् ।
वारुणं लोकमाप्नोति महीश लवणप्रदः ॥ १५३ ।
आश्रमाचारनिरताः स्वकर्म्मसु† सदोद्यताः ।
अदाम्भिका गतासूयाः प्रयान्ति ब्रह्मणः पदम् ॥ १५४ ।
परोपदेशनिरता वीतरागा विमत्सराः ।
हरिपादार्च्चनरताः प्रयान्ति ब्रह्मणः पदम्‡ ॥ १५५ ।
सत्सङ्गाह्लादनिरताः सर्व्वभूतहिते रताः ।
पराऽपवादविमुखा न पश्यन्ति यमालयम्§ ॥ १५६ ।
नित्यं हितरता ये च¶ ब्राह्मणेषु च गोषु च ।
परस्त्रीसङ्गविमुखा|| न पश्यन्ति यमालयम् ॥ १५७ ।

---

* (ख) पुस्तकेऽतः परं कश्चिदधिकः श्लोको वर्त्तते, यथा—
"आश्विनं लोकमाप्नोति अश्वदानेन पण्डित ।
गजदानेन महतः सर्व्वान् कामान् समश्नुते ॥"

† सत्कर्म्मसु इति (क), (ख), (घ) ।

‡ एष श्लोक (ख) पुस्तके नास्ति ।

§ (ख) पुस्तके श्लोकोऽयमेवं पठितः—
"सत्सङ्गमेषु निरताः सर्व्वभूतहिते रताः ।
पराऽपवादनिरता. सर्व्वभूतहितैषिणः ।
परोपदेशनिरताः पश्यन्ति न यमालयम् ॥"

¶ नित्यं भक्तिपरा ये तु इति (ख) ।

|| परस्त्रीसङ्गहीनाश्चेति (ख) ।

जितेन्द्रिया जिताहारा* गोषु क्षान्ताः सुशीलिनः† ।
ब्राह्मणानां हितकराः प्रयान्ति परमं पदम्‡ ॥ १५८ ।
अग्निशुश्रूषवश्चैव गुरुशुश्रूषवस्तथा ।
यतिशुश्रूषवश्चैव न याति यमयातनाम् ॥ १५९ ।
सदा देवार्च्चनरताः सदा नामपरायणाः§ ।
प्रतिग्रहनिवृत्ता ये प्रयान्ति परमं पदम् ॥ १६० ।
अनाथं विप्रकुणपं ये दहेयुर्नरोत्तमाः¶ ।
अश्वमेधसहस्राणां फलं प्राप्नुवन्त्यनुत्तमम्‖ ॥ १६१ ।
पत्रैः पुष्पैः फलैर्वाऽपि जलैर्वा मनुजेश्वर ।
पूजया रहितं लिङ्गमर्च्चयेत्तत्फलं शृणु ॥ १६२ ।
चुलुकोदकमात्रेण शून्यलिङ्गं जनाधिप ।
स्नाप्याऽश्वमेधलक्षाणां** फलं प्राप्नोत्यनुत्तमम् ॥ १६३ ।
यः पत्रैः कुसुमैर्वाऽपि शून्यलिङ्गप्रपूजकः ।

---

* जितक्रोधा इति (क) ।

† गुरुज्ञानाऽसि शालिन इति (ख), गोषु दान्ता इति (घ) ।

‡ परमा गतिमिति (ख) ।

§ सदा स्नानपरायणा इति (ख) ।

¶ यो दहेत्तु नरोत्तम इति (क), (घ), ये दहेयुर्द्विजोत्तमा इति (ख), यो दहेत् स नरोत्तम इति (ङ) ।

‖ अत्र छन्दोभङ्ग आर्षः । अश्वमेधसहस्राणां सहस्रफलमश्नुते इति (ख), फलं प्राप्नोत्यनुत्तममिति (क), (घ), (ङ)—इत्युभयत्र पाठे छन्दःस्थितावपि पूर्व्वार्द्धस्थितेन बहुवचनान्तकर्त्तृपदेन परार्द्धस्थितैकवचनान्तक्रियाया अन्वयायोगाच्छन्दोदोषः स्वीकृत एव ।

** स्नाप्येति आर्षं, स्नापयित्वेति साधु ।

हयमेधायुतफलं सहस्रगुणितं लभेत्* ॥ १६४ ।
भक्ष्यैर्भोज्यैः फलैर्वाऽपि शून्यलिङ्गप्रपूजकः† ।
शिवसायुज्यमाप्नोति पुनरावृत्तिदुर्लभम् ॥ १६५ ।
पूजया रहितं विष्णुं योऽर्च्चयेदर्कवंशज‡ ।
तस्य पुण्यफलं वक्ष्ये वदतस्तन्निशामय ॥ १६६ ।
जलेन स्नापयेद्यस्तु पूजारहितमच्युतम् ।
स याति विष्णुसालोक्यं§ कुलसप्ततिसंयुतः ॥ १६७ ।
पत्रैः पुष्पैः फलैर्वाऽपि पूजारहितमच्युतम्¶ ।
प्रयाति हरिसारूप्यं शतद्वयकुलाऽन्वितः ॥ १६८ ।
भक्ष्यभोज्यादिभिर्भूप पूजया शून्यमच्युतम् ।
समभ्यर्च्च्य लभेन्मोक्षं कुलायुतसमन्वितः‖ ॥ १६९ ।
शीर्णस्फुटितसन्धानं यः करोति नरोत्तमः ।
शिवस्यायतने वाऽपि विष्णोर्वा शृणु तत्फलम् ॥ १७० ।
शतजन्मार्जितैः पापैर्मुक्तो वंशत्रयाऽन्वितः ।
स्थित्वा विष्णुपुरे** कल्पं तत्रैव परिमुच्यते ॥ १७१ ।

---

* भवेदिति (ग) ।

† भक्ष्यैर्भोज्यैः फलैर्व्वापि जलैर्व्वा मनुजेश्वर इति (क) । लिङ्गस्यैव प्रपूजक इति (घ), (ङ) ।

‡ योऽर्च्चयेत्परमेश्वरमिति (ख), योऽर्च्चयेत् सूर्य्यवंशज इति (घ), (ङ) ।

§ सायुज्यमिति (क) ।

¶ अर्च्चयेदच्युतं यदि इति (ख) ।

‖ (क) पुस्तके अतः परं श्लोकद्वयं नास्ति ।

** विष्णुपदे इति (घ) ।

देवतायतने राजन्दत्त्वा सम्मार्जनं नरः* ।
यत् फलं समवाप्नोति तन्मे निगदतः शृणु ॥ १७२ ।
यावत्यः पांशुकणिका यस्य सम्मार्जिता नृप† ।
तावत्कल्पसहस्राणि विष्णुलोके महीयते ॥ १७३ ।
वासुदेवालये वाऽपि राजन् गोचर्म्ममात्रकम् ।
जलेन सेचनं कुर्य्यात्तत्फलं वदतः शृणु ॥ १७४ ।
यावत्यः पांशुकणिका द्रवीभूता‡ जनेश्वर ।
तावज्जन्मार्जितैः पापैः सद्य एव प्रमुच्यते ॥ १७५ ।
गन्धोदकेन यो मर्त्त्यो देवतायतनेषु च ।
भक्तितः सेचनं कुर्य्यात्तस्य पुण्यफलं शृणु ॥ १७६ ।
द्रवीभूतानि§ यावन्ति रजांसि मनुजेश्वर ।
तावत्कल्पसहस्राणि हरिसारूप्यमश्नुते¶ ॥ १७७ ।
मृदा धातुविकारैर्वा देवतायतनं नरः ।
कुलद्वयसमेतस्तु विष्णुलोके महीयते‖ ॥ १७८ ।
शिलाचूर्णेन यो मर्त्त्यो देवतायतने नृप ।

---

* देवतायतने यस्तु कृत्वा सम्मार्ज्जनमिति (क) ।

† दूरीभूता इति (घ), (ङ) । (क), (ख) पुस्तकयोरतः परं अष्टौ श्लोकपादा न सन्ति ।

‡ दूरीभूता इति (घ) ।

§ दूरीभूतानीति (घ) ।

¶ (क) पुस्तकेऽतः परं एकः श्लोको नास्ति ।

‖ विष्णुलोके युगं वसेदिति (ख), (घ), (ङ) ।

करोति स्वस्तिकादीनि तेषां पुण्यं निशामय ॥ १७९ ।
यावन्त्यः कणिका भूमौ क्षिप्ता रविकुलोद्भव ।
तावद्युगसहस्राणि हरिसारूप्यमश्नुते ॥ १८० ।
यः कुर्य्याद्दीपरचनां शालिपिष्टादिभिर्नृप* ।
न तस्य पुण्यमाख्यातुमुत्सहेऽब्दशतैरपि† ॥ १८१ ।
अखण्डं दीपं यः कुरुते‡ विष्णोर्वा शङ्करस्य च ।
दिने दिनेऽश्वमेधस्य फलं प्राप्नोत्यनुत्तमम्§ ॥ १८२ ।
अर्च्चितं शङ्करं दृष्ट्वा विष्णुं वाऽपि नमेत्तु यः ।
स विष्णुभवनं प्राप्य वसेदब्दशतं नृप ॥ १८३ ।
प्रदक्षिणत्रयं¶ कुर्य्याद्यो विष्णोर्मनुजेश्वर ।
सर्व्वपापविनिर्मुक्तो देवेन्द्रत्वं समश्नुते ॥ १८४ ।
अग्रे‖ प्रदक्षिणं कुर्य्याद्यस्तु विष्णोः परात्मनः ।
एकेनैवाश्वमेधस्य सम्पूर्णं फलमश्नुते** ॥ १८५ ।
शिवं प्रदक्षिणं कृत्वा†† सव्यासव्यविधानतः ।

---

* शालिपिष्टादिभिर्नर इति (क) ।

† शक्तो वर्षशतैरपि इति (क) ।

‡ यः कुर्य्यादिति (ख) ।

§ फलमाप्नोत्यनुत्तममिति (क), (ख), (घ), (ङ) ।

¶ वेश्म प्रदक्षिणमिति (क) ।

‖ अङ्गमिति (क), (ङ) ।

** (क) पुस्तके अतः परं "द्वितीयेनाधिराजत्वं तृतीयेनेन्द्रसम्पद"मिति श्लोकार्द्धं वर्त्तते ।

†† शिवं प्रदक्षिणं कुर्य्यादिति (क), (घ), (ङ) ।

यत् फलं समवाप्नोति तन्मे निगदतः शृणु । १८६ ।
राजन् प्रदक्षिणैकेन मुच्यते ब्रह्महत्यया ।
द्वितीयेनाधिराजत्वं तृतीयेनेन्दुसम्पदम्* ॥ १८७ ।
शिवप्रदक्षिणे मर्त्यः सोमसूत्रं न लङ्घयेत् ।
लङ्घयित्वैकमेकं स्यादलङ्घ्याद्युतत्रयम्† ॥ १८८ ।
स्तुत्वा स्तोत्रैर्जगन्नाथं नारायणमनामयम् ।
सर्व्वान् कामानवाप्नोति मनसा यद्यदिच्छति ॥ १८९ ।
देवतायतने यस्तु भक्तियुक्तः प्रनृत्यति ।
गीतानि गायत्यथवा तत्फलं शृणु भूपते ॥ १९० ।
गन्धर्व्वराजतां गानैर्नृत्यैरिन्द्रगणेशताम्‡ ।
प्राप्नोत्यष्टकुलैर्युक्त आकल्पं मोक्षभाङ्नरः ॥ १९१ ।
मुखवाद्यकृतो ये तु देवतायतने नराः ।
विमानशतसंयुक्ताः कल्पं स्वर्गाधिवासिनः ॥ १९२ ।
करशब्दं प्रकुर्व्वन्ति देवतायतने तु ये ।
ते सर्व्वे पापनिर्मुक्ता विमानेशा युगद्वयम्§ ॥ १९३ ।
देवतायतने ये तु घण्टानादं प्रकुर्व्वते¶ ।

---

* तृतीयेनेन्दुसंयुत. इति (घ) ।

† अलङ्घ्याद्भुवनत्रयमिति (ख) ।

‡ नृत्यैरुद्रगणेशतामिति (ख) ।

§ युगत्रयमिति (क), कल्पं स्वर्गाधिवासिनः इति (ङ) ।

¶ सदानन्दं प्रकुर्व्वते इति (ख) ।

तेषां पुण्यं निगदितुं कः शक्तोऽस्तीह पण्डितः* ॥ १८४ ।
मृदा धातुविकारैर्वा वर्णकैर्गोमयेन वा ।
उपलेपनकृद्यस्तु नरो वैमानिको भवेत् ॥ १८५ ।
भेरीमृदङ्गपटहविषाणाद्यैश्च† डिण्डिमैः ।
सन्तर्प्य देवदेवेशं लभन्ते यत् फलं शृणु ॥ १८६ ।
देवस्त्रीशतसंयुक्ताः सर्व्वकर्म्मसमन्विताः ।
सर्व्वलोकमनुप्राप्य‡ मोदन्ते कल्पपञ्चकम् ॥ १८७ ।
देवतायतने राजन् कुर्व्वन् शङ्खरवं नरः ।
सर्व्वपापविनिर्मुक्तो ब्रह्मणा सह मोदते ॥ १८८ ।
काहलादिरवं कुर्व्वन् देवतायतने नरः ।
सर्व्वपापविनिर्म्मुक्तः स्वर्गलोकाधिपो भवेत् ॥ १८९ ।
तालादिकांस्यनिनदं कुर्व्वन् विष्णुगृहे नरः ।
यत् फलं लभते प्राज्ञः शृणुष्व§ गदतो मम ॥ २०० ।
सर्व्वपापविनिर्मुक्तो विमानशतसङ्कुलः ।
गीयमानश्च गन्धर्व्वैर्विष्णुना सह मोदते ॥ २०१ ।
एवमाद्या महाधर्म्माः शतशोऽथ सहस्रशः ।
उक्ताः कियन्तो राजेन्द्र कस्तान्वर्णयितुं क्षमः ॥ २०२ ।

---

* कः समर्थोऽस्ति पण्डित. इति (क), (ख), (घ) ; कः शक्तोऽस्ति च पण्डितः इति (ङ) ।

† निशावाद्यैश्चेति (ख), निषादाद्यैश्चेति (ग), निस्वनाद्यैश्चेति (ङ) ।

‡ स्वर्गलोकमनुप्राप्येति (ख) ।

§ शृणुध्वं गदत इति (क) ।

यो देवः सर्व्वभुग्विष्णुः कामरूपी* निरञ्जनः ।
सर्व्वधर्म्मफलं राजन् सम्पूर्णं प्रददाति च ॥ २०३ ।
यस्य स्मरणमात्रेण देवदेवस्य चक्रिणः ।
सफलानि भवन्त्येव सर्व्वकर्म्माणि भूपते ॥ २०४ ।
परमात्माक्षरोऽनन्तः† पुण्यकर्म्मफलप्रदः ।
सत्कर्म्मकर्त्तृभिर्नित्यं स्मृतः सर्व्वार्त्तिनाशनः ॥ २०५ ।

धर्म्माश्च विष्णुः सकलानि‡ विष्णुः
कर्म्माणि विष्णुश्च स एव भोक्ता ।
कार्य्यञ्च विष्णुः करणानि विष्णु-
स्तस्मान्न किञ्चिद्व्यतिरिक्तमस्ति ॥ २०६ ।

इति श्रीबृहन्नारदीये पुराणे त्रयोदशोऽध्यायः ।

---

* ज्ञानरूपीति (ख) ।

† परमात्मा जगन्नाथ इति (ख) ।

‡ सकलाश्च विष्णुरिति (घ) ।

# अथ चतुर्दशोऽध्यायः ।*

काल उवाच ।

पापभेदान् प्रवक्ष्यामि तथा† स्थूलाश्च यातनाः ।
शृणुष्व धैर्य्यमास्थाय रौद्रा हि नरका यतः ॥ १ ।
पापिनो ये दुरात्मानो नरकाग्निषु सन्ततम् ।
पच्यन्ते तेषु तान्वक्ष्ये भयङ्करफलप्रदान् ॥ २ ।
तपनो बालुकाकुम्भो महारौरव-रौरवौ ।
कुम्भीपाको निरुच्छ्वासः कालसूत्रः प्रमर्द्दनः‡ ॥ ३ ।
असिपत्रवनं घोरं§ लालाभक्षो हिमोत्कटः ।
मृषावस्था वसाकूपस्तथा¶ वैतरणी नदी ॥ ४ ।
श्वभक्ष्यो मूत्रपानञ्च पुरीषह्रद एव च ।
तप्तशूलं तप्तशिलाशाल्मलीद्रुममेव च ॥ ५ ।
तथा शोणितकूपश्च घोरं शोणितभोजनम्‖ ।
स्वमांसभोजनञ्चैव** वह्निज्वालाप्रवेशनम् ॥ ६ ।

---

* (ख) पुस्तके चतुर्द्दशाध्यायः, पञ्चदशाध्यायस्यापि कियान् भागो नास्ति ।

† यथा इति (क), (घ), (ङ) ।

‡ प्रमर्द्दकः इति (ख) ।

§ नरकमसिपत्रञ्च इति (क) ।

¶ भटाकूपस्तथेति (क), (घ), (ङ) ।

‖ शोणितभक्षणमिति (घ) ।

** श्वमांसभक्षणञ्चैवेति (घ) ।

शिलावृष्टिः शस्त्रवृष्टिर्वह्निवृष्टिस्तथैव च ।
चीरोदकं चोष्णतोयं तप्तायःपिण्डभक्षणम्* ॥ ७ ।
अधःशिरःशोषणञ्च मरुप्रपतनन्तथा ।
तथा पाषाणयन्त्राणि कृमिभोजनमेव च ॥ ८ ।
क्षाराम्बुपानभ्रमणं तथा क्रकचदारणम् ।
पुरीषलेपनञ्चैव पुरीषस्य च भोजनम् ॥ ९ ।
रेतःपानं महाघोरं सर्व्वसन्धिषु दाहनम् ।
अङ्गारशयनञ्चैव तथा मुषलमर्द्दनम् ॥ १० ।
बहूनि काष्ठयन्त्राणि कर्षणं छेदनं तथा ।
पतनोत्पतनञ्चैव गदादण्डादिपीड़नम्† ॥ ११ ।
गजदन्तैः प्रहरणं नानासर्पैश्च दंशनम् ।
धूमपानं पाशबन्धं नानाशूलाग्ररोहणम्‡ ॥ १२ ।
क्षाराम्बुसेचनञ्चैव नासायाञ्च मुखे तथा ।
घोरं क्षाराम्बुपानञ्च तथा लवणभक्षणम् ॥ १३ ।
स्नायुच्छेदं स्नायुबन्धमस्थिच्छेदन्तथैव§ च ।
क्षाराम्बुकर्णरन्ध्राणां¶ प्रवेशं मांसभोजनम् ॥ १४ ।
पित्तपानं महाघोरं तथैव श्लेष्मभोजनम् ।

---

* तप्ताय.पिण्डभोजनमिति (घ) ।

† पदा दण्डावपीडनमिति (क) ।

‡ शूलाग्ररोपणमिति (क), (घ), (ङ) ।

§ अस्थिभेदन्तथैव च इति (घ) ।

¶ क्षाराम्बुपूर्णरन्ध्राणामिति (ङ) ।

वृक्षाग्रात्पतनञ्चैव जलान्तर्मज्जनन्तथा ॥ १५ ।
पाषाणधारणञ्चैव शयनं कण्टकोपरि ।
पिपीलिकाभिर्दंशनं* वृश्चिकैश्चाऽपि पीड़नम् ॥ १६ ।
व्याघ्रपीड़ा शिवापीड़ा तथा महिषपीड़नम्† ।
कर्दमे शयनञ्चैव दुर्गन्धपरिपूरिते‡ ॥ १७ ।
शस्त्रास्त्रशयनञ्चैव महातीक्ष्णनिषेवणम्§ ।
अत्युष्णतैलपानञ्च महत्कटुनिषेवणम् ॥ १८ ।
कषायोदकपानञ्च तप्तपाषाणभक्षणम्¶ ।
अत्युष्णसिकतास्नानं तथा दशनशीर्णनम् ॥ १९ ।
तप्तायःशयनञ्चैव तप्तशीताम्बुसेचनम् ।
सूचीप्रक्षेपणञ्चैव नेत्रयोर्मुखसन्धिषु ॥ २० ।
शिश्ने च वृषणे चैव अयोभारस्य बन्धनम् ॥ २१ ।
एवमाद्या महाभाग यातनाः कोटिकोटिशः ।
अपि वर्षसहस्रेण नाहं निगदितुं क्षमः ॥ २२ ।
एतेषु यस्य यत्पापं पापिनः क्षितिरक्षक ।
तत्सर्व्वं संप्रवक्ष्यामि तन्मे निगदतः शृणु ॥ २३ ।
ब्रह्महा च सुरापी च स्तेयी च गुरुतल्पगः ।

---

* दंशनमिति (ग), (घ) । एवं सति छन्दोभङ्गः ।

† एतदर्द्धं (घ) पुस्तके नास्ति ।

‡ दुर्गन्ध परिती बहु इति (क) ।

§ महातिक्तनिषेवणमिति (ग) ।

¶ महत्कटुनिषेवणमिति (क), (घ) पुस्तके श्लोकस्यास्य पूर्व्वार्द्धं नास्ति ।

महापातकिनस्त्वेते तत्संयोगी च पञ्चमः ॥ २४ ।
पंक्तिभेदी वृथापाकी ब्राह्मणानाञ्च निन्दकः ।
आदेशी वेदविक्रेता पञ्चैते ब्रह्मघातकाः ॥ २५ ।
ब्राह्मणान्यः* समाहूय दास्यामीति धनादिकम् ।
पश्चान्नास्तीति तं† ब्रूयात्तमाहुर्ब्रह्मघातकम् ॥ २६ ।
यस्माद्धर्म्मं परिज्ञाय तमेव‡ द्वेष्टि योऽधमः ।
करोति चाऽप्युदासीनं तमाहुर्ब्रह्मघातकम्§ ॥ २७ ।
गवां तृष्णाभिभूतानां पानार्थमभियायिनाम्¶ ।
अन्तरायीभवेद्यस्तु तमाहुर्ब्रह्मघातकम् ॥ २८ ।
स्नानार्थं भोजनार्थं वा गच्छतो ब्राह्मणस्य यः ।
समायात्यन्तरायत्वं तमाहुर्ब्रह्मघातकम् ॥ २९ ।
अनधीत्य च शास्त्राणि शास्त्रार्थं वक्ति योऽधमः ।
अहङ्काररतो यश्च तमाहुर्ब्रह्मघातकम्‖ ॥ ३० ।
प्रायश्चित्तं चिकित्साञ्च ज्योतिषं धर्म्मनिर्णयम् ।
विना शास्त्रेण यो ब्रूते तमाहुर्ब्रह्मघातकम् ॥ ३१ ।
यश्चैश्वर्य्याभिमानेन विद्याधनमदेन वा ।

---

* ब्राह्मणाना समाहूय इति (घ) ।

† पश्चान्नास्तीति यो ब्रूयादिति (क) ।

‡ तेनैव द्वेष्टीति (ग) ।

§ (घ) पुस्तके (२७) श्लोको नास्ति ।

¶ पानार्थमभिधावतामिति (क), (ङ) ।

‖ (क) पुस्तके (३०) श्लोको नास्ति, तत्स्थाने (३८) श्लोकः पठितः ।

द्विजानाधिपते सर्व्वान्तमाहुर्ब्रह्मघातकम् ॥ ३२ ।
परनिन्दासु निरतः स्वात्मोत्कर्षपरश्च* यः ।
असत्यनिरतश्चैव ब्रह्महा परिकीर्त्तितः ॥ ३३ ।
अन्योद्वेगकरश्चैव तथा चान्यस्य सूचकः ।
दम्भाचारपरश्चैव ब्रह्महेत्यभिधीयते ॥ ३४ ।
नित्यं प्रतिग्रहरतस्तथा प्राणिवधे रतः ।
अधर्म्मस्यानुमन्ता च ब्रह्महेत्यभिधीयते† ॥ ३५ ।
ब्रह्महत्यासमं पापमेवं बहुविधं नृप ।
सुरापानसमं पापं प्रवक्ष्यामि समासतः ॥ ३६ ।
गणान्नभोजनञ्चैव गणिकान्ननिषेवणम् ।
पतितान्नादनञ्चैव सुरापानसमं स्मृतम् ॥ ३७ ।
औपासनपरित्यागो देवलस्यान्नभोजनम् ।
सुरापयोषित्‡संयोगं सुरापानसमं स्मृतम् ॥ ३८ ।
यः शूद्रेण समाहूतो भोजनं कुरुते द्विजः ।
सुरापी स हि विज्ञेयः§ सर्व्वधर्म्मवहिष्कृतः ॥ ३९ ।
यः शूद्रेणाभ्यनुज्ञातः कुर्य्याद्वा भोजनं द्विजः ।
सुरापी स हि¶ विज्ञेयः सर्व्वकर्म्मवहिष्कृतः ॥ ४० ।

---

* आत्मोत्कर्षपरस्तु यः इति (क) ।

† ब्रह्महा परिकीर्त्तित इति (क), (घ), (ङ) ।

‡ सुरापराऽपि इति (ग) ।

§ सुरापी च स विज्ञेय इति (क), (घ) ; सुरापी स च विज्ञेयः इति (ङ) ।

¶ सुरापी च स इति (क) ।

एवं बहुविधं पापं सुरापानसमं नृप* ।
हेमस्तेयसमं पापं प्रवक्ष्यामि समासतः ॥ ४१ ।
कन्दमूलफलानाञ्च कस्तूरीपट्टवाससाम् ।
तथा स्तेयञ्च रत्नानां स्वर्णस्तेयसमं स्मृतम् ॥ ४२ ।
क्रमुकस्यापहरणं† पयसश्चन्दनस्य च ।
कर्पूरस्यापहरणं‡ स्वर्णस्तेयसमं स्मृतम् ॥ ४३ ।
ताम्रायस्त्रिपुकांस्यानां§माज्यस्य च मधोस्तथा¶ ।
स्तेयं सुगन्धिद्रव्याणां हेमस्तेयसमं स्मृतम्|| ॥ ४४ ।
रसद्रव्याऽपहरणं धान्यानां हरणन्तथा ।
रुद्राक्षहरणञ्चैव स्वर्णस्तेयसमं स्मृतम् ॥ ४५ ।
गुर्व्वङ्गनासमं पापं प्रवक्ष्यामि समासतः ।
भगिनीगमनञ्चैव पुत्रस्त्रीगमनन्तथा** ।
रजस्वलाभिगमनं गुरुतल्पसमं स्मृतम् ॥ ४६ ।
भ्रातृस्त्रीगमनञ्चैव वयस्यस्त्रीनिषेवणम् ।
विश्वस्तागमनञ्चैव गुरुतल्पसमं स्मृतम् ॥ ४७ ।

---

* समं स्मृतमिति (क), (घ), (ङ) ।

† क्रमुकस्याऽपि हरणमिति (क), (घ) ।

‡ कर्पूरस्याऽपि हरणमिति (ङ) ।

§ ताम्रायश्चैव कांस्यानामिति (क) ।

¶ मधोरिति आर्षं, मधुन इति साधु ।

|| स्तेयं गन्धद्रव्याणाञ्च हेमस्तेयसमं स्मृतमिति (क), स्वर्णस्तेयसमं स्मृतमिति (ग) ।

** एतच्चरणद्वयं बहुषु पुस्तकेषु नास्ति ।

अकालकर्म्मकरणं पुंश्चीगमनमेव च ।
हीनजात्यभिगमनं मद्यपस्त्रीनिषेवणम् ।
परस्त्रीगमनञ्चैव गुरुतल्पसमं स्मृतम्* ॥ ४८ ।
वेदश्रद्धाविहीनत्वं गुरुतल्पसमं स्मृतम् ॥ ४९ ।
पितृयज्ञपरित्यागी धर्म्मकार्य्यविलोपकृत्† ।
यतिनिन्दापरश्चैव विज्ञेयो गुरुतल्पगः‡ ॥ ५० ।
इत्येवमाद्यो राजन्महापातकसंज्ञिताः ।
एतेष्वन्यतमे वापि सङ्गकृत्तत्समो भवेत् ॥ ५१ ।
यथा कथञ्चित्पापानां महद्भिः परमर्षिभिः ।
शास्त्रेषु निष्कृतिर्दृष्टा प्रायश्चित्तादिकल्पनैः ॥ ५२ ।
प्रायश्चित्तविहीनानि पापानि शृणु भूपते ।
समस्तपापतुल्यानि महानरकदानि वै ॥ ५३ ।
यः शूद्रेणार्च्चितं लिङ्गं विष्णुं वा प्रणमेन्नरः ।
न तस्य निष्कृतिश्चास्ति प्रायश्चित्तायुतैरपि§ ॥ ५४ ।
नमेद्यः शूद्रसंस्पृष्टं लिङ्गं वा हरिमेव वा ।
स सर्व्वयातनाभोगी यावदाचन्द्रतारकम् ॥ ५५ ।
पाषण्डपूजितं लिङ्गं नत्वा पाषण्डतां व्रजेत् ।

---

* बहुषु पुस्तकेषु (४७।४८) श्लोकयोर्विपर्य्यासो दृश्यते ।

† धर्म्मकार्य्यविनाशकृदिति (घ) ।

‡ (ङ) पुस्तके (४९।५०) श्लोकौ न स्तः ।

§ (क) पुस्तके (५३।५४) श्लोकौ न स्तः ।

राजन्वेदविदो वापि सर्व्वशास्त्रार्थविद्यदि* ॥ ५६ ।
आभीरपूजितं लिङ्गं नत्वा नरकमश्नुते ॥ ५७ ।
योषिद्भिः पूजितं लिङ्गं विष्णुं वापि नमेत्तु यः ।
स कोटिकुलसंयुक्त आकल्पं रौरवे वसेत्† ॥ ५८ ।
यदा प्रतिष्ठितं लिङ्गं मन्त्रविद्भिर्यथाविधि ।
तदाप्रभृति शूद्रश्च योषितो वापि न स्पृशेत्‡ ॥ ५९ ।
स्त्रीणामनुपनीतानां शूद्राणाञ्च जनेश्वर ।
स्पर्शने नाधिकारोऽस्ति विष्णोर्व्वा शङ्करस्य वा§ ॥ ६० ।
विष्णुं वा शङ्करं वापि आश्रमाचारवर्ज्जितैः ।
अर्च्चितं राजशार्दूल स्वप्नेऽपि च न पूजयेत् ॥ ६१ ।
यः शूद्रसंस्कृतं लिङ्गं विष्णुं वाऽपि नमेन्नरः ।
इहैवात्यन्तदुःखानि पश्यन्त्यामुष्मिकं किमु¶ ॥ ६२ ।
आभीरपूजितं लिङ्गं विष्णुं वापि जनेश्वर ।
नमन्तन्नाशयत्येव किमन्यैर्बहुभाषितैः ॥ ६३ ।
शूद्रो वाऽनुपनीतो वा स्त्रियो वा‖ पतितोऽपि वा ।
केशवं वा शिवं वाऽपि स्पृष्ट्वा नरकमश्नुते ॥ ६४ ।

---

* सर्व्वशास्त्रविदो यदि इति (ङ)।

† आकल्पं रौरव व्रजेदिति (क), रौरवं वसेदिति (घ), (ङ)।

‡ शूद्रो न स्पृशेत्, योषितो वापि न स्पृशेयुरित्यर्थः ।

§ विष्णौ वा शङ्करेऽपि वा इति (क), (घ), (ङ)।

¶ सम्प्राप्य स्थितवान् गृहे इति (क)।

‖ योषिदिति (घ)।

ब्रह्महत्यादिपापानां कदाचिन्निष्कृतिर्भवेत्।
ब्राह्मणं द्वेष्टि यस्तस्य निष्कृतिर्नास्ति कुत्रचित् ॥ ६५ ।
विश्वासघातक नाश्च कृतघ्नानां जनेश्वर ।
शूद्रस्त्रीसङ्गिनाञ्चैव निष्कृतिर्नास्ति कुत्रचित्* ॥ ६६ ।
शूद्रान्नपुष्टदेहानां वेदनिन्दारतात्मनाम् ।
गुरुनिन्दापराणाञ्च निष्कृतिर्नैव विद्यते ॥ ६७ ।
शिवनिन्दापराणाञ्च विष्णुनिन्दारतात्मनाम् ।
सत्कथानिन्दकानाञ्च नेहाऽमुत्र च निष्कृतिः ॥ ६८ ।
बौद्धालयं विशेद्यस्तु महापद्यपि वै द्विजः ।
तस्य वै निष्कृतिर्नास्ति† प्रायश्चित्तशतैरपि ॥ ६९ ।
बौद्धाः पाषण्डिनः प्रोक्ता यतो वै वेदनिन्दकाः ।
तस्माद्द्विजस्तान्नेक्षेत यदि वेदेषु भक्तिमान् ॥ ७० ।
ज्ञानतोऽज्ञानतो वापि द्विजो बौद्धालयं विशेत् ।
ज्ञात्वा वै‡ निष्कृतिर्नास्ति शास्त्राणामेष निर्णयः ॥ ७१ ।
एतेषां पापबाहुल्यान्नरकं कल्पकोटिषु§ ।
एते पाषण्डिनः प्रोक्तास्तस्मादेषां न निष्कृतिः ॥ ७२ ।
प्रायश्चित्तविहीनानि प्रोक्तान्येतानि ते प्रभो ।

---

* (क) पुस्तके (६६) श्लोकस्य द्वितीयतृतीयपादौ तथा (६७) श्लोकश्च न सन्ति ।

† न तस्य निष्कृतिश्चास्ति इति (ग) ।

‡ ज्ञात्वा च इति (ग) ।

§ नरकं न निवर्त्तते इति (क) ।

अघानि तेषां नरकान् गदतो मे* निशामय ॥ ७३ ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
पच्यन्ते नरकेष्वेषु† वंशायुतसमन्विताः ॥ ७४ ।
ततः कर्म्मोऽवसानेन‡ स्थावराः प्रभवन्ति ते ।
कल्पत्रितयपर्य्यन्तं तदन्ते क्रमयो हि ते§ ॥ ७५ ।
षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च ।
विष्ठाभुजो भवन्त्येते पुरीषक्रमयस्तथा¶ ॥ ७६ ।
ततस्त्वाशीविषाः कल्पं तदन्ते क्रमयो हि ते‖ ।
तथैव युगसाहस्रं तदन्ते म्लेच्छजातयः ॥ ७७ ।
क्रमेण** कर्म्मशेषेण गोलकाः†† प्रभवन्ति ते ।
कुण्डाश्च जन्मन्येकस्मिंस्ततो विप्रो ह्यकिञ्चनः ॥ ७८ ।
दारिद्र्यपीड़ितो नित्यं प्रतिग्रहपरायणः ।
पापं प्रतिग्रहाद्याति पापान्नरकमश्नुते ॥ ७९ ।
तव राजन्महाभाग यातना याः प्रकीर्त्तिताः ।
महापातकिनस्तासु प्रत्येकं युगवासिनः ॥ ८० ।

---

* वदतो मे इति (क) ।
† नरके घोरे इति (ग) ।
‡ कर्म्मोऽवशेषेण इति (ग) ।
§ क्रमयो हि ते इति (ङ) ।
¶ क्रमयस्तथा इति (घ), (ङ) ।
‖ तदन्ते पशवो हि ते इति (क), (घ), (ङ) ।
** तदन्ते इति (घ) ।
†† गलका. इति (ग), गणिकाः इति (घ), (ङ) ।

तदन्ते पृथिवीमेत्य सप्तजन्मसु गर्द्दभाः* ।
ततः श्वानो विड्वराहा भवेयुर्दशजन्मसु ॥ ८१ ।
आशताब्दं विट्क्रमयस्ततस्ते मूषिका नृप† ।
तावत्कालं भवेयुश्च सर्पा द्वादशजन्मसु‡ ॥ ८२ ।
ततः सहस्रजन्मानि§ मृगाद्याः पशवो नृप ।
शताब्दं स्थावरा राजंस्तदन्ते गोशरीरिणः¶ ॥ ८३ ।
ततस्तु सप्त जन्मानि चाण्डालाः परिकीर्त्तिताः ।
ततः षोड़श जन्मानि शूद्राद्या हीनजातयः ॥ ८४ ।
ततस्तु जन्मद्वितये वैश्यः क्षत्रिय एव च ।
तत्राऽप्यतिबलैर्नित्यं बाध्यमानो हि‖ जीवति ॥ ८५ ।
ततश्च विप्रतां प्राप्य दरिद्रो व्याधिपीड़ितः ।
प्रतिग्रहपरो नित्यं ततो नरकमश्नुते** ॥ ८६ ।
असूयाविष्टमनसां रौरवं नरकं स्मृतम् ।
तत्र कल्पत्रयं स्थित्वा चण्डालाः कोटिजन्मसु ॥ ८७ ।
मा ददस्वेति यो ब्रूयाद्देवाग्नौ ब्राह्मणेषु च ।

---

* गर्हिता इति (घ), गर्ह्हिता' इति (ङ) ।

† (क) पुस्तकेऽतः परं कति श्लोका न सन्ति ।

‡ (घ) पुस्तकेऽत. परं सार्द्धैकश्लोको नास्ति ।

§ ततः षोड़श जन्मानीति (ङ) ।

¶ तदन्तेष्वशरीरिण इति (ङ) ।

‖ बाध्यमानोऽपि जीवति इति (ङ) ।

** (घ) पुस्तके (८५) श्लोकस्य चतुर्थचरणादारभ्य (८६) श्लोकस्य तृतीयचरणाव धिकः प्रबन्धो नास्ति ।

स श्वयोनिशतं गत्वा चाण्डालेषु निपात्यते* ॥ ८८ ।
ततो विष्ठाकृमिः कल्पं ततो व्याघ्रस्त्रिजन्मनि ।
तदन्ते नरकं याति युगानामेकविंशतिम्† ॥ ८९ ।
परनिन्दारता ये च‡ ये च निष्ठुरभाषिणः ।
दानानां विघ्नकर्त्तारस्तेषां पापफलं शृणु ॥ ९० ।
तप्तायःपिण्डवदनाः सूचीपूरितलोचनाः ।
अधःशिरार्द्धपादाश्च ताड्यन्ते यमकिङ्करैः ॥ ९१ ।
एवं शताब्दपर्य्यन्तं तदन्ते शोणिते ह्रदे ।
मग्नाः कण्ठस्थपाषाणाः शताब्दं निवसन्ति ते ॥ ९२ ।
ततः सर्व्वेषु घोरेषु नरकेषु समाः शतम् ।
स्थित्वा कर्म्मावशेषेण तरन्त्यामिषभोगिनः§ ॥ ९३ ।
परद्रव्यापहर्त्तॄणां नरकं शृणु पण्डित¶ ।
मुषलोदूखलाभ्याञ्च तुद्यन्ते‖ तस्करा भृशम् ॥ ९४ ।
तदन्ते तप्तपाषाणग्रहणं वत्सरत्रयम् ।
ततश्च कालसूत्रेण भिद्यन्ते सप्तवत्सरान् ॥ ९५ ।
शोचन्तः स्वानि कर्म्माणि परद्रव्यापहारकाः** ।

---

* श्वनो योनिशतं गत्वा चण्डालेषु च जायते इति (घ), (ङ) ।

† युगानामेकसप्ततिमिति इति (घ), (ङ) ।

‡ परनिन्दापरा ये चेति (घ), (ङ) ।

§ एतदर्द्धं (क) पुस्तके नास्ति ।

¶ एतदर्द्धं (क) पुस्तके नास्ति, (ङ) पुस्तके तु तरकुण्डलनामध्यमारोपितम् ।

‖ ताड्यन्ते इति (क), चूर्ण्यन्ते इति (घ), (ङ) ।

** परद्रव्यापहारतः इति (ग) ।

ततः क्रमेण पच्यन्ते नरकाग्निषु सन्ततम् ॥ ९६ ।
परस्वसूचकानाञ्च नरकं शृणु भूपते* ।
तावद्युगसहस्राणि तप्तायःपिण्डभक्षणम्† ॥ ९७ ।
उत्पाट्यन्ते तु रदनाः सन्दंशैर्भृशदारुणैः ।
निरुच्छ्वासे महाघोरे कल्पान्तं निवसन्ति ते ॥ ९८ ।
परस्त्रीलोलुपानाञ्च नरकं शृणु भूपते ।
तप्तताम्रस्त्रियस्तेन रमन्ते‡ प्रसभं बहु§ ॥ ९९ ।
रमन्ते तेन संगृह्य विद्रावन्तं प्रसह्य ताः¶ ।
दिशन्त्यस्य कृतं कर्म्म तदन्ते नरकान्क्रमात् ॥ १०० ।
अन्यं भजन्ते भूपाल पतिं त्यक्त्वा च या स्त्रियः ।
तासाञ्च नरकान्वच्मि गदतो मे निशामय ॥ १०१ ।
तप्तायःपुरुषास्तासु‖ तप्तायःशयने बलात् ।
गृहीत्वा कल्पपर्य्यन्तं रमन्तेऽतिबलान्विताः ॥ १०२ ।
ततस्तैर्योषितो मुक्ता हुताशनसमोल्वणम्** ।
अयस्तम्भं समाश्लिष्य तिष्ठन्त्यब्दसहस्रकम् ॥ १०३ ।

---

* (क) पुस्तकेऽतः परमष्टौ श्लोकपादा न सन्ति ।

† तावद्युगसहस्रन्तु तप्ताय.पिण्डभोजनमिति (घ), (ङ) ।

‡ रम्यन्ते इति (क), (घ) ।

§ बलादिति (क), (ख), (ङ) ।

¶ ता. स्त्रियो विद्रावन्तं तं संगृह्य तेन सह रमन्त इत्यर्थः ।

‖ तप्ताय पुरुषास्तासु इति (क), (घ), (ङ) । एवं बहुषु पुस्तकेषु पुरुषाणां कर्म्मत्वे स्थितेऽपि कर्त्तृत्वस्याधिकारस्यात्तदेवाऽवलम्बितमस्माभिः ।

** हुताशनसमेन्धिनमिति (ग) ।

ततः चारोदकस्नानं चारोदकनिषेवणम् ।
तदन्ते नरकान्सर्वान्क्रमेण परिभुञ्जते ॥ १०३ ।
यो हन्ति ब्राह्मणीं गाञ्च चत्रियाञ्च नृपोत्तम ।
स एता यातनाः सर्व्वा भुङ्क्ते कल्पेषु पञ्चसु ॥ १०४ ।
यः शृणोति महन्निन्दां सादरञ्च* शृणुष्व मे ।
तेषां कर्णेषु पात्यन्ते तप्तायःकीलसञ्चयाः† ॥ १०५ ।
ततश्च तेषु छिद्रेषु तैलमत्युष्णमुल्वणम् ।
पूर्य्यते‡ च ततश्चापि कुम्भीपाकं प्रपद्यते ॥ १०६ ।
नास्तिकानां प्रवक्ष्यामि नरकं शृणु भूपते§ ।
अब्दानां कोटिपर्य्यन्तं नरकं भुञ्जते हि ते ॥ १०७ ।
ततश्च कल्पपर्य्यन्तं पुरीषं भुञ्जते नृप ।
युगन्तुष¶ रौरवं पश्चात्तप्तसैकतभोजनम् ॥ १०८ ।
ब्राह्मणान्ये निरीचन्ते क्रोधदृष्ट्या‖ नराधमाः ।
तप्तसूचीसहस्रन्तु तेषां नेत्रेषु पूर्य्यते** ॥ १०९ ।
ततः चाराम्बुधाराभिः सिच्यन्ते नृपसत्तम ।

---

* सादरं तच्छृणुष्व मे इति बहुषु पाठः ।

† तप्तायःफालसञ्चया इति (ग) ।

‡ सिच्यन्त इति (ङ) ।

§ (घ) पुस्तके एतदर्द्धं नास्ति ।

¶ जुषन्ति रौरवमिति (ग), तत्र जुषन्तीति आर्षं, जुषते इति साधु ।

‖ कोपदृष्ट्या इति (घ), (ङ) ।

** चक्षुःषु युज्यते इति (ख), (घ), (ङ) ।

ततश्च क्रकचैर्घोरैर्भिद्यन्ते पापकारिणः* ॥ ११० ।
विश्वासघातिनाञ्चैव मर्य्यादाघातिनान्तथा ।
परान्नलोलुपानाञ्च नरकं शृणु दारुणम् ॥ १११ ।
श्वमांसभोजिनो नित्यं† भक्ष्यमाणाः श्वभिस्तथा ।
नरकेषु समस्तेषु प्रत्येकं युगवासिनः ॥ ११२ ।
प्रतिग्रहरता ये च‡ ये च नक्षत्रपाठकाः ।
ये च देवलकान्नानां भोगिनस्तच्छृणुष्व मे ॥ ११३ ।
राजन्नाकल्पपर्य्यन्तं यातनासु च दुःखिनः ।
पच्यन्ते सततं पापा विष्ठाभोगरताः सदा ॥ ११४ ।
ततश्च भुवमासाद्य चाण्डालाः शतजन्मसु ।
भवन्ति बहुदुःखार्त्ता दरिद्रा व्याधिपीड़िताः ॥ ११५ ।
असत्यनिरतानाञ्च तथा निष्ठुरभाषिणाम् ।
उत्पाट्यन्ते सदा जिह्वाः सन्दंशैर्भृशदारुणैः ॥ ११६ ।
ततस्तैलेन सिच्यन्ते§ कालसूत्रप्रपीड़िताः ।
ततः क्षारोदकस्नानं मूत्रविष्ठानिषेवणम् ।
तदन्ते भुवमासाद्य भवन्ति म्लेच्छजातयः ॥ ११७ ।
अन्योद्वेगकरा ये तु यान्ति वैतरणीं नदीम् ।

---

* पापकर्म्मिण इति (ग) ।

† श्वमांसभोगिनो नित्यमिति (क), (घ), (ङ) ।

‡ प्रतिग्रहपरा ये चेति (क) ।

§ पच्यन्ते इति (क), (घ), (ङ) ।

मुक्तपञ्चमहायज्ञाः* नानाभक्षाः† भवन्ति हि ॥ ११८ ।
औपासनपरित्यागी रौरवं नरकं व्रजेत् ।
अनुष्ठानविहीनाश्च क्रमिभक्षं प्रयान्ति हि ॥ ११९ ।
नृपैतेषाञ्चतुर्णाञ्च दुःखं पञ्चयुगावधि ।
तदन्ते भुवमासाद्य भवन्ति परसेवकाः ॥ १२० ।
विप्रग्रामकरादानं कुर्वतां शृणु भूपते ।
यातनास्तासु पच्यन्ते यावदाचन्द्रतारकम्‡ ॥ १२१ ।
विप्रग्रामेषु भूपाल यः कुर्य्यादधिकङ्करम् ।
ससहस्रकुलो भुङ्क्ते नरकान् कल्पकोटिषु ॥ १२२ ।
विप्रग्रामे करादाने योऽनुमन्यति पातकी§ ।
स एव कृतवान्राजन्¶ ब्रह्महत्यायुतायुतम् ॥ १२३ ।
स्वविष्ठाभोगिनो नित्यं नरा ह्यातिथ्यवर्ज्जिताः‖ ।
कालसूत्रे महाघोरे वसन्ति हि चतुर्युगम् ॥ १२४ ।
अयोनौ च वियोनौ च पशुयोनौ च यो नरः** ।
सिक्ता रेतो महापापी रेतोभोजनमाप्नुयात् ॥ १२५ ।

---

* त्यक्तपञ्चमहायज्ञा इति बहुषु पाठः ।

† लालाभक्षा इति (ग) ।

‡ (क) पुस्तके एष श्लोको नास्ति ।

§ पापकृदिति बहुषु पाठ. ।

¶ सएव कृतवान् पापी ब्रह्महत्यायुतायुतमिति (घ) ।

‖ वाह्यातिथ्यविवर्जिता इति (क) ।

** अयोनौ पशुयोनौ च योनरः कर्त्तुमिच्छतीति (क) ।

वसाकूपं ततः प्राप्य स्थित्वा दिव्याब्दसप्ततिम् ।
रेतोभोगी भवेन्मर्त्त्यः सर्व्वलोकेषु निन्दितः ॥ १२६ ।
उपवासदिने राजन्दन्तधावनकृन्नरः ।
स घोरं नरकं याति* व्याघ्रभक्ष्यं चतुर्युगम् ॥ १२७ ।
स्वदत्तां परदत्तां वा यो हरेत्तु† वसुन्धराम् ।
तस्य पापफलं वक्ष्ये गदतो मे निशामय ॥ १२८ ।
स कोटिकुलसंयुक्तः प्रभुञ्जन् पूतिमृत्तिकाम् ।
यातनास्वासु पच्यन्ते प्रत्येकं कल्पकोटिषु ।
षष्टिवर्षसहस्राणि जायन्ते विड्भुजश्च ते ॥ १२९ ।
गणयेद्यस्तु‡ पृथिवीं मृषा तन्नरकं शृणु ।
स कोटिकुलसंयुक्तो निमज्जत्युष्णकर्द्दमे ॥ १३० ।
ततो विष्ठाह्रदे मग्नस्तिष्ठेद्युगसहस्रकम् ।
तदन्ते यातनास्वासु यावदिन्द्राश्चतुर्द्दश ॥ १३१ ।
ततश्च पृथिवीमेत्य सर्व्वलोकेषु निन्दितः ।
व्रणी कुष्ठाभिभूतश्च भवेद्युगशतं नरः§ ॥ १३२ ।
यः स्वकर्म्मपरित्यागी पाषण्डीत्युच्यते बुधैः ।
तत्सङ्गकृत्तत्समश्च¶ तावुभावतिपापिनौ ॥ १३३ ।

---

* अघोरं नरकं यातीति (क), (घ), (ङ) ।

† यो हरेद्वै इति (क), (घ) । हरेच्चेति (ङ) ।

‡ गोपयेद्यस्तु पृथिवीमिति (क) ।

§ भवे जन्मशतं नरः इति (क), (घ), (ङ) ।

¶ तत्समः स्यादिति (ग) ।

कल्पकोटिसहस्राणि कल्पकोटिशतानि च।
सहस्रवंशसंयुक्तो नरके वासमश्नुते ॥ १३४ ॥
यस्तु सन्तप्तशङ्खादिलिङ्गचिह्नतनुर्नरः* ।
स सर्व्वयातनाभोगी चाण्डालो जन्मकोटिषु ॥ १३५ ।
तं द्विजं† तप्तशङ्खादिलिङ्गाङ्किततनुन्नरः।
सम्भाष्य‡ रौरवं याति यावदिन्द्राश्चतुर्द्दश ॥ १३६ ।
चक्राङ्किततनुर्यत्र तत्र कोऽपि न संवसेत्।
यदि तिष्ठेन्महापापी सहस्रब्रह्महा भवेत् ॥ १३७ ।
गङ्गास्नानरतो वाऽपि अश्वमेधरतोऽपि वा।
चक्राङ्किततनुं दृष्ट्वा पश्येत्सूर्य्यं जपेन्नरः§ ।
जपेत¶ पौरुषं सूक्तमन्यथा नरकं व्रजेत् ॥ १३८ ।
लिङ्गाङ्किततनुं दृष्ट्वा पश्येत्सूर्य्यं जपेन्नरः‖
जपेच्च शतरुद्रीयमन्यथा रौरवं व्रजेत् ॥ १३९ ।
ब्राह्मणस्य तनुर्ज्ञेया सर्व्वदेवसमाश्रिता।
सा चेत्सन्तापिता राजन् किं वक्ष्यामि महैनसः ॥ १४० ।

---

* शङ्खादिलिङ्गचिह्नतनुरिति (ग), (घ)। (ङ) पुस्तके इत आरभ्य सार्द्धश्लोकत्रयं नास्ति।

† यं द्विजमिति (ग)। तप्तशङ्खादिलिङ्गेति (क), (घ)।

‡ संस्थाप्य नरकमिति (ग)।

§ जपन्नर इति (ग)।

¶ प्रजपेत्पौरुषं सूक्तमिति (क), जपेत पौरुषं सूक्तमन्यथा रौरवं व्रजेदिति (घ), (ङ)। जपेतेत्यत्र जपेदिति साधु।

‖ जपन्नर इति (ग)।

चक्राङ्कितततनुर्व्वापि राजल्लिङ्गाङ्कितोऽपि वा ।
नाधिकारी परिज्ञेयः* श्रौतस्मार्त्तेषु कर्म्मसु ॥ १४१ ।
भृतकाध्यापकाश्चैव भृतकाध्यायिनस्तथा ।
आकल्पं यातनां भुङ्क्ते† तदन्ते म्लेच्छजातयः ॥ १४२ ।
स्त्रीशूद्राणां समीपे तु वेदाध्ययनकृन्नरः ।
कल्पकोटिसहस्रेषु प्राप्नोति नरकान् क्रमात् ॥ १४३ ।
देवद्रव्यापहर्त्तारो गुरुद्रव्यापहारकाः ।
ब्रह्महत्यायुतसमं दुष्कृतं भुञ्जते नराः ॥ १४४ ।
अनाथधनहर्त्तारोऽनाथं ये विद्विषन्ति च‡ ।
तेषां पापफलं वच्मि शृणुष्व सुसमाहिताः ॥ १४५ ।
अधःशिरोर्द्ध्वपादाश्च§ कीलितास्तम्भकद्वये ।
धूमपानरता नित्यं तिष्ठन्त्याब्रह्मवासरम् ॥ १४६ ।
आरामे पुष्पहर्त्तारो देवपूजार्थकल्पिते¶ ।
ते यान्ति नरकं घोरं वह्निज्वालाप्रवेशनम् ॥ १४७ ।
जले देवालये वाऽपि यः त्यजेद्देहजं मलम् ।
भ्रूणहत्यासमं पापं प्राप्नोतीत्यतिदारुणम्‖ ॥ १४८ ।

* नाधिकारी सविज्ञेय इति (क) ।

† आकल्प यातना भुक्त्वा इति (क), (घ), (ङ) ।

‡ अनाथधनहर्त्ता यदनाथं ये द्विषन्ति चेति (क) ।

§ अधःशिरोर्द्ध्वपादा इति आर्षं, अधःशिरऊर्द्ध्वपादाः अधःशीर्षोर्द्ध्वपादाविति साधु ।

¶ आरामपुष्पहर्त्तारोदेवपूजाऽनुकल्पित इति (क) ।

‖ भ्रूणहत्यादिकं पापं स प्राप्नोत्यतिदारुणमिति (क), भ्रूणहत्यासमं पापं संप्राप्नोत्यति दारुणमिति (घ), (ङ) ।

दन्तास्थिकेशनखरान्यः सृजेद्देवतालये ।
जले वा भुक्तशेषञ्च तस्य पापफलं शृणु ॥ १४९ ।
प्रासप्रतोदनैर्भिन्ना आर्त्तरावविराविणः ।
अत्युष्णतैलपानञ्च कुम्भीपाकन्ततः क्रमात् ॥ १५० ।
ब्रह्मस्वं हरते यस्तु तुषं वा काष्ठमेव वा ।
स याति नरकं घोरं यावदाचन्द्रतारकम् ॥ १५१ ।
ब्रह्मस्वहरणं राजन्निहामुत्र च दुःखदम्* ।
इह सम्पद्विनाशाय परत्र नरकाय च ॥ १५२ ।
कूटसाक्ष्यं वदेद्यस्तु तस्य पापफलं शृणु ।
स याति यातनाः सर्व्वा यावदिन्द्राश्चतुर्द्दश ॥ १५३ ।
इह पुत्राश्च पौत्राश्च विनश्यन्ति परत्र च† ।
रौरवं नरकं याति यः साक्ष्यमनृतं वदेत् ॥ १५४ ।
ये चातिकामिनो मर्त्त्या ये च मिथ्याभिवादिनः ।
तेषां मुखे जलौकाश्च‡ पूर्य्यन्ते पन्नगोपमाः ॥ १५५ ।
एवं षष्टिसमाः स्थित्वा ततः क्षाराम्बुसेचनम् ।
स्वमांसाहारनिरता विशन्ति क्षारकर्द्दमम्§ ॥ १५६ ।
ततो गजैर्निपात्यन्ते मरुप्रपतनन्तथा¶ ।

---

* इहाऽमुत्राऽपि दुःखदमिति (क), (घ), (ङ) ।

† परत्र वा इति (क), (घ) ।

‡ जलौकास्तु इति (क), (ङ) ।

§ क्षारकर्द्दमे इति (क), (घ), (ङ) ।

¶ मरुत्प्रपतनं तथा इति (क), (घ) ।

तदन्ते भुवमासाद्य हीनाङ्गाः प्रभवन्ति च* ॥ १५७ ।
ऋतौ नाभिगमेद्यस्तु स्वस्त्रियं मनुजेश्वर ।
स याति रौरवं† घोरं ब्रह्महत्याञ्च विन्दति ॥ १५८ ।
अनाचाररतान्दृष्ट्वा यः शक्तो न निवारयेत् ।
तत्पापार्द्धमवाप्नोति यतोऽपेक्षापरायणः‡ ॥ १५९ ।
पापिनां पापगणनां यः करोति नराधमः ।
अस्तित्वे तुल्यपापी स्यान्मिथ्यात्वे द्विगुणम्भवेत् ॥ १६० ।
अपापे पातकं यस्तु समारोपति§ निन्दति ।
स याति नरकान् घोरान्यावदाचन्द्रतारकम् ॥ १६१ ।
पापिनां पातकं यस्तु वदेत्तत्सदृशो¶ भवेत् ।
पापिनां नित्यपापानां पापार्द्धं नश्यति क्षणात् ॥ १६२ ।
कन्यागामी नरो‖ यस्तु भक्ष्यमाणः श्वभिः सदा ।
स याति धूमपानञ्च मृषावस्थां ततः क्रमात् ॥ १६३ ।
यस्तु व्रतानि संगृह्य असमाप्य परित्यजेत् ।
सोऽसिपत्रवनं प्राप्य हीनाङ्गो जायते भुवि ॥ १६४ ।
अन्यैः संगृह्यमाणानां व्रतानां विघ्नकृन्नरः ।

---

* विहीनाङ्गा भवन्ति च इति (क) ।

† नरकं घोरमिति (क)। पुस्तकेऽस्मिन् श्लोकादस्मा दनन्तरं दशश्लोका न सन्ति ।

‡ यतोऽपेक्षापरायण इति आर्षं, यत उपेक्षा यदुपेक्षा वेति साधु ।

§ समारोपतीत्यार्षं, समारोपयतीति साधु ।

¶ तत्स्वरूपो भवेदिति (घ) ।

‖ रतौ यस्तु इति (ग) ।

त्रिसप्तकुलसंयुक्तः स याति श्लेष्मभोजनम् ॥ १६५ ।
न्याये च धर्म्मशिक्षायां पक्षपातं करोति यः ।
न तस्य निष्कृतिर्भूप प्रायश्चित्तशतैरपि ॥ १६६ ।
अभोज्यभोजी संप्राप्य पित्तपानं समायुतम् ।
चण्डालवंशे संजातो गोमांसाशी भवेत्सदा ॥ १६७ ।
अवमन्य द्विजान्वाग्भिर्ब्रह्महत्याञ्च विन्दति ।
सर्व्वाश्च यातना भुक्ता चाण्डालो दशजन्मसु ॥ १६८ ।
विप्राय दीयमाने तु यो विघ्नं कुरुते नरः ।
स याति ब्रह्महत्यानां सहस्राणां शतायुतम् ॥ १६९ ।
अपहृत्य परस्यार्थं यः परेभ्यः प्रयच्छति ।
स दाता नरकं याति यस्यार्थस्तस्य तत्फलम् ॥ १७० ।
अन्यायसाधितं द्रव्यं यश्चान्यस्मै प्रयच्छति ।
स याति नरकं घोरं यस्यार्थस्तस्य तत्फलम् ॥ १७१ ।
प्रतिश्रुत्याऽप्रदानेन लालाभक्षं व्रजेन्नरः ।
यतिनिन्दापरो राजञ्छिलायन्त्रं व्रजेन्नरः* ॥ १७२ ।
आरामच्छेदिनो यान्ति युगानामेकविंशतिम् ।
श्वभोजनं ततो यान्ति क्रमात्सर्व्वाश्च यातनाः ॥ १७३ ।
देवतागृहभेत्तारस्तड़ागानाञ्च भेदिनः ।
पुष्पारामभिदश्चैव† यां गतिं प्राप्नुयुः शृणु ॥ १७४ ।
कोटिकोटिकुलैर्युक्ताः कल्पकोट्ययुतानि षट् ।

---

* शिलारूपं व्रजेन्नरः इति (क) ।

† पुष्परोमभेदिनश्च इति (ग) ।

यातनासु च सर्व्वासु* पच्यन्ते वै पृथक् पृथक् ॥ १७५ ।
ततश्च विष्ठाकृमयः कल्पकोटिषु भूपते ।
तदन्ते विड्भुजस्ते वै कल्पानामेकविंशतिम् ॥ १७६ ।
तथैव ते कृमिभुजो युगानामेकविंशतिम् ।
ततश्च भुवमासाद्य चाण्डालाः कोटिजन्मसु ॥ १७७ ।
शमनाशकराणाञ्च पापञ्च सुमहत्तरम् ।
न समर्थो† निगदितुं जन्मकोटिशतैरपि ॥ १७८ ।
देवपुर्दाहका ये तु तथैव ग्रामदाहकाः ।
यावद्ब्रह्मा सृजत्येतत्तावन्नरकमाप्नुयुः ॥ १७९ ।
यस्य कस्य च पापस्य योऽनुमन्ता भवेन्नरः ।
स याति तत्र पापार्द्धं नरकांश्च यथोचितान्‡ ॥ १८० ।
कुण्डाशी गोलकाशी च तथैव ग्रामयाजकः ।
अयाज्ययाजकश्चैव महापातकिनः स्मृताः ॥ १८१ ।
आह्वायका§ देवलका ग्रामनक्षत्रयाजकाः ।
तएते ब्रह्मचाण्डाला¶ महापातकपञ्चमाः‖ ॥ १८२ ।
एतेषां यातनाः सर्व्वा युगानामेकविंशतिम् ।

---

* यातनास्वासु इति बहुषु पाठः ।

† न समर्थोऽस्मि गदितुमिति (क) ।

‡ यथोदितानिति (क), (ख), (ग) ।

§ अयाजका देवलका इति (ङ) ।

¶ तदन्ते ब्रह्मचाण्डाला इति (क), (ङ) ; तएव ब्रह्मचाण्डाला इति (घ) ।

‖ महापथिकपञ्चमा इति (ग), (घ) ।

तदन्ते भुवमासाद्य चाण्डालाः सप्तजन्मसु ॥ १८३ ।
उच्छिष्टभोजिनो ये च मित्रद्रोहरताश्च ये ।
तेषाञ्च यातनाः सर्व्वा यावदाचन्द्रतारकम् ॥ १८४ ।
उत्सन्नपितृदेवेज्या वेदमार्गवहिष्कृताः ।
पाषण्डा इति विख्याता यातना बह्वः स्मृताः ॥ १८५ ।
एवं बहुविधाः प्रोक्ताः पातकाश्चोपपातकाः ।
तेषान्तु संख्याबाहुल्यात्कियन्तस्ते प्रकीर्त्तिताः ॥ १८६ ।
पापानां यातनानाञ्च* धर्म्माणाञ्चैव भूपते ।
संख्यां निगदितु शक्तो लोके को विष्णुना ऋते† ॥ १८७ ।
एतेषां सर्व्वपापानां धर्म्मशास्त्रविधानतः‡ ।
प्रायश्चित्तेषु चीर्णेषु पापराशिः प्रणश्यति ॥ १८८ ।
प्रायश्चित्तानि कार्य्याणि समीपे कमलापतेः ।
न्यूनातिरिक्तता न स्यात्सफलानि भवन्ति हि§ ॥ १८९ ।
गङ्गा च तुलसी चैव सत्सङ्गो हरिकीर्त्तनम् ।
अनसूया ह्यहिंसा च सर्व्वपापप्रणाशिनः ॥ १९० ।
विष्णुर्पितानि कर्म्माणि सफलानि भवन्ति हि¶ ।
अनर्पितानि कर्म्माणि भस्मनि न्यस्तहव्यवत् ॥ १९१ ।

---

* पातकानाञ्च इति (क), (घ), (ङ) ; कर्म्मणाञ्चैव भूपते इति (ङ) ।

† संख्या निगदितुं लोके कः चमो विष्णुना ऋते इति (क), (घ), (ङ) ।

‡ धर्म्मशास्त्रविशारद इति (ङ) ।

§ सफलानि भवन्ति च इति बहुषु पुस्तकेषु पाठः ।

¶ भवन्ति च इति (ग) ।

नित्यं नैमित्तिकं काम्यं यच्चान्यन्मोक्षसाधनम्* ।
विष्णोः समर्पितं सर्व्वं सात्त्विकं सफलं भवेत् ॥ १९२ ।
विष्णोर्भक्तिः† परा नृणां सर्व्वपापप्रणाशिनी ।
भक्तिमद्भिः कृतं कर्म्म सफलं स्यान्महीपते ॥ १९३ ।
भक्तिर्दशगुणा नृणां‡ पापारण्यदवानलः ।
तामसै राजसैश्चैव सात्विकैश्च नृपोत्तम ॥ १९४ ।
यश्चान्यस्य विनाशार्थं भजते श्रद्धया हरिम् ।
शृणुष्व पृथिवीपाल सा भक्तिस्तामसाऽधमा ॥ १९५ ।
योऽर्च्चयेत्कैतवधिया स्वैरिणी स्वपतिं यथा ।
नारायणं जगन्नाथं सा वै तामसमध्यमा ॥ १९६ ।
देवपूजापरान्दृष्ट्वा मत्सरी§ योऽर्च्चयेद्धरिम् ।
शृणुष्व पृथिवीपाल सा भक्तिस्तामसोत्तमा ॥ १९७ ।
धनधान्यादिकं यस्तु प्रार्थयन्नर्च्चयेद्धरिम् ।
श्रद्धया परयाविष्टः सा भक्ती राजसाऽधमा ॥ १९८ ।
यः सर्व्वलोकविख्यातां कीर्त्तिमुद्दिश्य माधवम् ।
अर्च्चयेत्परया भक्त्या सा वै राजसमध्यमा ॥ २९९ ।
सालोक्यादिपदं यस्तु प्रार्थयन्नर्च्चयेद्धरिम्¶ ।

---

* मोक्षसाधकमिति (ग) ।

† विष्णुभक्तिः परा नृणामिति बहुषु पुस्तकेषु पाठः ।

‡ दशगुणाश्रया इति (क), (घ), (ङ) । पापारण्यदवोपमा इति (घ), (ङ) ।

§ देवपूजापरान्दृष्ट्वा मनुजानिति (क), (ङ) । मनुजोयोऽर्च्चयेद्धरिमिति (घ) ।

¶ समुद्दिश्यार्च्चयेद्धरिमिति (क), (घ) ।

विज्ञेया पृथिवीपाल सा भक्ती राजसोत्तमा ॥ २०० ।
यस्तु स्वकृतपापानां क्षयार्थं पूजयेद्धरिम् ।
श्रद्धया परया राजन् सा भक्तिः सात्त्विकाधमा ॥ २०१ ।
हरेरिदं प्रियमिति शुश्रूषां कुरुते नरः* ।
जनेषु श्रद्धया युक्तो भक्तिः सात्त्विकमध्यमा† ॥ २०२ ।
विधिबुद्ध्यार्च्चयेद्यस्तु दासवच्चक्रपाणिनम् ।
भक्तीनां प्रवरा ज्ञेया सा भक्तिः सात्त्विकोत्तमा ॥ २०३ ।
नारायणस्य महिमां‡ काञ्चिच्छ्रुत्वाऽपि§ यो नरः ।
तन्मयत्वेन सन्तुष्टः सा भक्तिः सात्त्विकोत्तमा ॥ २०४ ।
अहमेव परो विष्णुर्म्मयि सर्व्वमिदं जगत् ।
इति यः सततं पश्येत्तं विद्यादुत्तमोत्तमम् ॥ २०५ ।
एवं दशविधा भक्तिः संसारच्छेदकारिणी ।
तत्रापि सात्त्विकी भक्तिः सर्व्वकामफलप्रदा ॥ २०६ ।
तस्माच्छृणुष्व भूपाल संसारच्छेदमिच्छता ।
स्वकर्म्मणोऽविरोधेन भक्तिः कार्य्या जनार्द्दने ॥ २०७ ।
यः कर्म्माणि परित्यज्य भक्तिमात्रेण जीवति ।
न तस्य तुष्यते विष्णुराचारात्पूज्यते यतः ॥ २०८ ।

---

* हरेरिदं प्रियमिति कृत्वा मनसि योनरः इति (क) ।

† कर्म्माणि कुरुते भूप ज्ञेया सात्विकमध्यमा इति (क), ज्ञेया सात्विकमध्यमा इति (घ), (ङ) ; (ग), (घ) पुस्तकयोः जनेषु इत्यस्य स्थाने जनेश इति पाठोऽस्ति ।

‡ महिमामित्यार्षं महिमानमिति साधु।

§ काञ्चिदश्रुत्वा च इति (क), (ग) । अत्र श्रुत्वेति आर्षम्, उक्तेति साधु ।

सर्व्वागमानामाचारः प्रथमः परिकल्पते* ।
आचारप्रभवो धर्म्मो धर्म्मस्य प्रभुरच्युतः ॥ २०९ ।
तस्मात्कार्य्या हरौ भक्तिः स्वधर्म्मस्याविरोधिनी ।
सदाचारविहीनानां धर्म्मार्थौ न सुखप्रदौ† ॥ २१० ।
त्वया महीश यत्पृष्टं तत्सर्व्वं गदितं मया ।
तस्माद्धर्म्मपरो भूत्वा सुखी भव दृढव्रत ॥ २११ ।
पूजयस्व प्रयत्नेन नारायणमनामयम् ।
तस्मिन् संपूज्यमाने तु सर्व्वान् कामानवाप्स्यसि ॥ २१२ ।
पूजयस्व हरं विष्णुमेकबुद्ध्या‡ महीपते ।
भेदकृद्ब्रह्महत्यानामयुतायुतदुष्कृतम् ॥ २१३ ।
शिव एव हरिः साक्षाद्धरिरेव शिवः स्वयम्§ ।
तयोरन्तरकृद्याति नरकान् कोटिकोटिशः ॥ २१४ ।
आत्मघातनपाप्मानो¶ राजंस्तव पितामहाः ।
वसन्ति नरके ते च दग्धाः कपिलकोपतः ॥ २१५ ।
तानुद्धर महाभाग गङ्गाजलनिषेवणैः‖ ।
गङ्गा सर्व्वाणि पापानि नाशयत्येव पण्डित ॥ २१६ ।

---

* प्रथमः परिकल्पित इति (ङ) ।

† धर्म्मा अप्यासुखप्रदा इति (ग) ।

‡ एकमत्या इति (क), (घ), (ङ) ।

§ हरिः साक्षाच्छिवः स्वयमिति (घ) ।

¶ आत्मघातकपाप्मान इति (ग), (घ), (ङ) ।

‖ निषेचनैः इति (घ) ।

केशमस्थि नखं दन्तं* भस्म वापि जनेश्वर।
गङ्गायाः स्पर्शमात्रेण† तान्नयत्यच्युतं पदम्॥ २१७।
यस्यास्थि भस्म वा राजन् गङ्गायां क्षिप्यते नरैः‡।
महापातकयुक्तोऽपि§ स याति परमं पदम्॥ २१८।
गुह्यं शृणुष्व राजेन्द्र गङ्गा पापप्रणाशिनी।
यद्बिन्दुसेचनादेव प्रयान्ति परमं पदम्¶॥ २१९।
यानि कानि च पापानि प्रोक्तानि तव पण्डित।
तानि पापानि नश्यन्ति गङ्गाबिन्द्वभिषेकतः‖॥ २२०।

नारद उवाच।

इत्युक्त्वा पृथिवीपालं धर्म्मराजो मुनीश्वराः।
अन्तर्द्दधे स राजाऽपि तपस्तप्तुं मनोदधे॥ २२१।
निक्षिप्य पृथिवीं सर्व्वां सचिवेषु महीपतिः।
तपस्तप्तुं मुनिश्रेष्ठास्तुहिनाद्रिं जगाम सः॥ २२२।

इति श्रीबृहन्नारदीये पुराणे कालसवादो नाम
चतुर्द्दशोऽध्यायः।



---

* केशास्थिनखरं दन्तमिति (क)।

† स्पर्शमात्रेण गङ्गायास्तु नयत्यच्युतं पदमिति (क), (घ), (ङ)।

‡ जनै इति (क)।

§ महापातकसुक्तो वा इति (ग), महापातकयुक्तो वा इति (च), महापातक-युक्तोऽपीति (ङ)।

¶ एष श्लोकः (घ) पुस्तके नास्ति।

‖ गङ्गाबिन्द्वभिषेचनादिति (ङ)।

# पञ्चदशोऽध्यायः ।

ऋषय ऊचुः ।

हिमवद्गिरिमासाद्य किं चकार महीपतिः ।
कथं* वा हृतवान् गङ्गां सूत तद्वक्तुमर्हसि ॥ १ ।

सूत उवाच ।

भगीरथो महाराजा† जटाचीरधरो वने ।
गच्छन् हिमाद्रिं तपसे ययौ गोदावरीतटम्‡ ॥ २ ।
तत्रापश्यन्महारण्यं भृगोराश्रममुत्तमम् ।
कृष्णसारसमाकीर्णं मातङ्गचयसेवितम् ॥ ३ ।
भ्रमद्भ्रमरसंयुक्तं कूजद्विहगसङ्कुलम् ।
व्रजद्वराहनिकरं चमरीबालवीजितम् ॥ ४ ।
नृत्यन्मयूरनिकरं शारङ्गगणयोजितम्§ ।
प्रवर्द्धितमहावृक्षं मुनिकन्याभिरादरात् ॥ ५ ।
शालतालतमालाढ्यं वृहद्धिन्तालमण्डितम्¶ ।
प्लक्षयज्ञाङ्गकुद्दालशमीरुचकशोभितम् ॥ ६ ।

---

* कथञ्चाहृतवान् गङ्गामिति (क), (घ), (ङ) ।

† महाभाग इति (घ), (ङ) ।

‡ गोदावरीतटे इति (क), (घ), (ङ) ।

§ सारङ्गगणसेवितमिति (घ) ।

¶ चूतहिन्तालमण्डितमिति (क), (घ) ; तयोस्तत: परं चरणद्वयमधिकं वर्त्तते यथा—शिरीषार्ज्जुनपुन्नागनागचम्पकसेवितम् ।

मालतीयूथिकाकुन्दचम्पकाश्वत्थभूषितम्* ।
उत्फुल्लकुसुमोपेतं ऋषिसङ्घनिषेवितम् ।
वेदशास्त्रसमुद्घोषं भृगोः प्राविशदाश्रमम्† ॥ ७ ।
गृणन्तं परमं ब्रह्म वृतं शिष्यवरैर्मुनिम् ।
तेजसा सूर्य्यसङ्काशं भृगुन्तत्र ददर्श सः ॥ ८ ।
ननाम विधिवद्भूपस्तस्मै मुनिवराय सः ।
आतिथ्यं भृगुरप्यस्मै चक्रे सम्मानपूर्व्वकम् ॥ ९ ।
कृतातिथ्यक्रियो राजा भृगुणा परमर्षिणा ।
उवाच प्राञ्जलिर्भूत्वा विनयान्मुनिपुङ्गवम् ॥ १० ।

राजोवाच ।

भगवन्सर्व्वधर्म्मज्ञ सर्व्वशास्त्रविशारद ।
भगवांस्तुष्यति येन संसारार्णवतारकः ॥ ११ ।
पूज्यते कर्म्मणा येन‡ भगवान् भूतभावनः ।
अनुग्राह्योऽस्मि ते ब्रह्मन् सर्व्वमाख्यातुमर्हसि ॥ १२ ।

भृगुरुवाच ।

राजंस्तवेप्सितं ज्ञातं त्वं हि पुण्यवतां वर ।
अन्यथा स्वकुलं सर्व्वं कथमुद्धर्त्तुमर्हसि ॥ १३ ।
यो वा को वापि भूपाल गङ्गासेकादिभिः स्वकान् ।

---

* यातिसिद्धार्थकाफुल्लचम्पकाश्वत्थभूषितमिति (क) ; (व), (ङ) पुस्तकयोः कुन्द-स्थाने फुल्लेति पाठो वर्त्तते ।

† आश्रम प्राविशद्भृगोरिति (क), (घ), (ङ) ।

‡ कर्म्मणा पूज्यते येनेति (क), (ङ) । कर्म्मणा तुष्यते येनेति (घ) ।

उद्धर्त्तुंकामस्तं विद्यान्नररूपधरं हरिम् ॥ १४ ।
कर्म्मणा येन देवेशो नृणामिष्टफलप्रदः ।
तत्प्रवच्यामि राजेन्द्र शृणुष्व सुसमाहितः ॥ १५ ।
भव सत्यपरो राजन्नहिंसानिरतस्तथा ।
सर्व्वभूतहितो नित्यं न वदेश्चानृतं क्वचित् ॥ १६ ।
त्यज दुर्ज्जनसंसर्गं भज साधुसमागमम् ।
कुरु पुण्यमहोरात्रं स्मर विष्णुं सनातनम् ॥ १७ ।
कुरु पूजां महाविष्णोर्याहि शान्तिमनुत्तमाम् ।
अष्टाचरं महामन्त्रं जप्ता श्रेयो गमिष्यसि ॥ १८ ।

राजोवाच ।

सत्यन्तु कीदृशं प्रोक्तमहिंसा वाऽपि कीदृशी ।
सर्व्वभूतहितत्वञ्च प्रोक्तं कीदृग्विधं मुने ॥ १९ ।
अनृतं कीदृशं प्रोक्तं दुर्ज्जनाश्चैव कीदृशाः ।
साधवः कीदृशाः प्रोक्तास्तथा पुण्यञ्च कीदृशम् ॥ २० ।
स्मर्त्तव्यश्च कथं विष्णुस्तस्य पूजा च कीदृशी ।
शान्तिर्नाम च का प्रोक्ता किमष्टाचरसंज्ञकम् ॥ २१ ।
सर्व्वशास्त्रार्थतत्त्वज्ञ मुने* तत्त्वार्थकोविद ।
एतन्मे पुत्रवात्सल्यात्सर्व्वमाख्यातुमर्हसि ॥ २२ ।

भृगुरुवाच ।

साधु साधु महाप्राज्ञ तव बुद्धिरनुत्तमा ।
यत्पृष्टोऽहं त्वया राजन्तत्सर्व्वं प्रवदामि ते ॥ २३ ।

---

* वेद तत्त्वार्थकोविद इति (ङ) ।

यथार्थकथनं राजन्सत्यमित्यभिधीयते* ।
धर्म्माविरोधतो वाच्यन्तद्धि धर्म्मपरायणैः ॥ २४ ।
देशकालादिविज्ञानात्स्वधर्म्मस्याविरोधतः ।
यद्वचः प्रोच्यते सद्भिस्तत्सत्यमभिधीयते ॥ २५ ।
सर्व्वेषामेव जन्तूनामक्लेशजननं हि यत् ।
राजन्नहिंसा विज्ञेया सर्व्वकामार्थदायिनी ॥ २६ ।
धर्म्मकार्य्यसहायत्वमकार्य्यपरिपन्थिता ।
सर्व्वलोकहितत्वं वै प्रोच्यते धर्म्मकोविदैः ॥ २७ ।
इच्छानुवृत्तिकथनं धर्म्माधर्म्माविवेकतः ।
अनृतं तद्धि विज्ञेयं सर्व्वश्रेयोविरोधितम्† ॥ २८ ।
ये लोकविद्विषो मूर्खाः कुमार्गरतबुद्धयः ।
ते राजन्दुर्ज्जनाः प्रोक्ताः सर्व्वकर्म्मबहिष्कृताः‡ ॥ २९ ।
धर्म्माधर्म्मविवेकेन वेदमार्गानुसारिणः ।
सर्व्वलोकहिते सक्ताः§ साधवः परिकीर्त्तिताः ॥ ३० ।
हरिप्रीतिकरं यच्च सद्भिश्च परिरञ्जितम्¶ ।
आत्मनः प्रीतिजननं‖ तत्पुण्यं परिकीर्त्तितम् ॥ ३१ ।

---

* सत्यमाहुर्विपश्चित इति (क), (घ)। सत्य प्राहुर्विपश्चित इति (ङ)।

† सर्व्वश्रेयोविरोधकृदिति (क), विरोधि तदिति (ङ)।

‡ सर्व्वधर्म्मबहिष्कृता इति (घ)।

§ शक्ता इति केचित्पठन्ति।

¶ परिकीर्त्तितमिति (घ)।

‖ प्रीतिजननमिति (घ)।

सर्व्वं जगदिदं विष्णुर्विष्णुः सर्व्वस्य कारणम् ।
अहञ्च विष्णुरिति यत्तद्विष्णोः स्मरणं विदुः ॥ ३२ ।
सर्व्वदेवमयो विष्णुर्विधिनैतस्य पूजनम् ।
इति या मनसः प्रीतिः सा भक्तिः परिकीर्त्तिता ॥ ३३ ।
सर्व्वभूतमयो विष्णुः परिपूर्णः सनातनः ।
इत्यभेदपरा भक्तिः सा पूजा परिकीर्त्तिता ॥ ३४ ।
स मता शत्रुमित्रेषु वशित्वञ्च तथा नृप ।
यदृच्छालाभसन्तुष्टिः शान्तिर्नाम्ना प्रकीर्त्तिता ॥ ३५ ।
एते सर्व्वे समाख्यातास्तपःसिद्धिप्रदायकाः ।
समस्तपापराशीनान्तरसा नाशहेतवः* ॥ ३६ ।
अष्टाक्षरमहामन्त्रं सर्व्वपापप्रणाशनम् ।
वक्ष्यामि तव राजेन्द्र पुरुषार्थैकसाधनम्† ॥ ३७ ।
विष्णुप्रियकरं मन्त्रं सर्व्वसिद्धिप्रदायकम्‡ ।
नमो नारायणायेति जपेत्प्रणवपूर्व्वकम् ॥ ३८ ।
शङ्खचक्रधरं शान्तं नारायणमनामयम् ।
लक्ष्मीसंश्रितवामाङ्कं तथाऽभयकरं प्रभुम् ॥ ३९ ।
किरीटकुण्डलधरं नानामण्डनभूषितम्§ ।
भ्राजत्कौस्तुभमालाढ्यं श्रीवत्साङ्कितवक्षसम् ॥ ४० ।

---

* तपसा नाशहेतव इति (ङ) ।

† (घ) पुस्तकेऽतः परं चत्वारः श्लोकपादा न सन्ति ।

‡ सर्व्वपापप्रणाशनमिति (क), (ङ) ।

§ नानामण्डनशोभितमिति (क), (घ), (ङ) ।

पीताम्बरधरं देवं सुरासुरनमस्कृतम् ।
ध्यायेदनादिनिधनं सर्व्वकामफलप्रदम् ॥ ४१ ।
एवंभूतं महाविष्णुं पश्येदात्मानमात्मनि ।
स याति सर्व्वश्रेयांसि विश्रामं कुरु भूपते ॥ ४२ ।
वाच्यो नारायणः प्रोक्तो मन्त्रस्तद्वाचकः स्मृतः ।
वाच्यवाचकसम्बन्धो नित्य एव महात्मनः ॥ ४३ ।
यथाऽनादिप्रवृत्तोऽयं* घोरः संसारसागरः ।
तथाऽनादिर्महाविष्णुः संसारान्मोचकः स्मृतः ॥ ४४ ।
स एव धाता जगतां सर्व्वकामफलप्रदः ।
अन्तर्यामी ज्ञानरूपी† परिपूर्णः सनातनः ॥ ४५ ।
इत्येतत्सर्व्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
स्वस्ति तेऽस्तु तपःसिद्धिं लभ गच्छ यथासुखम् ॥ ४६ ।

श्रीसूत उवाच ।

एवमुक्तो महीपालो भृगुणा परमर्षिणा ।
परमां प्रीतिमापन्नः प्रपेदे तपसे वनम् ॥ ४७ ।
हिमवद्गिरिमासाद्य गङ्गातीरे मनोरमे ।
नादेश्वरे महाक्षेत्रे तपस्तेपेऽतिदुश्चरम् ॥ ४८ ।
राजा त्रिषवणस्नायी कन्दमूलफलाशनः ।
कृतातिथ्यर्हणश्चाऽपि नित्यं होमपरायणः ॥ ४९ ।

---

* यथा नानाप्रवर्त्तोऽयमिति (क), यथाऽनादिप्रबन्धोऽयमिति (ङ) ।

† कालरूपीति (क), (ख) । कामरूपीति (ङ) ।

सर्व्वभूतहितः शान्तो नारायणपरायणः* ।
पत्रैः पुष्पैः फलैस्तोयैस्त्रिकालं हरिपूजकः ॥ ५० ॥
एवं बहुविधं कालं नीत्वा ह्यत्यन्तधैर्य्यवान्† ।
ध्यायन्नारायणं देवं शीर्णपर्णाशनोऽभवत् ॥ ५१ ॥
प्राणायामपरो भूत्वा राजा परमधार्म्मिकः ।
निरुच्छासपरो भूत्वा तपस्तप्तुं प्रचक्रमे ॥ ५२ ॥
ध्यायन्नारायणन्देवमनन्तं परमव्ययम् ।
षष्टिं वर्षसहस्राणि निरुच्छासपरोऽभवत् ॥ ५३ ॥
तस्य नासापुटाद्राज्ञो धूमो जज्ञे भयङ्करः ।
तं दृष्ट्वा देवतानाञ्च त्रासो जज्ञे महामुने ॥ ५४ ॥
अधिकारच्चयभयाद्देवाः‡ सन्त्रासपीड़िताः ।
अभिजग्मुर्महाविष्णुर्यत्रास्ते जगतां पतिः§ ॥ ५५ ॥
चीरोदस्योत्तरं तीरं संप्राप्य त्रिदिवेश्वराः ।
अस्तुवन्देवदेवेशं¶ पशुपाशविमोचकम् ॥ ५६ ॥

देवा ऊचुः ।

नताः स्म विष्णुं जगदेकनाथं
स्मरत्समस्तार्त्तिहरं परेशम् ।

---

* एतदर्द्धं (क) (ङ) पुस्तकयोर्नास्ति ।

† सोऽन्तश्च धैर्य्यवानिति (घ) ।

‡ स्वाधिकारच्चयभयादिति (घ), (ङ) ।

§ जगता गतिरिति (ङ) ।

¶ प्राप्नुवन्देवदेवेशमिति (क), (घ), (ङ) ।

स्वभावशुद्धं परिपूर्णभावं
वदन्ति* तं ज्ञानगतञ्च तज्ज्ञाः ॥ ५७ ।
ध्येयः सदा धर्म्मिजनैः परात्मा
स्वेच्छाशरीरैः कृतदेवकार्य्यैः ।
जगत्स्वरूपो जगदेकनाथ
स्तस्मै नमस्ते पुरुषोत्तमाय ॥ ५८ ।
यन्नामसङ्कीर्त्तनतो मुरारेः†
समस्तपापाः प्रशमं प्रयान्ति ।
तमीशमाद्यं पुरुषं पुराणं
नताः स्म विष्णुं पुरुषार्थसिद्धैर‡ ॥ ५९ ।
यत्तेजसा भान्ति दिवाकराद्या
नातिक्रमन्त्यब्धिनदीनदाद्याः ।
कालात्मकं तं त्रिदशादिदेवं
नताः स्म रूपं पुरुषार्थरूपम् ॥ ६० ।
जगत्करोत्यब्जभवस्त्वजस्रम्§
पुनन्ति लोकान् श्रुतयश्च विप्राः¶ ।

* विदन्ति तमिति (क) ।

† असुरारेरिति (ग) ।

‡ पुरुषार्थसिद्धाविति (घ) ।

§ अब्जभवोऽस्त्वजस्रमिति (घ) ।

¶ श्रुतयश्च देवा इति (क) ।

तमादिदेवं गुणसन्निधानं
यदाज्ञया तं प्रणताः स्म विष्णुम् ॥ ६१ ।
वरं वरेण्यं मधुकैटभारिं
सुरासुराद्यर्च्चितपादपद्मम् ।
सद्भक्तसङ्कल्पितसिद्धिहेतुं
ज्ञानैकवेद्यं प्रणताः स्म विष्णुम्* ॥ ६२ ।
नारायणन्देवमनन्तमीशं†
पीताम्बरं पद्मभवादिसेव्यम् ।
यज्ञप्रियं यज्ञभुजं‡ विशुद्धं
नताः स्म सर्व्वोत्तममिष्टदत्तम् ॥ ६३ ।
सच्चित्सदानन्दकृतस्वरूप-
मभेद्यमज्ञानतिरोहितानाम् ।
अनादिमध्यान्तमजं परेशं
रूपादिहीनं प्रणताः स्म देवम्§ ॥ ६४ ।

---

* प्रणताः स्म देवमिति (क) ।

† नारायणं विष्णुमनन्तमीशमिति (क), (घ), (ङ) ।

‡ यज्ञकरमिति (क), (घ), (ङ) ।

§ एष श्लोकः (क) (घ) पुस्तकयोरेवं पठितः—

अनादिमध्यान्तमजं परेश-
मभेद्यमज्ञानतिरोहितानाम् ।
सच्चित्सदानन्दकृतस्वरूपं
रूपादिहीनं प्रणताः स्म देवम् ॥ इति ।

(ङ) पुस्तके एष श्लोको नास्ति ।

इति स्तुतो महाविष्णुर्द्देवैरिन्द्रादिभिस्तदा* ।
चरितं तस्य राजर्षेर्द्देवानां संन्यवेदयत् ॥ ६५ ।
हरिः सुरान्समाश्वास्य तेषां दत्त्वाऽभयं द्विजाः ।
तपश्चरति राजर्षिर्यत्र तं देशमाययौ ॥ ६६ ।
शङ्खचक्रधरो देवः सच्चिदानन्दविग्रहः ।
प्रत्यक्षतामगात्तस्य राज्ञः सर्व्वजगद्गुरुः ॥ ६७ ।
ददर्शाराद्धरिं राजा भाभासितदिगन्तरम्† ।
अतसीपुष्पसङ्काशं स्फुरत्कुण्डलमण्डितम् ॥ ६८ ।
विकसत्पद्मपत्राक्षं विभ्राजन्मुकुटोज्ज्वलम् ।
श्रीवत्सकौस्तुभधरं पीताम्बरधरं प्रभुम्‡ ॥ ६९ ।
दीर्घबाहुमुदाराङ्गं§ सुरार्च्चितपदाम्बुजम् ।
पश्यन्ननाम भूपालो दण्डवत् क्षितिमण्डले ॥ ७० ।
अनन्तहर्षसम्पूर्णः¶ सरोमाञ्चः सगद्गदः ।
कृष्ण कृष्णेति कृष्णेति कृष्णेत्याह पुनः पुनः ॥ ७१ ।
तस्य विष्णुः प्रसन्नात्मा ह्यन्तर्यामी जनार्द्दनः ।
उवाच कृपयाविष्टो‖ भगवान् भूतभावनः ॥ ७२ ।

---

* तथा इति (ङ) ।

† ददर्शाराद्धरिं साक्षात्प्रभाभासितदिङ्मुखमिति (क) ।

‡ पीताम्बरधरं विभुमिति (क), (घ), (ङ) ।

§ उत्तमाङ्गमिति (क) ।

¶ अत्यन्तहर्षसम्पूर्ण इति (घ) ।

‖ उवाच कृपया विष्णुरिति (क), (ङ) ।

श्रीभगवानुवाच ।

भगीरथ महाभाग तवाभीष्टं भविष्यति ।
आगमिष्यन्ति मल्लोकं तव पूर्व्वपितामहाः ॥ ७३ ।
मम मूर्त्यन्तरं शम्भुं यज स्तोत्रैः स्वशक्तितः ।
स ते समस्तश्रेयांसि विधास्यति न संशयः* ॥ ७४ ।
अहमप्यद्रिजानाथं यजामि प्रत्यहं नृप ।
तस्मादाराधयेशानं स्तोत्रैः स्तुत्यं सुखप्रदम्† ॥ ७५ ।
अनादिनिधनो देवः सर्व्वकामफलप्रदः ।
त्वया संपूजितो राजंस्तव श्रेयो विधास्यति ॥ ७६ ।
इत्युक्त्वा देवदेवेशो जगतां पतिरच्युतः‡ ।
अन्तर्दधे स विश्वात्मा उत्तस्थौ सोऽपि भूपतिः ॥ ७७ ।
किमिदं स्वप्न आहोस्वित्सत्यञ्चेति द्विजोत्तमाः ।
चिन्ताकुलोऽभूद्राजेन्द्रः किं करोमीति विस्मितः ॥ ७८
अथान्तरीक्षे वागुच्चैः प्राह सम्भ्रान्तचेतसम्§ ।
सत्यमेतद्वेदितव्यं¶ न चिन्तां कर्त्तुमर्हसि ॥ ७९ ।
तदोन्मनाः क्षितिपतिरीशानं लोककारणम् ।

---

* तेन स्तोत्रेण श्रेयांसि विधास्यामि न संशय इति (क) ।

† स्तोत्रेण तु सुखप्रदमिति (क) ।

‡ जगतः पतिरिति (घ), जयता पतिरच्युत इति (ङ) ।

§ (क) पुस्तके सम्भ्रान्तचेतनेति वाक्यविशेषणम् ।

¶ सत्यमेतदिति व्यक्तमिति (क), (ङ), सत्यमेतदिति प्रोक्तमिति (घ) ।

समस्तदेवतारूपमस्तौषीद्भक्तितत्परः* ॥ ८० ।
प्रणमामि जगन्नाथं प्रणतार्त्तिप्रणाशनम् ।
प्रमाणागोचरं† देवमीशानं प्रणवात्मकम् ॥ ८१ ।
जगद्रूपमयोनित्यं‡ सर्गस्थित्यन्तकारणम् ।
ऊर्द्धरेतं विरूपाक्षं§ विश्वरूपं नतोऽस्मि तम् ॥ ८२ ।
आदिमध्यान्तरहितमनन्तमजमव्ययम् ।
यमामनन्ति योगीन्द्रास्तं वन्दे तुष्टिवर्द्धनम्¶ ॥ ८३ ।
नमो लोकाधिनाथाय रञ्जते परिरञ्जते‖ ।
नमोऽस्तु नीलकण्ठाय पशूनां पतये** नमः ॥ ८४ ।
नमश्चैतन्यरूपाय पुष्टानां पतये नमः ।
नमः कल्मषनाशाय नमो मीढुष्टमाय ते†† ॥ ८५ ।
नमो रुद्राय देवाय‡‡ कपर्द्दाय§§ प्रचेतसे ।

* समस्तदेवतादीनामस्तौषीदिति (क)। (क), (ङ) पुस्तकयोरत. परं राजोवाचेति पाठो वर्त्तते ।

† प्रणामगोचरमिति (ग) ।

‡ जगद्रूपमयं नित्यमिति (क)।

§ ऊर्द्धरेतमिति आर्षं, ऊर्द्धरेतसमिति साधु ।

¶ पुष्टिवर्द्धनमिति (क), (ङ) ।

‖ रञ्जते, परिरञ्जते इति आर्षप्रयोगौ ; रज्यते, परिरज्यते इति तयोर्यथायथं साधुरूपे ।

** प्रजाना पतये नम इति (ङ) ।

†† नमस्ते विश्वसाक्षिणे इति (क) ।

‡‡ देवेश इति (ङ) ।

§§ कन्दर्पाय इति (क), (घ) ।

नमः पिनाकहस्ताय शूलहस्ताय ते नमः ॥ ८६ ।
नमस्ते सर्व्वभूताय घण्टाहस्ताय ते नमः* ।
नमः पञ्चास्यहस्ताय क्षेत्राणां पतये नमः ॥ ८७ ।
नमः कपालहस्ताय पाशमुद्गरपाणिने ।
नमः समस्तपापानां मुष्णतां पतये नमः ॥ ८८ ।
नमो गणाधिदेवाय क्षेत्रिणां† पतये नमः ।
नमो हिरण्यगर्भाय हिरण्यपतये नमः ॥ ८९ ।
हिरण्यरेतसे तुभ्यं विश्वरूपाय वै नमः ।
नमो ध्यानस्वरूपाय नमस्ते ध्यानसाक्षिणे ।
नमस्ते ध्यानसंस्थाय अहिर्ब्रध्नाय ते नमः ॥ ९० ।
येनेदं विश्वमखिलं चराचरविराजितम् ।
प्रधानं पुरुषश्चैव अब्भ्राद्दृष्टिरिवाऽजनि‡ ॥ ९१ ।
स्वप्रकाशं महात्मानं परं ज्योतिः सनातनम् ।
यमामनन्ति तं वन्दे§ सवितारं नृचक्षुषः¶ ॥ ९२ ।
उमाकान्त विरूपाक्ष नीलकण्ठ सदाशिव ।
मृत्युञ्जय महाभाग यद्भद्रं तत्त्वमावह ॥ ९३ ।
कपर्द्दिने नमस्तुभ्यं नीलग्रीवाय ते नमः ।

---

* इत्यर्द्धं (क) पुस्तके नास्ति ।

† यक्षाणां पतये नम इति (ङ) ।

‡ प्रभो दृष्टिविराजनीति (ङ) ।

§ यमामनन्ति तत्त्वज्ञा इति (क), (ङ) ।

¶ सचक्षुष इति (ग) ।

कृशानुरेतसे तुभ्यं शिवो नः सुमना भव ॥ ९४।

यतः समुद्राः सरितोऽद्रयश्च
गन्धर्व्वयक्षाः सुरसिद्धसङ्घाः।
यतश्च चेष्टां कुरुते हि जन्तुः
स नोऽस्तु देवश्च शुभप्रदश्च ॥ ९५।
ध्यायन्ति यं योगिजना विशुद्धं
सर्व्वान्तरात्मालयरूपगेयम्।
स्वतन्त्रमेकं* गुणवन्निधानं
नमामि भूयः प्रणमामि भूयः† ॥ ९६।

तदिदं‡ शङ्करस्तोत्रं सागरेण प्रभाषितम्।
सर्व्वान् कामानवाप्नोति त्रिसन्ध्यं§ यः पठेन्नरः ॥ ९७।
इति स्तुतो महादेवः शङ्करो लोकशङ्करः।
आविर्बभूव भूपस्य सन्तप्ततपसस्तदा ॥ ९८।
पञ्चवक्त्रं दशभुजं चन्द्रार्द्धकृतशेखरम्।
त्रिलोचनमुदाराङ्गं नागयज्ञोपवीतिनम्।
विशालवक्षसं देवमष्टबाहुं महौजसम् ॥ ९९।

---

* सुमन्त्रमेकमिति (घ); (क), (ङ) पुस्तकयोः श्लोकस्यास्य प्रथमचरणमेव पठ्यते—"यतोऽपि देवः स्मृतिसंविभक्तः"—तत्राऽपि (क) पुस्तके स्मृतिसन्निषक्तमिति पाठः। सुमन्त्रलोकमित्यपि क्वचित् पाठः।

† नमामीति पाठोऽप्यस्ति, (ङ) पुस्तके तु नास्ति।

‡ यइद शङ्करस्तोत्रमिति (क), (घ), (ङ)।

§ त्रिसन्ध्यासु पठेन्नर इति (क), (ङ)।

गजचर्म्माम्बरधरं* सुरार्च्चितपदाम्बुजम् ।
दृष्ट्वा सगद्गदो राजा दण्डवत्क्षितिमण्डले ।
ननामोच्चैर्महादेवं महादेवेति कीर्त्तयन् ॥ १०० ॥
विज्ञाय भक्तिं भूपस्य शङ्करः शशिशेखरः ।
राजानं प्राह तुष्टोऽस्मि वरयेति वरं मुदा ॥ १०१ ॥
पूजितोऽस्मि त्वया सम्यक् स्तोत्रेण तपसाऽनघ ।
भुक्त्वा च भोगानतुलान्† तथा‡ मोक्षमवाप्स्यसि ॥ १०२ ॥
इत्युक्तो देवदेवेन राजा सन्तुष्टमानसः ।
उवाच प्राञ्जलिर्भूत्वा जगतामीश्वरेश्वरम् ॥ १०३ ॥

राजोवाच ।

अनुग्राह्योऽस्मि यदि ते वरदेन महेश्वर ।
त्रिमार्गगाप्रसादेन उद्धरास्मत्पितामहान् ॥ १०४ ॥

देवदेव उवाच ।

तव§ दत्ता मया गङ्गा तेषाञ्चैव परा गतिः ।
तव मोक्षपदं दत्तमित्युक्त्वाऽन्तर्दधौ शिवः ॥ १०५ ॥
कपर्द्दिमुकुटाग्रस्था गङ्गा लोकैकपावनी ।
पावयन्ती जगत्सर्व्वमन्वगच्छद्भगीरथम् ॥ १०६ ॥
ततःप्रभृति सा देवी निर्म्मला मलहारिणी ।

---

* व्याघ्रचर्माम्बरधरमिति (क) ।

† भुक्त्वेह भोगानखिलानिति (क), (ङ) ।

‡ तत इति (क), (ङ) ।

§ राजन्दत्ता मयेति (ख), एषा दत्तेति (ग), (घ) ।

भागीरथीति विख्याता सर्व्वलोकेषु पण्डित ॥ १०७ ।
सगरस्यात्मजाः पूर्व्वं यत्र दग्धा मुनीश्वराः ।
तं देशं प्लावयामास गङ्गा सर्व्वसरिद्वरा ॥ १०८ ।
यदा संप्लावितं भस्म सागराणान्तु गङ्गया ।
तदैव नरके मग्नाः सागरास्ते गतैनसः ॥ १०९ ।
पुरा सन्तुद्यमानेन* यमेन परिशिक्षिताः ।
त एव पूजितास्तेन गङ्गोदकपरिप्लुताः ॥ ११० ।
गतपापान् परिज्ञाय यमः सगरसम्भवान् ।
प्रणम्याभ्यर्च्च्य विधिवदित्याह विनयाऽन्वितः ॥ १११ ।

यम उवाच ।

भो भो राजसुता यूयं नरकान् भृशदारुणान् ।
एतावन्तं तु समयं भुक्तवन्तः स्वकर्म्मभिः ॥ ११२ ।
धन्यस्तदन्वये जातो भगीरथ इति श्रुतः ।
ततोऽस्मात्तारिता यूयं नरकाद्भृशदारुणात् ॥ ११३ ।
आरुह्याशु विमानानि सर्व्वकामाऽन्वितानि च ।
गच्छध्वं† विष्णुभवनं सर्व्वलोकोत्तमोत्तमम् ॥ ११४ ।
इत्युक्तास्ते महात्मानो यमेन गतकल्मषाः ।
शतकोटिकुलैर्युक्ता विष्णुलोकं प्रपेदिरे ॥ ११५ ।
एवंप्रभावा सा गङ्गा हरिपादाग्रसम्भवा ।
सर्व्वलोकेषु विख्याता महापातकनाशिनी ॥ ११६ ।

---

* सताद्यमानेनेति (क) ।

† गच्छध्वमिति आर्षं, गच्छत इति साधु ।

इदं* सुपुण्यमायुष्यं महापातकनाशनम् ।
यः पठेच्छृणुयाद्वाऽपि गङ्गास्नानफलं लभेत्† ॥ ११७ ।
यश्चैतत्पुण्यमाख्यातं प्रपठेद्देवतालये ।
स याति विष्णुसालोक्यं‡ यावदिन्द्राश्चतुर्द्दश ॥ ११८ ।

इति बृहन्नारदीयपुराणे भगीरथसंवादे पञ्चदशोऽध्यायः ।

——:——

# अथ षोड़शोऽध्यायः ।

सूत उवाच ।

व्रतानि संप्रवक्ष्यामि शृणुध्वमृषिसत्तमाः ।
प्रसीदति हरिर्यैश्च पशुपाशविमोचकः* ॥ १ ।
अनायासेन सर्व्वेषां प्रसीदति जनार्द्दनः ।
इहामुत्र सुखञ्चापि† तपोवृद्धिश्च जायते ॥ २ ।
येन केनाऽप्युपायेन हरिपूजापरायणाः ।
प्रयान्ति परमं स्थानमिति‡ प्राहुर्मनीषिणः ॥ ३ ।

---

* तदिदं पुण्यमाख्यानमिति (ख) ।

† लभेदिति आर्षं, लभेतेति साधु ।

‡ सायुज्यमिति (ग) ।

---

* पशुपक्षिविमोचक इति (ख) ।

† इहाऽनन्तं सुखञ्चापीति (ख) ।

‡ परमं धामेति (ख) ।

मार्गशीर्षे सिते पक्षे द्वादश्यां जलशायिनम्।
उपोषितोऽर्च्चयेत्सम्यङ्नरः श्रद्धासमन्वितः* ॥ ४ ॥
स्नातः शुक्लाम्बरधरो† दन्तधावनपूर्व्वकम्।
गन्धपुष्पाक्षतैः सम्यगर्च्चयेद्वाग्यतो‡ हरिम् ॥ ५ ॥
केशवाय नमस्तुभ्यमिति विष्णुम्प्रपूजयेत्।
जुहुयादग्नौ§ यत्नेन अनेनैव तिलाहुतीः ॥ ६ ॥
रात्रौ जागरणं कुर्य्याच्छालग्रामसमीपतः।
स्नापयेत्प्रस्थपयसा नारायणमनामयम् ॥ ७ ॥
गीतैर्व्वाद्यैश्च नैवेद्यैर्भक्ष्यैर्भोज्यैश्च केशवम्।
त्रिकालं पूजयेद्देवं महालक्ष्म्या समन्वितम् ॥ ८ ॥
पुनः कल्यं समुत्थाय कृत्वा कर्म्म यथोचितम्।
पूर्व्ववत्पूजयेद्देवं वाग्यतो नियतः शुचिः ॥ ९ ॥
पायसं घृतसंयुक्तं¶ नारिकेलजलान्वितम्।
मन्त्रेणानेन विप्राय दद्याद्भक्त्या सदक्षिणम् ॥ १० ॥
केशवः केशिहा देवः सर्व्वसम्पत्प्रदायकः।
परमान्नप्रदानेन मम स्यादिष्टसाधकः‖ ॥ ११ ॥

---

* तपःश्रद्धासमन्वित इति (ख)।
† प्रातः शुक्लाम्बरधर इति (क), (ग)।
‡ गन्धपुष्पैः फलैः सम्यक् पूजयेदिति (ख)।
§ जुहुयादष्टाविति (ख)।
¶ घृतसम्मिश्रमिति (क)।
‖ इष्टदायक इति (ख)।

ब्राह्मणान् भोजयेद्भक्त्या शक्तितो बन्धुभिः सह ।
नारायणपरो भूत्वा* स्वयं भुञ्जीत वाग्यतः ॥ १२ ।
इति यः कुरुते भक्त्या केशवार्च्चनमुत्तमम् ।
स याति पौण्डरीकस्य फलमष्टगुणं द्विजाः ॥ १३ ।
पौषे मासि† सिते पक्षे द्वादश्यां समुपोषितः ।
नमो नारायणायेति पूजयेत्प्रयतो हरिम् ॥ १४ ।
पयसा पूर्व्वमानेन नारायणमनामयम् ।
संस्नाप्य जागरं कुर्य्यात्त्रिकालार्च्चनतत्परः ॥ १५ ।
धूपदीपैः सनैवेद्यैर्गन्धैः पुष्पैर्मनोहरैः ।
नृत्यैर्गीतैः प्रवाद्यैश्च‡ स्तोत्रैश्चापि यजेद्धरिम् ॥ १६ ।
कृषरान्नञ्च§ विप्राय दद्यात्सघृतदक्षिणम् ॥ १७ ।
सर्व्वात्मा सर्व्वलोकेशः सर्व्वव्यापी सनातनः¶ ।
नारायणः प्रसन्नः स्यात्कृषरान्नप्रदानतः‖ ॥ १८ ।
मन्त्रेणानेन विप्राय दत्त्वा चाप्यन्नमुत्तमम्** ।

---

* नारायणप्रीतये च स्वयमिति (क) ।

† पुष्यमासे इति (क), (ग) ।

‡ नृत्यैर्गीतैश्च वाद्यैश्चेति (क), गीतवाद्यैश्च नृत्यैश्चेति (ख), नृत्यैश्च गीतवाद्यैश्चेति (ग)।

§ कृशराद्यैश्च विप्रायेति (क), (ग) ; (ख) पुस्तकेऽस्माच्छ्लोकात्पूर्व्वमिदं श्लोकार्द्धं वर्त्तते यथा—"ततः प्रातः समुत्थाय पूर्व्ववत्पूजयेद्धरिम् ।" कृषरस्तिलतण्डुलसम्पाकः ।

¶ सर्व्वव्यापी जनार्द्दन इति (घ) ।

‖ कृशराऽनुप्रदानत इति (ग) ।

** दद्याच्चान्नमनुत्तममिति (ख) ।

द्विजांश्च भोजयेद्भक्त्या स्वयमद्यात्सबान्धवः॥ १९।
य एवं पूजयेद्भक्त्या देवं नारायणं प्रभुम्।
अग्निष्टोमाष्टकफलं सम्पूर्णं समवाप्नुयात्॥ २०।
माघस्य शुक्लद्वादश्यां पूर्व्ववत्* समुपोषितः।
ओं नमो माधवायेति† हुत्वा चाष्टौ‡ घृताहुतीः।
पूर्व्वमानेन पयसा, स्नापयेन्माधवं तथा§॥ २१।
गन्धपुष्पादिभिः सम्यगर्च्चयेत्प्रयतो नरः।
रात्रौ जागरणं कुर्य्यात्पूर्व्ववद्भक्तितो नरः¶॥ २२।
कल्यकर्म्म‖ च निर्व्वर्त्य माधवं पुनरर्च्चयेत्।
प्रस्थं तिलानां विप्राय दद्याद्वै मन्त्रपूर्व्वकम्।
सदक्षिणं सवस्त्रञ्च सर्व्वपापविमुक्तये॥ २३।
माधवः सर्व्वभूतात्मा सर्व्वकर्म्मफलप्रदः।
तिलदानेन महता सर्व्वान्कामान्प्रयच्छतु**॥ २४।
मन्त्रेणानेन विप्राय दत्त्वा भक्तिसमन्वितः।

---

* पूर्व्वतः समुपोषित इति (क)।

† नमस्ते माधवायेति (ख), नमोनारायणायेति (ग)।

‡ हुत्वा चाग्नौ च आहुतीः इति (क), हुत्वाष्टौ च घृताहुतीः इति (ख), हुत्वा अष्टौ च आहुतीः इति (घ)।

§ स्नापयेत्केशवन्तथा इति (ग)।

¶ रात्रौ जागरणं कृत्वा पूर्व्ववद्भक्तितत्पर इति (ख)।

‖ काल्यं कर्म्म च निर्व्वर्त्य इति (ख), कल्यं कर्म चेति (ग), (घ)।

** कामानयच्छतेति (क)।

ब्राह्मणान्भोजयेद्भक्त्या* संस्मरन्माधवं प्रभुम्† ॥ २५ ।
एवं यः कुरुते भक्त्या तिलदानव्रतं द्विजः ।
स सम्पूर्णमवाप्नोति वाजपेयफलं शतम्‡ ॥ २६ ।
फाल्गुनस्य सिते पक्षे द्वादश्यां समुपोषितः ।
गोविन्दाय नमस्तुभ्यमिति संपूजयेद्व्रती ॥ २७ ।
अष्टोत्तरशतं हुत्वा घृतसम्मिश्रितं तिलम् ।
पूर्व्वमानेन पयसा गोविन्दं स्नापयेच्छुचि ॥ २८ ।
रात्रौ जागरणं कार्य्यं§ त्रिकालं पूजयेद्धरिम् ॥ २९ ।
समाप्य काल्यकर्म्माणि¶ गोविन्दं पूजयेन्मुने ।
व्रीह्याढकञ्च‖ विप्राय दद्याद्दत्त्वं सदक्षिणम् ॥ ३० ।
नमो गोविन्द सर्व्वेश गोपिकाजनवल्लभ ।
अनेन धान्यदानेन प्रीतो भव जगद्गुरो ॥ ३१ ।
एवं कृत्वा व्रतं सम्यक् सर्व्वपापविवर्ज्जितः ।
गोमेधमखजं पुण्यं सम्पूर्णं प्राप्नुयान्नरः** ॥ ३२ ।
चैत्रे मासि सिते पक्षे द्वादश्यां समुपोषितः ।

---

* ब्राह्मणान् भोजयेत्पश्चादिति (ख), (ग) ।
† सम्पूज्य माधव प्रभुमिति (क) ।
‡ वाजपेयफलं द्विजा इति (ख) ।
§ कुर्य्यादिति (ख) ।
¶ समाप्य सर्व्वकर्माणीति (क), समाप्य काल्यकर्माणीति (ख) ।
‖ धान्याढकञ्च विप्रायेति (ख) ।
** गोमेधस्याश्वमेधस्य सम्पूर्णं फलमश्नुते इति (ख) ।

नमोऽस्तु विष्णवे तुभ्यमिति पूर्व्ववदर्च्चयेत् ॥ ३३ ।
क्षीरेण स्नापयेद्विष्णुं पूर्वमानेन भक्तितः ।
तथैव स्नापयेद्विप्रा घृतप्रस्थेन सादरम् ॥ ३४ ।
कृत्वा जागरणं रात्रावर्च्चयेत्पूर्ववद्व्रती* ।
ततः कल्यं यथा कर्म्म समाप्य हरिमर्च्चयेत्† ॥ ३५ ।
अष्टोत्तरशतं हुत्वा मधुमिश्रतिलाहुतीः ।
सदक्षिणञ्च विप्राय दद्यादाढ़कतण्डुलम् ॥ ३६ ।
प्राणरूपी महाविष्णुः प्राणदः प्राणवल्लभः ।
तण्डुलस्य प्रदानेन प्रीयतां मे जनार्द्दन ॥ ३७ ।
एवं कृत्वा नरो भक्त्या सर्वपापविवर्ज्जितः ।
अत्यग्निष्टोमयज्ञस्य फलमष्टगुणं लभेत्‡ ॥ ३८ ।
वैशाखशुक्लद्वादश्यामुपोष्य मधुसूदनम् ।
द्रोणक्षीरेण देवेशं स्नापयेद्भक्तिसंयुतः ॥ ३९ ।
जागरस्तत्र कर्त्तव्यस्त्रिकालार्च्चनसंयुतः§ ।
नमस्ते मधुहन्त्रेति जुहुयाद्भक्तितो घृतम् ॥ ४० ।
ततः प्रातः समभ्यर्च्च्य विधिवन्मधुसूदनम् ।¶

---

* अर्च्चयेत्प्रयतो हरिमिति (क), अर्च्चयेत्सततं व्रतीति (ख) ।

† (ख) पुस्तके ततः कल्यं समुत्थायेति पठित्वा चरणचतुष्टय परिहृत्य दद्यादाढ़क-तण्डुलमिति पठितम् ।

‡ लभेदिति आर्षं, लभेतेति साधु । एवं परत्राऽपि ।

§ जागरन्तत्र कर्त्तव्यमिति केषुचित्पाठः, तत्र जागरशब्दस्य क्लीवत्वमार्षम् ।

¶ (क) पुस्तकेऽतः परं श्लोकद्वय नास्ति ।

दद्यादध्यात्मविदुषे घृतप्रस्थं सदक्षिणम् ॥ ४१ ।
नमस्ते देवदेवेश सर्वलोकैकभावन* ।
घृतदानेन महता सर्व्वान्कामान्ददस्व मे ॥ ४२ ।
एवं दत्त्वा घृतं विप्राः† संपूज्य मधुसूदनम् ।
सर्व्वपापविनिर्म्मुक्तोऽश्वमेधाष्टफलं लभेत् ॥ ४३ ।
ज्यैष्ठे मासि सिते पक्षे द्वादश्यामुपवासकृत् ।
क्षीरेणाढ़कमानेन स्नापयेच्च त्रिविक्रमम् ॥ ४४ ।
नमस्त्रिविक्रमायेति पूजयेद्भक्तिसंयुतः ।‡
जुहुयात्पायसेनैव अष्टोत्तरशताहुतीः ॥ ४५ ।
कृत्वा जागरणं सम्यक पुनः पूजां प्रकल्पय च§ ।
अपूपविंशतिं दद्यात्¶ ब्राह्मणाय सदक्षिणम् ॥ ४६ ।
देवदेव जगन्नाथ प्रसीद परमेश्वर ।
उपायनञ्च संगृह्य भवाऽभीष्टफलप्रदः‖ ॥ ४७ ।
भोजयेद्ब्राह्मणान् भक्त्या स्वयं भुञ्जीत वाग्यतः ।
सर्वपापविनिर्म्मुक्तो नरमेधफलं लभेत्** ॥ ४८ ।

---

* सर्व्वलोकैकपावन इति (ग) ।

† एवं दत्त्वा घृतं भक्त्या इति (ख) ।

‡ (ग) पुस्तकेऽतः परं श्लोकद्वयं नास्ति ।

§ पुनः पूजा प्रकल्पयेत इति (क) ।

¶ पूपाना विंशतिर्देयेति (ख), अपूपविंशतिं दत्त्वेति (क), (घ) ।

‖ ममाऽभीष्टप्रदोभवेति (ख), (ग) ।

** नरमेधफलाष्टकमिति (ख), नरमेधाष्टकं फलमिति (ग) ।

आषाढ़शुक्लद्वादश्यामुपवासी जितेन्द्रियः ।
वामनं पूर्वमानेन स्नापयेत्पयसा व्रती ॥ ४९ ।
नमस्ते वामनायेति दूर्व्वाहोमञ्च शक्तितः ।
कुर्य्याज्जागरणं सम्यग्वामनं चार्च्चयेत्ततः* ॥ ५० ।
सदक्षिणञ्च दध्यन्नं नारिकेलसमन्वितम् ।
दद्याद्दात्मविदे भक्त्या वामनार्च्चनशालिने ॥ ५१ ।
वामनो बुद्धिदो दाता द्रव्यस्थो वामनः स्वयम् ।
वामनस्तारको भूयाद्वामनाय नमो नमः ॥ ५२ ।
अनेन दत्त्वा दध्यन्नं शक्तितो भोजयेद्द्विजान् ।
संप्राप्नोति द्विजश्रेष्ठाः स गोग्रासशतत्रयम्† ॥ ५३ ।
श्रावणस्य सिते पक्षे द्वादश्यामुपवासकृत् ।
क्षीरेण मधुमिश्रेण श्रीधरं शक्तितोयजेत्‡ ॥ ५४ ।
नमोऽस्तु श्रीधरायेति गन्धाद्यैः पूजयेत् क्रमात् ।
जुहुयात्पृषदाज्येन यथाशक्ति द्विजोत्तमाः ॥ ५५ ।
जागरणञ्च कर्त्तव्यं§ पुनः पूजां तथैव च ।
दातव्यं चैव विप्राय आढ़कक्षीरमुत्तमम् ॥ ५६ ।

---

* वामनञ्चार्च्चयेत्पुनरिति (ख), (ग) ।

† चान्द्रायणशतं फलमिति (क), स गोग्रासशतं फलमिति (ख), अग्निष्टोमशतं फलमिति (ग) ।

‡ श्रीधर शक्तितोऽर्च्चयेदिति (ग) ।

§ जागरञ्चैव कर्त्तव्यमिति (ख), (ग), (घ), जागरणञ्च कर्त्तव्य इति साधु ।

वस्त्रञ्च दक्षिणाञ्चैव दातव्यं हेमकुण्डले* ।
मन्त्रेणानेन विप्रेन्द्राः सर्वकामार्थसिद्धये† ॥ ५७ ।
क्षीराब्धिशायिन्देवेश पशुपाशविमोचकः ।
क्षीरदानेन सुप्रीतो भव सर्वसुखप्रदः ॥ ५८ ।
अनेन दत्त्वा विप्रांश्च भोजयेच्छक्तितो व्रती‡ ।
अश्वमेधसहस्रस्य सम्पूर्णं फलमश्नुते ॥ ५९ ।
मासि भाद्रपदे शुक्ले द्वादश्यां समुपोषितः ।
स्नापयेद्द्रोणपयसा हृषीकेशं जगद्गुरुम् ॥ ६० ।
हृषीकेश नमस्तुभ्यमिति संपूज्य यत्नतः ।
चरुणा मधुयुक्तेन जुहुयाच्छक्तितो व्रती ॥ ६१ ।
जागरादीणि निर्व्वर्त्त्य दद्यादात्मविदे ततः ।§ ।
आढ़काद्धञ्च गोधूमं दक्षिणाञ्च स्वशक्तितः ॥ ६२ ।
हृषीकेश नमस्तुभ्यं सर्व्वलोकैकहेतवे ।
मम सर्व्वसुखं देहि गोधूमस्य प्रदानतः ॥ ६३ ।
ब्राह्मणान् भोजयेच्छक्त्या¶ स्वयं भुञ्जीत वाग्यतः ।
सर्व्वपापविनिर्म्मुक्तो ब्रह्ममेधफलं लभेत् ॥ ६४ ।
मासि चाश्वयुजे शुक्ले द्वादश्यां समुपोषितः ।

---

* हेमकुण्डलमिति (घ) ।

† सर्व्वकामसमृद्धये इति (ख) ।

‡ भोजयेद्भक्तितो व्रतीति (क), (ग), शक्तितोभोजयेद्व्रतीति (ख) ।

§ (ख) पुस्तकेऽतः परं षट् पादा न सन्ति ।

¶ भोजयेद्भक्त्येति (क), (ग) भोजयेत्प्रयत्नादिति (ख) ।

पद्मनाभञ्च पयसा स्नापयेत्पूर्व्ववच्छुचिः* ॥ ६५ ।
नमस्ते पद्मनाभाय इति होमं स्वशक्तितः ।
तिलव्रीहियवैश्चैव पूजाञ्च विधिवत्ततः† ।
जागरञ्चैव निर्व्वर्त्त्य पुनः पूजां प्रकल्प्य च ।
दद्याद्विप्राय कुडवं‡ मधुमिश्रं सदक्षिणम् ॥ ६६।६७ ।
पद्मनाभ नमस्तुभ्यं सर्व्वलोकपितामह ।
मधुदानेन सुप्रीतो भव सर्व्वसुखप्रदः ॥ ६८ ।
एवं यः कुरुते भक्त्या पद्मनाभस्य पूजनम् ।
ब्रह्ममेधसहस्रस्य फलमाप्नोत्यनुत्तमम् ॥ ६९ ।
कार्त्तिके मासि द्वादश्यामुपवासी जितेन्द्रियः ।
क्षीरेणाढ़कमानेन दध्ना चाज्येन तावता ।
नमो दामोदरायेति स्नापयेद्भक्तिसंयुतः ।
अष्टोत्तरशतं हुत्वा मधुमिश्रतिलाहुतीः ॥ ७०।७१ ।
जागरं नियतः कुर्य्यात्त्रिकालार्च्चनतत्परः ।
प्रातः संपूज्य देवेशं पद्मपुष्पैर्मनोहरैः§ ॥ ७२ ।
पुनरष्टोत्तरशतं जुहुयात्सघृतैस्तिलैः ।
पक्वभक्ष्ययुतं चान्नं¶ दद्याद्विप्राय भक्तितः ॥ ७३ ।

---

* स्नापयेत्पद्मनाभञ्च पूजयेत्पूर्व्ववच्छुचिरिति (क) ।

† कर्त्तव्या विधिवत्तत इति (ख) ।

‡ क्षपर मधुमिश्रमिति (क), कुड़वं मधु विप्रा इति (ख), (ग) ।

§ गन्धपुष्पैर्मनोरमैरिति (क), पद्मपुष्पैर्मनोरमैरिति (ख), (ग) ।

¶ पद्मपत्रस्थितं चाऽन्नमिति (क) ।

दामोदर जगन्नाथ सर्व्वकारणकारण ।
त्राहि मां कृपया देव शरणागतवत्सल ॥ ७४ ।
अनेनोपायनं दद्यात्* श्रोत्रियाय तपस्विने ।
दक्षिणाञ्च यथाशक्त्या† ब्राह्मणांश्चैव भोजयेत् ॥ ७५ ।
एवं कृत्वा व्रतं सम्यगश्नीयाद्बन्धुभिः सह ।
अश्वमेधसहस्राणां द्विगुणं फलमश्नुते ॥ ७६ ।
एवं कुर्य्याद्व्रती यस्तु द्वादश्यां व्रतमुत्तमम्‡ ।
संवत्सरं मुनिश्रेष्ठाः स याति परमम्पदम् ॥ ७७ ।
एकमासे द्विमासे वा यः कुर्य्याद्भक्तितत्परः ।
तत्फलं समवाप्नोति स याति परमम्पदम् ॥ ७८ ।
एवं संवत्सरं कृत्वा कुर्य्यादुद्यापनं व्रती ।
मार्गशीर्षे सिते पक्षे पञ्चदश्यां मुनीश्वराः§ ॥ ७९ ।
स्नात्वा प्रातर्यथाचारं दन्तधावनपूर्व्वकम् ।
शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः ।
मण्डलं कारयेद्दिव्यं चतुरस्रं सुशोभनम्¶ ।
घण्टाचामरसंयुक्तं किङ्किणीवरशोभितम्‖ ।

---

* (क) पुस्तकेऽत्रानेन पायसं दद्यादिति पठित्वा चरणषट्कं परित्यज्य त्रिगुणं फलमश्नुते इति पठितम् ।

† यथाशक्त्येति आर्षं, यथाशक्तीति साधु ।

‡ द्वादशीव्रतमुत्तममिति (ख) ।

§ द्विजोत्तमा इति (ख) ।

¶ सुशोभितमिति (क) ।

‖ किङ्किणीचयशोभितमिति (ख) ।

अलङ्कृतं गन्धमाल्यैरर्च्चितं ध्वजराजितम्* ।
छादितं शुक्लपुष्पेण दीपमालाविभूषितम्† ॥ ८०।८१।८२।
तन्मध्ये सर्वतोभद्रं कुर्य्यात्सर्व्वमलङ्कृतम् ।
तस्योपरि न्यसेत्कुम्भान्द्वादशाम्बुप्रपूरितान् ॥ ८३ ।
एकेन शुक्लवस्त्रेण केशाद्यैः शोधितेन च ।
कुम्भानाच्छादयेद्विप्राः‡ पञ्चरत्नैः समन्वितान् ॥ ८४ ।
लक्ष्मीनारायणं देवं कारयेद्भक्तिमान् व्रती ।
हेम्ना वा राजतेनाऽपि तथा ताम्रेण वा द्विजाः ॥ ८५ ।
स्नापयेत्§ प्रतिमान्ताञ्च कुम्भोपरि सुसंयमी ।¶
तन्मूल्यं वा द्विजश्रेष्ठाः काञ्चनं वापि शक्तितः ॥ ८६ ।
सर्व्वव्रतेषु मतिमान्वित्तशाठ्यं परित्यजेत् ।
यदि कुर्य्यात्क्षयं यान्ति तस्यायुर्धनसम्पदः ॥ ८७ ।
अनन्तशायिनं देवं नारायणमनामयम् ।
पञ्चामृतेन प्रथमं‖ स्नापयेद्भक्तिसंयुतः ॥ ८८ ।
नामभिः केशवाद्यैश्च उपचारान्प्रकल्पयेत् ।

---

* अलङ्कृतं पुष्पमाल्यैर्वितानध्वजशोभितमिति (ख)।

† दीपमालाविराजितमिति (ख)।

‡ तान् कुम्भान् छादयेद्विप्राः पञ्चरत्नसमन्वितानिति (क), कुम्भानाच्छादयेद्विप्राः पञ्चवस्त्रसमन्वितानिति (ख)।

§ स्थापयेदिति (ख)।

¶ स्वयं यमीति (क)।

‖ पञ्चामृतेन परममिति (क), (ख)।

रात्रौ जागरणं कुर्य्यात्पुराणश्रवणादिभिः ॥ ८९ ।
जितनिद्रो भवेत्सम्यगुपवासी जितेन्द्रियः ।
त्रिकालमर्च्चयेद्देवं यथाविभवविस्तरम् ॥ ९० ।
ततः प्रातः समुत्थाय कल्यकर्म्म* समाप्य च ।
तिलहोमं व्याहृतिभिर्व्रती कुर्य्यात्सहस्रकम् ॥ ९१ ।
पुनः सम्पूजयेद्देवं गन्धपुष्पादिभिः क्रमात् ।
देवस्य पुरतः कुर्य्यात्पुराणपठनं द्विजाः† ॥ ९२ ।
दद्याद्द्वादशविप्राणां दध्यन्नं पायसं बुधाः‡ ।
अपूपैर्द्दशभिर्युक्तं सघृतञ्च सदक्षिणम् ॥ ९३ ।
देवदेव जगद्रूप भक्तानुग्रहविग्रह ।
गृहाणोपायनं कृष्ण§ सर्व्वाभीष्टप्रदो भव ॥ ९४ ।
अनेनोपायनं दद्यात्प्रार्थयेत् प्राञ्जलिस्ततः¶ ।
आधाय भूमिं जानुभ्यां विनयावनतो व्रती ॥ ९५ ।

नमो नमस्ते सुरदेवराज‖
नमोऽस्तु ते देव जगन्निवास ।
कुरुष्व सम्पूर्णफलं ममाद्य
नमोऽस्तु तुभ्यं पुरुषोत्तमाय ॥ ९६ ।

---

* काल्यं कर्म्मेति (ख) ।

† देवदेवस्य पुरतः कुर्य्यात्पाठं पुराणकमिति (क), पुराणपठनं बुध इति (ख) ।

‡ तथेति (ख) ।

§ गृहाण पायसं कृष्ण इति (ख) ।

¶ अर्च्चयेत्प्राञ्जलिस्तत इति (क) ।

‖ सुरदेव राजन्निति (क) ।

इति संप्रार्थयेद्विप्रा देवञ्च पुरुषोत्तमम्।
दद्यादर्घ्यञ्च देवाय जानुभ्यामवनीं गतः॥ ९७।
लक्ष्मीपते नमस्तुभ्यं पयोनिधिनिवासिने।
अर्घ्यं गृहाण देवेश श्रिया च सहितो विभुः* ॥ ९८।
यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु† ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्॥ ९९।
इति विज्ञाप्य देवस्य तत्सर्व्वं संयमी व्रती‡ ।
प्रतिमां वस्त्रसंयुक्तामाचार्य्याय निवेदयेत्§ ॥ १००।
ब्राह्मणान्भोजयेत्पश्चाच्छक्त्या दद्याच्च दक्षिणाम्¶ ।
भुञ्जीत वाग्यतः पश्चात्स्वयं बन्धुजनैः सह‖ ॥ १०१।
आसायं शृणुयाद्विष्णुकथां विद्वज्जनैस्तथा** ॥ १०२।
इत्येवं कुरुते यस्तु पावनं द्वादशीव्रतम्।
सर्व्वान् कामानवाप्नोति परत्राऽमुत्र चोत्तमान्॥ १०३।
त्रिःसप्तकुलसंयुक्तः सर्व्वपापविवर्ज्जितः।

---

* श्रिया त्वं सहितः प्रभो इति (ख), (ग), सहितं विभुरिति (घ)।

† तपोयज्ञक्रियासु चेति (घ)।

‡ संयमी व्रतमिति (ख), (ग)।

§ प्रतिमा भक्तिसंयुक्तामाचार्य्याय निवेदयेदिति (क), (ङ); प्रतिमां दक्षिणायुक्ता-माचार्य्यायेति (ख)।

¶ ब्राह्मणान् भोजयेद्भक्त्या शक्त्या दद्याच्च दक्षिणामिति (ङ)।

‖ बन्धुगणैः सह इति (क)।

** एतदर्द्धं (क) पुस्तके नास्ति, विद्वज्जनैः सहेति (ग), (ङ)।

प्रयाति विप्रा भवनं यत्र गत्वा न शोचति ॥ १०४ ।
य इदं शृणुयान्नित्यं द्वादशीव्रतमुत्तमम् ।
वाचयेद्वापि विप्रेन्द्रा वाजपेयफलं लभेत् ॥ १०५ ।

इति बृहन्नारदीयपुराणे सवत्सरैकादशीव्रतकथनं नाम षोडशोऽध्यायः ।



## सप्तदशोऽध्यायः ।

सूत उवाच ।

अन्यद्व्रतं प्रवक्ष्यामि शृणुध्वं सुसमाहिताः ।
सर्व्वपापहरं पुण्यं* सर्व्वदुःखनिवर्हणम् ॥ १ ।
ब्राह्मणक्षत्रियविशां शूद्राणाञ्चैव योषिताम् ।
समस्तकामफलदं सर्व्वव्रतफलप्रदम् ।
दुःस्वप्ननाशनं धर्म्यं† दुष्टग्रहनिवर्हणम्‡ ।
सर्व्वलोकेषु विख्यातं पौर्णमीव्रतमुत्तमम्§ ॥ २।३ ।
विधानं तस्य वक्ष्यामि शृणुध्वं गदतो मम ।
येन चीर्णेन पापानां कोटिः कोटिः प्रणश्यति ॥ ४ ।

---

* सर्व्वपापहरं दिव्यमिति (ग) ।

† दुःस्वप्ननाशनं धन्यमिति (घ) ।

‡ दुष्टग्रहनिवारणमिति (क) ।

§ पूर्णिमाव्रतमुत्तममिति (क) ।

मार्गशीर्षे सिते पक्षे पौर्णमास्यां यतः शुचिः* ।
स्नानं कुर्याद्यथाचारं दन्तधावनपूर्व्वकम् ॥ ५ ।
शुक्लाम्बरधरः शुद्धो गृहमागत्य वाग्यतः ।
प्रक्षाल्य पादावाचम्य स्मरन्नारायणं प्रभुम् ।
नित्यं देवार्च्चनं कृत्वा पश्चात्सङ्कल्पपूर्वकम्† ।
लक्ष्मीनारायणं देवमर्च्चयेद्भक्तिभावतः ॥ ६।७ ।
आवाहनासनाद्यैश्च गन्धपुष्पादिभिर्व्रती ।
नमो नारायणायेति पूजयेद्भक्तितत्परः ॥ ८ ।
गीतैर्वाद्यैश्च नृत्यैश्च‡ पुराणपठनादिभिः ।
स्तोत्रैराराधयेद्देवं व्रतकृद्वाग्यतः शुचिः ॥ ९ ।
देवस्य पुरतः कुर्यात्स्थण्डिलं चतुरस्रकम् ।
अरत्निमात्रं तत्राग्निं स्थापयेद्गृह्यमार्गतः§ ॥ १० ।
आज्यभागान्तपर्य्यन्तं¶ कृत्वा पुरुषसूक्ततः‖ ।
चरुणा च तिलैश्चापि घृतेन जुहुयात्तथा ॥ ११ ।

---

* पौर्णम्या नियतः शुचिरिति (ग), (घ), (ङ) ।

† पश्चाच्च भक्तितत्पर इति (ख) ; पश्चात्सङ्कल्पनाचरेदिति (घ), (ख) पुस्तकेऽतः परं चरणत्रयं नास्ति, (ङ) पुस्तके एष श्लोकः परश्लोकश्च न स्त. ।

‡ गीतैर्वाद्यैश्च नैवेद्यैरिति (क) ।

§ स्थापयेद्गृह्यमन्त्रत इति (क), गृह्यमानत इति (ङ) स्थापयेच्च स्ववेदत इति क्वचित्पाठः ।

¶ आज्यभागं ततः कुर्यादिति (क) ।

‖ कृत्वा पुरुषसूक्तिभिरिति (ङ) ।

एकवारं द्विवारं वा त्रिवारं वापि शक्तितः* ।
होमं कुर्य्यात्प्रयत्नेन सर्वपापनिवृत्तये ॥ १२ ।
प्रायश्चित्तादिकं सर्वं स्वगृह्योक्तविधानतः ।
समाप्य होमं विधिवच्छान्तिसूक्तं जपेद्बुधः ॥ १३ ।
पश्चाद्देवं समागत्य पुनः पूजां प्रकल्पयेत् ।
तत्रोपवासं देवाय अर्पयेद्भक्तिसंयुतः† ॥ १४ ।
पौर्णमास्यां निराहारः स्थित्वा देव तवाज्ञया ।
भोच्यामि पुण्डरीकाक्ष परेऽह्नि शरणं भव ॥ १५ ।
इति विज्ञाप्य देवाय अर्घ्यं दद्यात्तथेन्दवे ।
जानुभ्यामवनीं गत्वा शुक्लपुष्पाक्षतान्वितम्‡ ॥ १६ ।
क्षीरोदार्णवसम्भूत अत्रिनेत्रसमुद्भव ।
गृहाणार्घ्यं मया दत्तं रोहिण्या सहितः प्रभो§ ॥ १७ ।
एवमर्घ्यं प्रदायेन्दोः प्रार्थयेत्प्राञ्जलिस्ततः ।
तिष्ठन्पूर्वमुखो भूत्वा पश्यन्निन्दुञ्च सत्तमाः ॥ १८ ।
नमः शुभ्रांशवे तुभ्यं¶ द्विजराजाय ते नमः ।
रोहिणीपतये तुभ्यं लक्ष्मीभ्रात्रे नमो नमः‖ ॥ १९ ।

---

* वा च शक्तित इति (ख) ।

† तत्रोपवासं कृत्वा तु अर्चयेद्भक्तितत्पर इति (ख), तदीपवासं देवायेति (घ) ।

‡ शुक्लपुष्पजलान्वितमिति (ख) ।

§ रोहिण्यासहितं प्रभो इति (घ) ।

¶ नमः सुधांशवे तुभ्यमिति (ख) ।

‖ लक्ष्मीभ्रात्रे नमोऽस्तु ते इति (क) ।

ततश्च जागरं कुर्य्यात्पुराणश्रवणादिभिः ।
जितेन्द्रियो वशी शुद्धः पाषण्डालापवर्ज्जितः ॥ २० ।
ततः प्रातः प्रकुर्व्वीत* आचारञ्च यथाविधि ।
पुनः सम्पूजयेद्देवं यथाविभवविस्तरम् ॥ २१ ।
ब्राह्मणान्भोजयेत्पश्चाच्छक्तितः† प्रयतो नरः ।
बन्धुभृत्यादिभिः सार्द्धं स्वयं भुञ्जीत वाग्यतः ॥ २२ ।
एवं पुष्यादिमासेषु पौर्णमास्यामुपोषितः ।
अर्च्चयेद्भक्तिसंयुक्तो नारायणमनामयम् ॥ २३ ।
एवं संवत्सरं कृत्वा कार्त्तिक्यां पौर्णमीदिने‡ ॥
उद्यापनं प्रकुर्व्वीत तद्विधानं वदामि वः ॥ २४ ।
मण्डपं कारयेद्दिव्यं चतुरस्रं सुमण्डलम्§ ।
शोभितं पुष्पमालाभिर्वितानध्वजराजितम्¶ ॥
बहुदीपसमाकीर्णं किङ्किणीवरशोभितम्‖ ।
दर्पणैश्चामरैश्चैव कलसैश्च समावृतम् ॥ २५।२६ ।
तन्मध्ये सर्वतोभद्रं पञ्चवर्णविराजितम् ।

---

* ०ततः प्रातश्च कुर्व्वीत इति (क) ।

† भक्तितः प्रयतो नर इति (क) ।

‡ पूर्णिमादिने इति (क), (ख) । कार्त्तिक्यामिति आर्षं कार्त्तिके इति साधु दिने इत्यस्य विशेषणत्वात् ।

§ चतुरस्रं सुशोभनमिति (ग), चतुरस्रं प्रमङ्गलमिति (घ), चतुरस्रं सुमण्डलमिति (ङ) ।

¶ वितानध्वजपूजितमिति (घ) ।

‖ किङ्किणीरवशोभितमिति (ख), (ग) ।

कृत्वा जलान्वितं कुम्भं न्यसेत्तस्योपरि द्विजाः ॥ २७ ।
पिधाय कुम्भं वस्त्रेण शोधितेनातिशोभिना* ।
हैम्ना वा राजतेनापि तथा ताम्रेण वा† द्विजाः ।
लक्ष्मीनारायणं देवं कृत्वा तस्योपरि न्यसेत् ॥ २८ ।
पञ्चामृतेन संस्नाप्य गन्धपुष्पादिभिस्तथा‡ ।
भक्ष्यभोज्यादिनैवेद्यैः§ पूजयेत्संयतेन्द्रियः¶ ॥ २९ ।
जागरञ्च तथा कुर्य्यात्सम्यक्श्रद्धासमन्वितः‖ ।
ततः प्रातश्च विधिवत्पूर्व्ववद्विष्णुमर्च्चयेत् ॥ ३० ।
आचार्य्याय प्रदातव्या प्रतिमा दक्षिणान्विता ।
ब्राह्मणान् भोजयेच्छक्त्या विभवे सत्यवारितम्** ॥ ३१ ।
तिलदानं प्रकुर्व्वीत यथाशक्तिसमन्वितः†† ।
कुर्य्यादग्नौ च विधिवत्तिलहोमञ्च पूर्व्ववत् ॥ ३२ ।
एवं कृत्वा नरः सम्यग्लक्ष्मीनारायणं व्रतम् ।

---

* शोधितेनाऽपि शोभिना इति (क) ।

† ताम्रेण वै द्विजाः (घ) ।

‡ गन्धपुष्पादिभिः क्रमादिति (ख), (ग) ।

§ शुद्धभोज्यादिनैवेद्यैरिति (घ) ।

¶ संजितेन्द्रिय इति (ख) ।

‖ (क) पुस्तकेऽतः परं—

"कुर्य्यादग्नौ च विधिवत्तिलहोमञ्च पूर्व्वव"दित्यधिकाङ्गं वर्त्तते ।

** ब्राह्मणान् भोजयेद्भक्त्या यथाविभवमानत इति (क) ।

†† यथाशक्त्या समाहित इति (ख), यथाशक्त्या समन्वित इति (ग), (ङ) ।

इह भुक्त्वा* महाभोगान्पुत्रपौत्रसमन्वितः ॥ ३३ ।
सर्व्वपापविनिर्म्मुक्तः कुलायुतसमन्वितः† ।
प्रयाति विष्णुभवनं योगिनामपि दुर्लभम् ॥ ३४ ।

इति वृहन्नारदीये पुराणे पौर्णमासीव्रतकथनं नाम सप्तदशोऽध्यायः ।

——o——

# अष्टादशोऽध्यायः।

## ( ध्वजारोपणव्रतम् ।)

सूत उवाच ।
अन्यद्व्रतं प्रवक्ष्यामि ध्वजारोपणसंज्ञितम्* ।
सर्व्वपापहरं पुण्यं विष्णुप्रीणनकारणम् ॥ १ ।
ब्राह्मणक्षत्रियविशां स्त्रीशूद्राणाञ्च सत्तमाः ।
सर्व्वदुःखोपशमनं संसारच्छेदकारकम्† ॥ २ ।
यः कुर्य्याद्विष्णुभवने ध्वजारोपणमुत्तमम् ।

---

* इति भुक्त्वाऽखिलान् भोगान् पुत्रपौत्रसमावृत इति (ख) ।
† (ग) पुस्तके एतदर्द्धं नास्ति ।

---

* ध्वजारोपणमुत्तममिति (ख), ध्वजारोपणसङ्गतमिति (घ) ।
† सर्व्वदुःखप्रशमनं संसारोच्छेदकारणमिति (ख)।

स पूज्यते विरिञ्च्याद्यैः किमन्यैर्बहुभाषितैः ॥ ३ ।*
हेमभारसहस्रन्तु योऽददाति कुटुम्बिने ।
तत्फलन्तु समानं स्याद्ध्वजारोपणकर्म्मणः ॥ ४ ।†
ध्वजारोपणतुल्यं स्याद्गङ्गास्नानमनुत्तमम् ।
अथवा तुलसीसेवा शून्यलिङ्गप्रपूजनम्‡ ॥ ५ ।
अहो पूर्व्वमहो पूर्व्वमहोपूर्व्वमिदं द्विजाः ।
सर्व्वपापहरं पुण्यं ध्वजारोपणसंज्ञितम्§ ॥ ६ ।
ततः प्रातः समुत्थाय स्नात्वाचम्य यथाविधि¶ ।
यानि कर्म्माणि कार्य्याणि ध्वजारोपणकर्म्मणि ।
तानि सर्वाणि वक्ष्यामि‖ शृणुध्वं गदतो मम ॥ ७ ।
कार्त्तिकस्य सिते पक्षे द्वादश्यां प्रयतो नरः ।
स्नानं कुर्य्यात्प्रयत्नेन दन्तधावनपूर्व्वकम् ॥ ८ ।
एकादश्यां ब्रह्मचारी** जपेन्नारायणं स्मरन् ।
धौताम्बरधरः शुद्धः स्वपेन्नारायणाग्रतः ॥ ९ ।

---

* संपूज्यते विरिञ्च्याद्यैरिति (क), (ङ) ।

† तत्फलन्त्वष्टमानं स्याद्ध्वजारोपणकर्म्मिणः इति (ख), ध्वजारोपणकर्म्मिणः इति (ग), ध्वजारोपणसञ्चितमिति (ङ), अत्र पुस्तकेऽतः परं सार्द्धद्विश्लोकौ न स्तः ।

‡ शिवलिङ्गप्रपूजनमिति (ख) ।

§ ध्वजारोपणसङ्गतमिति (घ) ।

¶ एतदर्द्धं पुस्तकान्तरेषु न दृश्यते ।

‖ तानि वक्ष्यामि सर्व्वाणीति (ख)।

** एकाकी ब्रह्मचारी च स्वपन्नारायणाग्रत इति (ख), स्वपेन्नारायणं स्मरन्निति (ग), (ङ) ।

ततः प्रातः समुत्थाय स्नात्वाचम्य यथाविधि* ।
नित्यकर्म्माणि निर्वर्त्त्य पश्चाद्विष्णुं समर्चयेत्† ॥ १० ।
चतुर्भिर्ब्राह्मणैः सार्द्धं कृत्वा च स्वस्तिवाचनम् ।
नान्दीश्राद्धं प्रकुर्वीत ध्वजारोपणकर्म्मणि ॥ ११ ।
ध्वजस्तम्भौ च गायत्र्या प्रोक्षयेद्वस्त्रसंयुतौ ।
सूर्य्यञ्च वैनतेयञ्च हिमांशुं तत्पटेऽर्चयेत्‡ ॥ १२ ।
धातारञ्च विधातारं पूजयेत्स्तम्भके द्वये§ ।
हरिद्राक्षतगन्धाद्यैः शुद्धपुष्पैर्विशेषतः¶ ॥ १३ ।
ततो गोचर्म्ममात्रन्तु स्थण्डिलञ्चोपलिप्य तु ।
आधायाऽग्निं स्वगृह्योक्त्या आज्यभागादिकं क्रमात् ।
जुहुयात्पायसेनैव‖ घृतमष्टोत्तरं शतम् ॥ १४ ।
प्रथमं पौरुषं सूक्तं विष्णवे समिदाहुतीः** ।
ततश्च वैनतेयाय स्वाहेत्यष्टाहुतीस्तथा ॥ १५ ।
सामीधेनुस्वाहा पञ्च†† जुहुयात्प्रयतो द्विजाः ।

---

* विधानत इति (ङ) ।

† समुच्चयेदिति (क) ।

‡ हिमांशुञ्च ततोऽर्चयेदिति (क), (ख) ।

§ पूजयेत्कुम्भकद्वये इति (ख) ।

¶ शुक्लपक्षे विशेषत इति (ङ) ।

‖ जुहुयात्पायसञ्चैवेति (ख) ।

** विष्णोरेकामरावतीमिति बहुषु पाठः ।

†† होमधेन्वा घृतेनैवेति (क), सोमधेनुं समुद्धृत्येति (ख) ।

सौरं मन्त्रं जपेत्तत्र* शान्तिसूक्तांश्च शक्तितः ॥ १६ ।
रात्रौ जागरणं कुर्य्यादुपकण्ठं हरेः शुचिः ।
ततः प्रातः समुत्थाय नित्यं कर्म्म समाप्य च ।
गन्धपुष्पादिभिर्देवमर्चयेत्पूर्ववत्क्रमात् ॥ १७ ।
ततो मङ्गलवाद्यैश्च सूक्तपाठैश्च शोभनैः ।
नृत्यैश्च स्तोत्रपठनैर्नयेद्विष्णुालये ध्वजाम् ॥ १८ ।
देवस्य द्वारदेशे वा शिखरे वा मुदान्वितः ।
सुस्थिरं स्थापयेद्विप्रा ध्वजं सुस्तम्भसंयुतम् ॥ १९ ।
गन्धपुष्पाक्षतैर्देवं धूपदीपैर्मनोरमैः ।
भक्ष्यभोज्यादिसंयुक्तैर्नैवेद्यैश्च हरिं यजेत्† ॥ २० ।
एवं देवालये स्थाप्य‡ शोभनं ध्वजमुत्तमम् ।
प्रदक्षिणमनुव्रज्य स्तोत्रमेतदुदीरयेत् ॥ २१ ।
नमस्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्व्वज ॥ २२ ।
येनेदमखिलं जातं यत्र सर्वं प्रतिष्ठितम् ।
लयमेष्यति यत्रैतत्तं§ प्रपन्नोऽस्मि माधवम् ॥ २३ ।
न जानन्ति परं भावं यत्र ब्रह्मादयः सुराः ।

---

* सौरान्मन्त्रानिति (ख) ।

† एष श्लोक (ङ) पुस्तके नास्ति ।

‡ स्थाप्येति आर्षं, स्थापयित्वेति साधु ।

§ यत्रैव तमिति (ङ) ।

योगिनो यं प्रपश्यन्ति* तं वन्दे ज्ञानरूपिणम् ॥ २४ ।
अन्तरीक्षन्तु यन्नाभिर्द्यौर्मूर्द्धा यस्य चैव हि ।
पादौ हि यस्य स्यात्† पृथ्वी तं वन्दे विश्वरूपिणम् ॥ २५ ।
यस्य श्रोत्रे दिशः सर्व्वा यच्चक्षुर्दिनकृच्छशी ।
ऋक्सामयजुषोयेन तं वन्दे ब्रह्मरूपिणम् ॥ २६ ।
यन्मुखाद्ब्राह्मणा जाता यद्बाहोरभवन्नृपाः ।
वैश्या यस्योरुतो जाताः पद्भ्यां शूद्रोऽप्यजायत‡ ॥ २७ ।
मनसश्चन्द्रमा जातो दिनकृच्चक्षुषस्तथा ।
प्राणेभ्यः पवनो जातो मुखादग्निरजायत ॥ २८ ।
मायासङ्गममात्रेण वदन्ति पुरुषं तु यम् ।
स्वभावविमलं शुद्धं निर्विकारं निरञ्जनम् ॥ २९ ।
क्षीराब्धिशायिनं देवमनन्तमपराजितम् ।
सद्भक्तवत्सलं विष्णुं§ भक्तिगम्यं नमाम्यहम् ॥ ३० ।
पृथिव्यादीनि भूतानि तन्मात्राणीन्द्रियाणि च ।
सूक्ष्मात्सूक्ष्माणि येनासंस्तं वन्दे सर्व्वतोभुजम्¶ ॥ ३१ ।

---

* योगिनोयं प्रशंसन्ति इति (ख), (ग), (ङ) ।

† पादौ हि यस्य च पृथ्वी इति (क), पादावभूच्चैव पृथ्वीति (ख), पादौ च यस्याऽभूत् पृथ्वी (ग), पादौ यस्याऽभवत्पृथ्वीति (ङ) ।

‡ शूद्रोऽभ्यजायतेति (क), शूद्रोत्यजायतेति (ग) ।

§ सद्भक्तवत्सलं देवमिति (ङ) ।

¶ सुसूक्ष्माणि च येनासंस्तं वन्दे सर्व्वतोमुखमिति (ख), सूक्ष्मासूक्ष्माणीति (ग),(ङ)।

यद्ब्रह्म परमन्धाम सर्व्वलोकोत्तमोत्तमम्* ।
निर्गुणं परमं सूक्ष्मं प्रणतोऽस्मि पुनः पुनः ॥ ३२ ।
अविकारमजं† शुद्धं सर्व्वतोबाहुमीश्वरम् ।
यमानमन्ति योगीन्द्राः सर्व्वकारणकारणम् ॥ ३३ ।
एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्रीँल्लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥ ३४ ।
यो देवः सर्व्वभूतानामन्तरात्मा जगन्मयः‡ ।
निर्गुणः परमानन्दः स मे विष्णुः प्रसीदतु ॥ ३५ ।
हृदयस्थोऽपि दूरस्थो मायया मोहितात्मनाम् ।
ज्ञानिनां सर्व्वगो यस्तु स मे विष्णुः प्रसीदतु§ ॥ ३६ ।
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥ ३७ ।
ज्ञानिनां कर्म्मिणाञ्चैव तथा भक्तिमतां नृणाम् ।
मतिदाता विश्वभुग्यः स मे विष्णुः प्रसीदतु ॥ ३८ ।
जगद्धितार्थं ये देहाध्रियन्ते लीलया हरेः¶ ।
तानर्च्चयन्ति विबुधाः स मे विष्णुः प्रसीदतु ॥ ३९ ।
यमानमन्ति वै सन्तः सच्चिदानन्दविग्रहम् ।

---

* सर्व्वलोकोद्भवोद्भवमिति (ङ) ।

† निर्व्विकारमजमिति (ख) ।

‡ (ख) पुस्तके एतदर्द्धं नास्ति । सर्व्वभूतात्मा जगद्व्यापी जगन्मय इति (ग) ।

§ (ग) पुस्तके एषश्लोको नास्ति ।

¶ जगद्धितार्थं योदेहोध्रियते लीलया हरेः । यमर्च्चयन्तीति (ख) ।

निर्गुणञ्च गुणाधारं* स मे विष्णुः प्रसीदतु ॥ ४० ।
परेशः परमानन्दः परात्परतरः प्रभुः ।
चिद्रूपश्चित्परिज्ञेयः स मे विष्णुः प्रसीदतु ॥ ४१ ।
य इदं कीर्त्तयेन्नित्यं स्तोत्राणामुत्तमोत्तमम् †
सर्व्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ ४२ ।
इति स्तुत्वा नमेद्विष्णुं ब्राह्मणांश्च प्रपूजयेत्‡ ।
आचार्य्यं पूजयेत्पश्चाद्दक्षिणाच्छादनादिभिः§ ॥ ४३ ।
ब्राह्मणान् भोजयेद्भक्त्या शक्तितो भक्तिभावतः¶ ।
पुत्रमित्रकलत्राद्यैर्बन्धुभिः सह वाग्यतः ।
कुर्व्वीत पारणां विप्रा नारायणपरायणः ॥ ४४ ।
यस्त्वेतत्कर्म्म कुर्व्वीत ध्वजारोपणसंज्ञितम्‖ ।
तस्य पुण्यफलं वक्ष्ये शृणुध्वं** सुसमाहिताः ॥ ४५ ।
पटध्वजस्य†† विप्रेन्द्रा यावच्चलति वायुना ।

---

* निर्गुणस्य गुणाधार इति (घ) ।

† (ख) पुस्तकेऽतः परं चत्वारः पादा न सन्ति ।

‡ ब्राह्मणांश्च प्रपूजयन्निति (क) ।

§ दक्षिणाद्यर्चनादिभि. इति (घ) ।

¶ ब्राह्मणान् भोजयेत्पश्चाद्भक्तितो भक्तिभाविष इति (ख)।  तत्र परार्द्धञ्च नास्ति ।

‖ ध्वजारोपणमुत्तममिति (ख) ।

** शृणुध्वमिति आर्षं, शृणुत इति साधु ।

†† एवं ध्वजस्येति (ख), पटध्वजश्चेति (घ) ।

तावन्ति पापजालानि नश्यन्त्येव न संशयः* ॥ ४६ ।
महापातकयुक्तोवा युक्तोवा सर्वपातकैः ।
ध्वजं विष्णुगृहे कृत्वा सर्वपापैः प्रमुच्यते ॥ ४७ ।
यावद्दिनानि वसति ध्वजं विष्णुगृहे† द्विजाः ।
तावद्युगसहस्राणि हरिसारूप्यमश्नुते‡ ॥ ४८ ।
आरोपितं ध्वजं दृष्ट्वा येऽभिनन्दन्ति धार्म्मिकाः ।
तेऽपि सद्यो विमुच्यन्ते महापातककोटिभिः§ ॥ ४९ ।
आरोपितो ध्वजो¶ विष्णुगेहे धुन्वन् स्वकं पटम् ।
कर्त्तुः सर्व्वाणि पापानि धुनोति निमिषार्द्धतः ॥ ५० ।

सूत उवाच ।

शृणुध्वमृषयः|| पुण्यमितिहासं पुरातनम् ।
सर्व्वपापप्रशमनं नारदेन प्रभाषितम् ॥ ५१ ।
आसीत्पुरा कृतयुगे सुमतिर्नाम भूपतिः ।
सोमवंशोद्भवः श्रीमान्सप्तद्वीपैकराट् स्वयम् ॥ ५२ ।
धर्म्मवान्** सत्यसंकल्पः शुचिर्वैश्यातिथिप्रियः ।

---

* नश्यन्ते नाऽत्र संशय इति (ख), नश्यन्तीति साधु ।

† हरिगृहे नृपा इति (ख) ।

‡ हरिसायुज्यमश्नुते इति (ख) ।

§ ह्युपपातककोटिभिः इति (ख), (ग), (ङ) ।

¶ आरोपितं ध्वजमिति बहुषु पाठोऽस्ति, ध्वजशब्दस्य पुंस्त्वान्न स मनोरमः ।

|| शृणुध्वमृषय. सर्व्वे इति (ग) । शृणुतेति साधु, एवमन्यत्रापि ।

** धर्म्मांशः सत्यसम्पन्न. शुचिर्वंगातिथिप्रिय इति (ख), शुचिर्वंश्योऽतिथिरिति (ग)

सर्व्वलक्षणसम्पन्नः* सर्व्वसम्पद्विभूषणः ॥ ५३ ॥
सदा हरिकथासेवी हरिपूजापरायणः।
हरिभक्तिपराणाञ्च शुश्रूषुरनहङ्कृतिः† ॥ ५४ ॥
पूज्येषु पूजानिरतः समदर्शी‡ गुणान्वितः।
सर्व्वभूतहितः शान्तः कृतज्ञः कीर्त्तिमान्नृपः ॥ ५५ ॥
तस्य भार्य्या महाभागा सर्व्वलक्षणसंयुता।
पतिव्रता पतिप्राणा नाम्ना सत्यमतिः स्मृता§ ॥ ५६ ॥
तावुभौ दम्पती नित्यं हरिपूजापरायणौ।
जातिस्मरौ महाभागौ सत्यज्ञौ सत्परायणौ¶ ॥ ५७ ॥
अन्नदानरतौ नित्यं जलदानपरायणौ‖।
तड़ागारामवप्रादीनसंख्यातान्वितेनतुः ॥ ५८ ॥
सा तु सत्यमतिर्नित्यं शुचिर्विष्णुगृहे सती।
नृत्यत्यत्यन्तसन्तुष्टा मनोज्ञा मञ्जुवादिनी** ॥ ५९ ॥
सोऽपि राजा महाभागो द्वादशीद्वादशीदिने।
ध्वजमारोपयामास मनोज्ञं बहुविस्तरम् ॥ ६० ॥
एवं हरिपरं नित्यं राजानं धर्म्मकोविदम्।

---

* सर्व्वलक्षणसम्पूर्ण इति (क); सर्व्वसम्पद्विभूषित इति (ख), (ग)।

† अनहङ्कृत इति (ख), (ग)।

‡ सर्व्वदर्शीति (घ)।

§ सत्यमतिः श्रुता इति (ग), सत्यमतिः समा इति (ङ)।

¶ एतदर्द्धं (घ) पुस्तके नास्ति।

‖ एतदर्द्धं (क) पुस्तके नास्ति।

** नित्यं नृत्यति सन्तुष्टा मनोज्ञा मञ्जुभाषिणीति (ख)।

तस्य प्रियां सत्यमतिं देवा अपि सदाऽस्तुवन् ॥ ६१ ।
त्रिलोकविश्रुतौ तौ च दम्पत्यत्यन्तधार्म्मिकौ* ।
आययौ बहुभि श्शिष्यैर्द्रष्टुकामो विभाण्डकः ॥ ६२ ।
विभाण्डकं मुनिं श्रुत्वा समायान्तं जनेश्वरः ।
प्रत्युद्ययौ सपत्नीकः पूजाभिर्विविधैः स्तवैः ॥ ६३ ।
कृतातिथ्यक्रियं शान्तं कृतासनपरिग्रहम् ।
नीचासनगतो भूपः प्राञ्जलिर्मुनिमब्रवीत्† ॥ ६४ ।
राजोवाच ।
भगवन् कृतकृत्योऽस्मि त्वदभ्यागमने प्रभो‡ ।
सतामागमनं सन्तः प्रशंसन्ति सुखावहम् ॥§ ६५ ।
यत्र स्यान्महतां प्रेम तत्र स्युः सर्व्वसम्पदः ।
तेजः¶ कीर्त्तिर्द्धनं पुत्रा‖ इति प्राहुर्विपश्चितः ॥ ६६ ।
यत्र वृद्धिं** गमिष्यन्ति श्रेयांस्यनुदिनं मुने ।
तत्र सन्तः प्रकुर्व्वन्ति महतीं करुणां प्रभो ॥ ६७ ।
यो मूर्ध्नि धारयेद्ब्रह्मन्महत्पादतलोदकम्†† ।

---

* दम्पत्यत्यन्तधार्म्मिकाविव्यत्र सन्धिरार्षः ।

† प्रादानिर्वाक्यमब्रवीदिति (क), (घ) ।

‡ विभो इति (क), त्वदभ्यागमनेषु चेति (ख) ।

§ सुखाय हीति (क) ।

¶ तेषामिति (क), (ग) ।

‖ बलं विप्रा इति (घ) ।

** सिद्धिमिति (क) ।

†† महताञ्च पदोदकमिति (क) ।

स स्नातः सर्व्वतीर्थेषु पुण्यवान्नात्र संशयः ॥ ६८ ।
मम पुत्राश्च दाराश्च सम्पत्त्वयि समर्पिता ।
मामाज्ञापय शास्ता मे* ब्रह्मन् किं करवाणि ते ॥ ६९ ।
विनयावनतं भूपं तं निरीक्ष्य मुनीश्वरः ।
स्पृशन् करेण राजानं प्रत्युवाचातिहर्षितः ॥ ७० ।†

ऋषिरुवाच ।

राजन्यदुक्तं भवता तत्सर्व्वं त्वत्कुलोचितम् ।
विनयावनताः सर्व्वे परं श्रेयोलभन्ति‡ हि ॥ ७१ ।
धर्म्मश्चार्थश्च कामश्च मोक्षश्च नृपसत्तम ।
विनयाल्लभते सर्वं विनयात्किं न साध्यते ॥ ७२ ।
प्रीतोऽस्मि तव भूपाल सन्मार्गाः परिपन्थिनः§ ।
स्वस्ति तेऽस्तु महाभाग यत्पृच्छामि तदुच्यताम् ॥ ७३ ।
अर्हणा बहवः सन्ति हरिसन्तुष्टिकारिकाः ।
त्वमद्याप्युद्यतो¶ नित्यं ध्वजारोपणकर्म्मणि ॥ ७४ ।
तव भार्य्यापि साध्वीयं नित्यं नृत्यपरायणा‖ ।
किमर्थमेतद्वृत्तान्तं यथावद्वक्तुमर्हसि ॥ ७५ ।

---

* शान्तात्मन्निति (ख), (ग) ।

† एषश्लोकः (ख) पुस्तके नास्ति ।

‡ लभन्तीति आर्षं, लभन्ते इति साधु ।

§ सन्मार्गाः परिवर्तिन इति (ख), (ग) ।

¶ त्वमप्यत्युद्यत इति (क), त्वमद्याभ्युद्यत इति (ख) ।

‖ नित्य ध्वजपरायणा इति (ख) ।

राजोवाच ।

शृणुष्व भगवन् सर्व्वं यत्पृच्छसि वदामि तत् ।
आश्चर्य्यभूतं भूतानामावयोश्चरितं मुने ॥ ७६ ।
अहमासं पुरा शूद्रो मातलिर्नाम सत्तम ।
कुमार्गनिरतो नित्यं सर्व्वलोकाहिते रतः ॥ ७७ ।
पिशुनो धर्म्मविद्वेषी देवद्रव्यापहारकः ।
महापातकसंसर्गाद्वित्तपुत्रक्षयं गतः† ॥ ७८ ।
नित्यं निष्ठुरवक्ता च पापी वेश्यापरायणः ।
एवं स्थितः कञ्चित्कालमनादृत्य महद्वचः‡ ॥ ७९ ।
सर्व्वबन्धुपरित्यक्तो दुःखी वनमुपागमम् ।
मृगमांसाशनो नित्यं तथा मार्गविरोधकृत्§ ॥ ८० ।
एकाकी दुःखबहुलः अवसं निर्जने वने ।
एकदा क्षुत्परिश्रान्तो निदाघार्त्तो पिपासितः¶ ।
जीर्णं देवालयं विष्णोरपश्यं निर्ज्जने वने ।
हंसकारण्डवाकीर्णं समीपेऽस्य महत्सरः‖ ॥ ८१।८२ ।

---

* कृतमाश्चर्य्यं लोकानामावयोरिति (क),आश्चर्य्यभूतं लोकानामिति (ख) (ग),(ङ)।

† गोघ्नश्च ब्रह्महा चौरः सर्व्वप्राणिवधे रत इति (ख), महापातकसंसर्गी विप्रद्रव्याऽपहारक इति (ग), (ङ) ।

‡ एतद्दृष्ट्वा तु दुष्कर्म सर्व्वैस्त्यक्तो महात्मभिरिति (क) ।

§ तत्त्वमार्गविरोधकृदिति (ख) ।

¶ एकदा क्षुत्पिपासार्त्त इति(क),एकदा क्षुत्परिश्रान्तः सदा पूर्णपिपासित इति(ख)

‖ तत्समीपे महत्सर इति (ङ) ।

पर्य्यन्तवनपुष्पौघच्छादितं तन्मुनीश्वर ।
अपिबं तत्र पानीयं तत्तटे विगतश्रमः* ॥ ८३ ।
उन्मूल्य विषमूलानि तृट्क्षुच्च विनिवारिता† ।
तस्मिञ्जीर्णालये‡ विष्णोर्निवासं कृतवानहम् ॥ ८४ ।
जीर्णस्फुटितसन्धानं§ तथा चाहमकारिषम् ।
पर्णैस्तृणैश्च काष्ठैश्च गृहं सम्यक् प्रकल्पितम् ॥ ८५ ।
भूमौ मद्भाग्यबाहुल्यादुपलिप्ता¶ मुनीश्वर ।
तत्राहं व्याधवृत्तिस्थो हत्वा बहुविधान्मृगान् ।
आजीवं वर्त्तनं कृत्वा वत्सराणाञ्च विंशतिम् ॥ ८६ ।
अथेयमागता साध्वी विन्ध्यदेशसमुद्भवा ।
निषादकुलसम्भूता नाम्ना कोकिलिनी स्मृता ॥ ८७ ।
बन्धुवर्गपरित्यक्ता दुःखिता जीर्णविग्रहा ।
ब्रह्मन् क्षुत्तृट्परिश्रान्ता शोचन्ती स्वकृतां क्रियाम् ॥ ८८ ।
दैवयोगात्समायाता भ्रमन्ती विजने वने ।
मामेषा ग्रीष्मतापार्त्ता अन्तस्तापप्रपीड़िता ॥ ८९ ।
इमां दुःखवतीं दृष्ट्वा जाता मे विपुला घृणा ।
मया दत्तं जलञ्चास्यै मांसं वन्यफलं तथा ॥ ९० ।

---

* तत्तटे विगतस्पृह इति (क) ।

† सा क्षुधा विनिवारिता इति (ख) ।

‡ तस्मिन् शीर्णालये विष्णोरिति (ख) ।

§ शीर्णस्फुटितसद्मांशमिति (क), (ख), (ग) ।

¶ भूमिर्मद्भोगबाहुल्यादिति (क), (घ), मद्भाग्यवात्सल्यादिति (ग) ।

गतश्रमा तथा ब्रह्मन्मया पृष्टा यथायथम् ।
न्यवेदयत्स्वकर्म्माणि तानि शृणु महामुने ॥ ८१ ।
इयं कोकिलिनी नाम्ना निषादकुलसम्भवा ।
दाम्भिकस्य* सुता विद्वन्न्यवसद्विन्ध्यपर्वते ॥ ८२ ।
परस्वहारिणी नित्यं सदा पैशुन्यवादिनी ।
बन्धुवर्गैः परित्यक्ता यतो हतवती पतिम् ॥ ८३ ।
कान्तारे विजने ब्रह्मन्मत्समीपमुपागता ।
इत्येवं स्वकृतं कर्म्म सर्व्वं मह्यं न्यवेदयत् ॥ ८४ ।
तस्मिन्देवालये विष्णोरहञ्चेयञ्च† वै मुने ।
दम्पतीभावमाश्रित्य स्थितौ मांसाशनौ तदा ॥ ८५ ।
एकदा मद्यपानेन मत्तावावाञ्च निर्भरौ‡ ।
तत्र§ देवालये रात्रौ मुदितौ मांसभोजनात् ॥ ८६ ।
बद्धा वस्त्रञ्च दण्डाग्रे प्रमत्तौ मद्यसेवया ।
अत्यन्तहर्षसम्पन्नावावां सम्यगनृत्यताम् ॥ ८७ ।
तत्काल एव पञ्चत्वमावयोरभवन्मुने¶ ।
आगता यमदूताश्च पाशहस्ता भयङ्कराः ॥ ८८ ।
कर्म्मणा तेन तुष्टात्मा भगवान्मधुसूदनः ।

---

* दाम्भकस्य सुतेति (ख) ।

† तस्मिन्देवालये ब्रह्मन्निति (ग) ।

‡ नृत्यत इति (ख) ।

§ तस्मिन्देवालये इति (क) ।

¶ तत्काल एव पञ्चत्वमभवच्चावयोर्मुने इति (ख) ।

स्वदूतान् प्रेषयामास मदाहरणकारणात् ॥ ९९ ।
संवादस्तु महानासीद्दूतानां तत्र सत्तम ।
मया श्रुतञ्च तत्सर्व्वं शृणु धर्म्मविदां वर* ॥ १०० ।
दूतास्ते देवदेवस्य शङ्खचक्रगदाधराः ।
सहस्रसूर्य्यसङ्काशाः शान्ताः कोमलभाषिणः ॥ १०१ ।
भयङ्करान् पाशहस्तान्दंष्ट्रिणो यमकिङ्करान् ।
तानूचुर्देवदूतास्ते हरिनामपरायणाः ॥ १०२ ।
देवदूता ऊचुः ।
भो भोः क्रूरा दुराचारा विवेकपरिवर्ज्जिताः ।
मुञ्चध्वमेतौ निष्पापौ दम्पती हरिवल्लभौ ॥ १०३ ।
विवेकस्त्रिषु लोकेषु सम्पदामादिकारणम् ।
तथा विवेकशून्यत्वमापदामादिकारणम्† ।
अपापे पापधीर्यस्य तं विद्यात्पुरुषाधमम् ॥ १०४ ।
यमदूता ऊचुः ।
युष्माभिः सत्यमेवोक्तमेतौ पातकिसत्तमौ ।
ज्ञेया हि‡ पापिनो दण्डास्तन्नेष्यामो वयन्त्विमौ§ ॥१०५।
श्रुतिप्रणिहितो धर्म्मो ह्यधर्म्मस्तद्विपर्य्ययः¶ ।

---

* शृणु ब्रह्मविदां वर इति (क)।
† एतदर्द्धं (ख) पुस्तके नास्ति ।
‡ वै इति (ख), (ग) ।
§ यमाऽन्तिकमिति (ग) ।
¶ विपर्य्यये इति (क), त्वधर्म्मस्तु विपर्य्यय इति (ख) ।

एतावधर्म्मचरितौ तन्नेष्यामो यमान्तिकम्* ॥ १०६ ।
एतच्छ्रुत्वाऽति†कुपिता देवदूता महौजसः ।
प्रत्यूचुः‡स्तान्यमभटान् भाभासितदिगन्तराः ॥ १०७ ।
देवदूता ऊचुः ।
अहो कष्टं धर्म्मदृशामधर्म्मः स्पृशते§ महान् ।
सम्यग्विवेकशून्यत्वमापदां हि पदं महत्¶ ॥ १०८ ।
प्राप्तेनाद्यविशेषेण‖ नरकाध्यक्षतां गताः ।
यूयं किमर्थमद्यापि कर्त्तुं पापानि सोद्यमाः** ॥ १०९
अधर्म्मे††क्षयपर्य्यन्तं महापातकिनोऽपि च‡‡ ।
तिष्ठन्ति नरके यूयं§§ यावदाचन्द्रतारकम् ॥ ११० ।
पूर्व्वसञ्चितपापानां न दृष्टा निष्कृतिः क्वचित् ।
किमर्थं पापकर्म्माणि करिष्यथ पुनः पुनः ॥ १११ ।

---

* वयन्त्विमौ इति (ग) ।
† श्रुत्वा तु इति (ख), (ग) ।
‡ इत्यूचुरिति (ग) ।
§ स्पृशते इति आर्षं, स्पृशतीति साधु ।
¶ निदानं ह्यापदां महदिति (ख) ।
‖ अर्थविशेषेणेति (क), (ग), पूर्व्वपापविशेषेणेति (ङ) ।
** वोद्यता इति (ख) ।
†† स्वकर्मेति (ख), (ग), (ङ) ।
‡‡ य इति (क) ।
§§ नूनमिति (घ), (ङ) ।

श्रुतिप्रणिहिता धर्म्माः* सत्यं सत्यं न संशयः ।
किन्त्वार्य्यां चरितान्धर्म्मान् प्रवक्ष्यामो† यथातथम् ॥ ११२॥
एतौ पापविनिर्मुक्तौ हरिशुश्रूषणे रतौ ।
हरिणा शुध्यमानौ‡ च मुच्येथां मा विलम्बयताम्॥ ११३ ।
एषा वै नर्त्तनञ्चक्रे तथा चैषध्वजं§ भटाः ।
अन्तकाले विष्णुगृहे तेन पापविमोचितौ ॥ ११४ ।
उत्क्रान्तिकाले यन्नाम श्रुतवन्तोऽपि ये¶ सकृत् ।
लभन्ते‖ परमं स्थानं किमु शुश्रूषणे रताः ॥ ११५ ।
महापातकयुक्ता वा युक्ता वा सर्व्व**पातकैः ।
ईक्षिता भगवद्भक्तैर्लभन्ते परमं पदम्†† ॥ ११६ ।
यतीनां विष्णुभक्तानां परिचर्य्यापरायणैः ।
ईक्षिता‡‡श्चापि गच्छन्ति पापिनोऽपि परां गतिम् ॥११७।

---

* श्रुतिप्रणिहितो धर्म इति (क), (ख)।

† प्रवक्ष्यामीति बहुषु पाठः ।

‡ तुष्यमाणौ इति (क), (ङ), गृह्यमाणौ इति (ख) पुष्यमाणौ इति (ग)।

§ तथाचैक इति (ख)।

¶ हि वै इति (क), अथ वै इति (ख), अपि वै इति (ग), (ङ), (ख) यान्ति ते इति (ङ)।

‖ यान्ति ते इति (ङ)।

** यदीति (क), (घ)।

†† परमा गतिमिति (ख)। तत्र ईक्षिताख्याने स्वारिता इति पाठः।

‡‡ दीक्षिता इति (ङ)।

मुहूर्त्तं वा मुहूर्त्तार्द्धं यस्तिष्ठेद्धरिमन्दिरे ।
स याति परमं स्थानं किमु शुश्रूषणे रताः ॥ ११८ ।
उपलेपनकर्त्तारौ सम्मार्ज्जनपरायणौ ।
एतौ हरिगृहे नित्यं शीर्णसन्धानकारिणौ ॥ ११९ ।
जलसेचनकर्त्तारौ दीपदौ हरिमन्दिरे ।
कथमेतौ महाभागौ प्रणेष्यथ यमक्षयम्* ॥ १२० ।
इत्युक्त्वा देवदूतास्ते छित्त्वा पाशं तदैव† हि ।
आरोप्यावां बिमाने तु‡ ययुर्विष्णोः परम्पदम् ॥ १२१ ।
आवां समीपमापन्नौ देवदेवस्य चक्रिणः ।
भुक्तवन्तौ महाभोगान्यावत्कालं शृणुष्व मे ॥ १२२ ।
युगकोटिसहस्राणि युगकोटिशतानि च ।
उषित्वा विष्णुभवने ब्रह्मलोकं समागतौ ॥ १२३ ।
तावत्कालञ्च तत्राऽपि स्थित्वेन्द्रपदमागतौ ।
तत्राऽपि भावुकं भोगं भुक्त्वा दिव्यमनुत्तमम् ॥
ततः पृथ्वीशतां प्राप्य क्रमेण मुनिसत्तम ।
अत्राऽपि सम्पदतुला हरिपूजाप्रसादतः ॥ १२४।१२५ ।
अनिच्छया कृतेनाऽपि प्राप्तमेवंविधं मुने ।
सम्यगाराध्य विश्वेशं भक्तिभावेन माधवम् ।

---

* नयिष्यथ यमान्तिकमिति (ख), नयिष्यथेति आर्षं, नेष्यथेति साधु, तत्र चातः परं सूत उवाच इति पाठो वर्त्तते ।

† तथैवेति (क), (घ) ।

‡ विमानन्त्विति (ख), (ग) ।

प्राप्नुयामीति* परं श्रेय इति मे निश्चिता मतिः ॥ १२६ ।
अवशेनाऽपि† यत्कर्म्म कृतन्तु‡ सुमहत्फलम् ।
ददाति हि नृणां विप्र किं पुनः सम्यगर्च्चनात् ॥ १२७ ।
एतत्सर्व्वं निशम्याऽसौ विभाण्डको मुनीश्वरः ।
अभिनन्द्य महीपालं प्रययौ स्वतपोवनम् ॥ १२८ ।

सूत उवाच ।

तस्माच्छृणुध्वं विप्रेन्द्रा देवदेवस्य चक्रिणः ।
परिचर्य्या च सर्व्वेषां कामधेनूपमा स्मृता ॥ १२९ ।
हरिपूजापराणाञ्च हरिरेव सनातनः ।
ददाति परमं श्रेयः सर्व्वकामफलप्रदः ॥ १३० ।
य इदं पुण्यमाख्यानं सर्व्वपापप्रणाशनम् ।
वाचयेच्छृणुयाद्वाऽपि ध्वजारोपणपुण्यभाक् ॥ १३१ ।

इति श्रीवृहन्नारदीये पुराणेऽष्टादशोऽध्यायः ।

समाप्तञ्च ध्वजारोपणव्रतम् ।

---

* प्राप्नोमीति (ग), (घ), प्राप्नोतीति (ङ) ।

† अवश्यभावीति (ङ) ।

‡ तदिति (क) ।

# ऊनविंशोऽध्यायः ।

## ( हरिपञ्चकव्रतम् ।)

सूत उवाच ।

अन्यद्व्रतं प्रवक्ष्यामि शृणुध्वं सुसमाहिताः* ।
हरिपञ्चकविख्यातं सर्व्वलोकेषु दुर्लभम्† ॥ १ ॥
नारीणाञ्च नराणाञ्च सर्व्वदुःखनिवर्हणम् ।
धर्म्मार्थकाम‡मोक्षाख्यपुरुषार्थैकसाधनम् ॥ २ ॥
सर्व्वाभीष्टप्रदञ्चैव§ सर्व्वव्रतफलप्रदम् ।
सर्व्वव्रतोत्तमं श्रेष्ठं सर्व्वकामफलप्रदम् ॥ ३ ॥
मार्गशीर्षे सिते पक्षे दशम्यां नियतेन्द्रियः ।
कुर्य्यात्स्नानादिकं कर्म्म दन्तधावनपूर्व्वकम् ॥ ४ ॥
कृत्वा देवार्च्चनं सम्यक् तथा पञ्च महाध्वरान् ।
एवं व्रती भवेत्¶ तस्मिन्दिने निगृहीतेन्द्रियः ॥ ५ ॥
ततः‖ प्रातः समुत्थाय एकादश्यां मुनीश्वराः ।

---

* ऋषिसत्तमा इति (ग) ।

† एतदर्द्धं (ग) पुस्तके नास्ति ।

‡ सर्व्वकामार्थेति (क) ।

§ फलञ्चैवेति (ख) ।

¶ एकादशी भवेदिति (ग), (ङ), एकादशीदिने इति (घ) ।

‖ तथेति (ग) ।

स्नानं कृत्वा यथाचारं हरिञ्चैवाऽर्च्चयेद्गृहे* ॥ ६ ।
स्नापयेद्देवदेवेशं पञ्चामृतविधानतः ।
अर्च्चयेत्परया भक्त्या गन्धपुष्पादिभिः क्रमात् ॥ ७ ।
धूपैर्दीपैश्च नैवेद्यैस्ताम्बूलैश्च प्रदक्षिणैः ।
सम्पूज्य देवदेवेशमिमं मन्त्रमुदीरयेत् ॥ ८ ।
नमस्ते ज्ञानरूपाय ज्ञानदाय नमोऽस्तु ते† ।
नमस्ते सर्व्वरूपाय सर्व्वसिद्धिप्रदाय च ॥ ९ ।
एवं प्रणम्य देवेशं देवदेवं जनार्द्दनम् ।
वक्ष्यमाणेन मन्त्रेण उपवासं समर्पयेत् ॥ १० ।
पञ्चरात्रं निराहारो ह्यद्यप्रभृति केशव ।
त्वदाज्ञया जगत्स्वामिन्ममाभीष्टप्रदो भव ॥ ११ ।
एवं समाप्य देवस्य उपवासान्‡ जितेन्द्रियः ।
रात्रौ जागरणं कुर्य्यादेकादश्यां व्रती द्विजाः ॥ १२ ।
द्वादश्याञ्च त्रयोदश्यां चतुर्द्दश्यां जितेन्द्रियः ।
पौर्णमास्याञ्च कर्त्तव्यमेवं विष्ण्वर्च्चनं द्विजाः ॥ १३ ।
एकादश्यां पौर्णमास्यां कर्त्तव्यं जागरं द्विजाः§ ॥ १४ ।
पञ्चामृतेन¶ पूजा तु सामान्यदिनपञ्चसु ।

---

* हरिमर्च्चेति (ग) ।

† (च) इति (घ) ।

‡ उपवासमिति (ख), (ङ) ।

§ कर्त्तव्योजागर इति साधु, कर्त्तव्यं जागरणं द्विजा इति (ख), (ङ) ततश्च छन्दोभङ्गः ।

¶ पञ्चामृतादीति (ख) ।

क्षीरेण स्नापयेद्विष्णुं पौर्णमास्यान्तु शक्तितः ॥ १५ ।
तिलहोमश्च कर्त्तव्यस्तिलदानञ्च सत्तमाः ।
ततः षष्ठे दिने प्राप्ते निर्व्वर्त्य स्वाश्रमक्रियाम् ।
संप्राश्य पञ्चगव्यन्तु अर्च्चयेत्पूर्व्ववद्धरिम् ॥ १६ ।
ब्राह्मणान् भोजयेत्पश्चाद्विभवे सत्यवारितम्* ।
ततः स्वबन्धुभिः सार्द्धं स्वयं भुञ्जीत वाग्यतः ॥ १७ ।
एवं पुष्यादिमासेषु कार्त्तिकान्तेषु सत्तमाः ।
शुक्लपक्षे व्रतं कुर्य्यात्पूर्व्वमुक्त† विधानतः ॥ १८ ।
एवं संवत्सरं कुर्य्याद्व्रतं पापविनाशनम् ।
पुनर्मासि मार्गशीर्षे कुर्य्यादुद्यापनं व्रती ॥ १९ ।
एकादश्यां निराहारो भवेत्पूर्व्ववदुत्तमाः ।
द्वादश्यां पञ्चगव्यञ्च प्राशयेत्सुसमाहितः ॥ २० ।
गन्धपुष्पादिभिः सम्यग्देवदेवं जनार्द्दनम् ।
अभ्यर्च्चोपायनं दद्याद्ब्राह्मणाय जितेन्द्रियः ॥ २१ ।
पायसं मधुसंमिश्रं घृतयुक्तं फलाऽन्वितम् ।
सुगन्धिफलसंयुक्तं‡ पूर्णकुम्भं सदक्षिणम् ॥
वस्त्रेणाच्छादितं कुम्भं पञ्चरत्नसमन्वितम् ।
दद्यादध्यात्मविदुषे ब्राह्मणाय मुनीश्वराः ॥ २२।२३ ।
सर्व्वात्मन् सर्व्वभूतेश सर्व्वव्यापिन् सनातन ।

---

* अवारितानिति (ख) ।

† कुर्व्वन्नुक्तेति (क), (ग), (घ) ।

‡ सवस्त्रजलसंयुक्तमिति (ख) ।

परमान्नप्रदानेन सुप्रीतो भव माधव ॥ २४ ।
नारायण नमस्तुभ्यं जगत्त्राणपरायण ।
कुम्भोदकप्रदानेन प्रीतो भव जनार्द्दन ॥ २५ ।
अनेनोपायनं दत्त्वा ब्राह्मणान् भोजयेत्ततः ।
शक्तितो बन्धुभिः सार्द्धं स्वयं भुञ्जीत वाग्यतः ॥ २६ ।
व्रतमेतत्तु यः कुर्य्याद्धरिपञ्चकसंज्ञितम्* ।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कदाचन ॥ २७ ।
व्रतमेतत्तु कर्त्तव्यमिच्छद्भिर्मोक्षमुत्तमम् ।
समस्तपापकान्तारे दावानलसमं द्विजाः ॥ २८ ।
गवां कोटिसहस्राणि दत्त्वा यत्फलमश्नुते ।
तत्फलं समवाप्नोति एकस्मादुपवासतः ॥ २९ ।
यश्चैतच्छृणुयाद्भक्त्या नारायणपरायणः ।
स मुच्यते† महाघोरैरुपपातककोटिभिः ॥ ३० ।

इति श्रीवृहन्नारदीये पुराणे ऊनविंशोऽध्यायः ।

समाप्तञ्च हरिपञ्चकव्रतम् ।



---

* संज्ञकमिति (क), (ख) ।

† प्रमुच्यते इति (ङ) ।

## विंशोऽध्यायः ।

सूत उवाच ।

अन्यद्व्रतं प्रवक्ष्यामि शृणुध्वं सुसमाहिताः ।
सर्व्वपापहरं पुण्यं सर्व्वलोकोपकारकम् ॥ १ ।
आषाढ़े श्रावणे वापि तथा भाद्रपदेऽथवा* ।
तथा चाश्वयुजे वापि कुर्य्यादेतद्व्रतं द्विजाः ॥ २ ।
एतेष्वन्यतमे मासि शुक्लपक्षे जितेन्द्रियः ।
प्रातर्दशम्यां स्नायीत दन्तधावनपूर्व्वकम् ॥ ३ ।
नित्यं देवार्च्चनं कुर्य्याद्यत्नतो नियतेन्द्रियः ।
एकादश्यां ब्रह्मचारी अधःशायी जितेन्द्रियः ॥ ४ ।
प्राशयेत्पञ्चगव्यञ्च स्वपेद्विष्णुसमीपतः† ।
ततः प्रातः समुत्थाय नित्यं कर्म्म समाप्य च ॥
श्रद्धया पूजयेद्विष्णुं वशी क्रोधविवर्जितः ।
विद्वद्भिः सहितो विष्णुमर्च्चयित्वा यथोचितम्‡ ॥ ५।६
संकल्पन्तु तथा कुर्य्यात्स्वस्तिवाचनपूर्व्वकम् ।
मासमेकं निराहारो ह्यद्यप्रभृति केशव ॥ ७ ।
मासान्ते पारणं कुर्य्यां देवदेव§ त्वदाज्ञया ।

---

* तथेति (क), (ख) ।

† समीपग इति (ख) । (क) पुस्तके एष श्लोकः परश्लोकस्य पूर्व्वार्द्धं च न स्तः

‡ यथोदितमिति (घ), (ङ) ।

§ देवमेवमिति (ख), (घ) ।

तपोरूपं नमस्तुभ्यं* तपसां फलदायिने† ॥ ८ ।
ममाभीष्टफलं देहि सर्व्वविघ्नान्निवारय ।
एवं समर्प्य‡ देवस्य विष्णोर्मासव्रतं शुभम् ।
ततःप्रभृति मासान्तं निवसेद्धरिमन्दिरे ।
प्रत्यहं स्नापयेद्देवं पञ्चामृतविधानतः ॥ ९।१० ।
दीपं निरन्तरं कुर्य्यात्तस्मिन्मासे हरेर्गृहे§ ।
प्रत्यहं दन्तकाष्ठञ्च अपामार्गस्य शाखया ।
कृत्वा स्नायीत विधिवन्नारायणपरायणः ॥ ११ ।
तर्पणं विष्णवे¶ कुर्य्यात्केशवाद्यैश्च नामभिः ।
द्वादशभिर्विष्णुपूजामेभिरेव न संशयः‖ ॥ १२ ।
एवं मासोपवासञ्च** कुर्य्याद्धरिपरायणः ।
तदन्ते प्रयतः स्नायाद्विष्णुं पूर्व्ववदर्चयेत् ॥ १३ ।
ब्राह्मणान् भोजयेच्छक्त्या†† भक्तियुक्तः सदक्षिणम् ।
स्वयञ्च बन्धुभिः सार्द्धं भुञ्जीत प्रयतेन्द्रियः‡‡ ॥ १४ ।

---

* नमस्तेऽस्त्विति (घ) ।

† फलदायकेति (ग) ।

‡ समार्प्येति (घ) ।

§ गृहे गृहे इति (ख), तत्र तर्पणमित्यादि श्लोको नास्ति ।

¶ विष्णोस्तु तर्पणमिति (क) ।

‖ समाचरेदिति (ग) ।

** तु इति (ग) ।

†† पश्चादिति (ख) ।

‡‡ (ख) पुस्तकेऽतः परं सार्द्धैकः श्लोको नास्ति ।

व्रतं मासोपवासाख्यमेवं कुर्य्यात्त्रयोदश ।
तदन्ते वेदविदुषे गां दद्याच्च सदक्षिणाम् ॥ १५ ।
ब्राह्मणान् भोजयेच्छक्त्या द्वादश प्रयतेन्द्रियः ।
शक्त्या च दक्षिणां दद्याद्वस्त्राण्या*भरणानि च ॥ १६ ।
मासोपवासेनैकेन वाजपेयफलं लभेत्† ।
यदि द्वयङ्कृतं तस्य पौण्डरीकफलं लभेत् ॥ १७ ।
मासोपवासत्रितयं यः कुर्य्यात्संयतेन्द्रियः ।
असौ सोमस्य‡ यज्ञस्य द्विगुणं फलमश्नुते ॥ १८ ।
चतुःकृत्वः कृतं येन पराकं मुनिसत्तमाः ।
स लभेत्परमं पुण्यमग्निष्टोमाष्टसम्भवम्§ ॥ १९ ।
पञ्चकृत्वो व्रतमिदं कृतं येन महात्मना ।
अत्यग्निष्टोमजं पुण्यं प्राप्नुयान्नात्र संशयः¶ ॥ २० ।
मासोपवासं षट्कृत्वः कुर्य्याद्यस्तु समाहितः ।
ज्योतिष्टोमस्य यज्ञस्य फलमष्टगुणं लभेत्‖ ॥ २१ ।

---

* वह्ननीति (ख) ।

† लभेदिति आर्षं, लभेतेति साधु । एवं लभधातोः परस्मैपदप्रयोगोऽन्यत्र च आर्षोज्ञेयः ।

‡ आप्तोर्यामस्येति (क), (ग), (घ), (ङ) ।

§ अग्निष्टोमाष्टकोद्भवमिति (ख) ।

¶ द्विगुणं फलमाप्नुयादिति (क), अग्निष्टोमात्मकं पुण्यं द्विगुणं प्राप्नुयान्नर इति (ख), द्विगुणं प्राप्नुयान्नर इति (ग), (ङ) ।

‖ त्रिगुणं फलमश्नुते इति (ग) ।

निराहारेण यो मासं सप्तकल्पस्तथा नयेत्* ।
अश्वमेधस्य यज्ञस्य फलमष्टगुणं† लभेत्‡ ॥ २२ ।
मासोपवासं यः कुर्य्यादष्टकल्पो मुनीश्वराः ।
नरमेधाख्ययज्ञस्य फलमष्टगुणं लभेत्§ ॥ २३ ।
यस्तु मासोपवासांश्च¶ नवकल्पः समाचरेत् ।
गोमेधमखजं पुण्यं लभते द्विगुणं नरः|| ॥ २४ ।
दशकल्पस्तु यः कुर्य्यात्पराकं मुनिसत्तमाः ।
स याति ब्रह्ममेधस्य त्रिगुणं** फलमुत्तमम् ॥ २५ ।
एकादश पराकांश्च यः कुर्य्यात्संयतेन्द्रियः ।
सर्व्वयज्ञफलं प्राप्य हरिसालोक्य††मश्नुते ॥ २६ ।
मासोपवासान्यः कुर्य्याद्द्वादश प्रयतेन्द्रियः‡‡ ।
स याति हरिसारूप्यं सर्व्वभोगसमन्वितम् ॥ २७ ।
त्रयोदश पराकांश्च यः कुर्य्यात्प्रयतो नरः§§ ।

---

* मुनीश्वरा इति (ख) ।

† नरमेधस्य यज्ञस्य फल पञ्चगुणमिति (ख), तत्र परः श्लोको नास्ति ।

‡ भवेदिति (ग) ।

§ भवेदिति (ग) ।

¶ उपवासश्चेति (घ) ।

|| स लभेद्द्विगुणं नर इति (क), (घ) ।

** द्विगुणमिति (ख), (घ) ।

†† सारूप्यमिति (ग) ।

‡‡ संयतेन्द्रिय इति (ख) ।

§§ संयतेन्द्रिय इति (ख) ।

स याति परमानन्दं यत्र गत्वा न शोचति ॥ २८ ।
मासोपवासनिरता गङ्गास्नानपरायणाः ।
धर्म्ममार्गप्रवक्तारो मुक्ता एव* न संशयः ॥ २९ ।
यतीनां ब्रह्मचारीणामवीराणाञ्च† सत्तमाः ।
मासोपवासः कर्त्तव्यो वनस्थानां विशेषतः ॥ ३० ।
नारी वा पुरुषो वापि व्रतमेतच्च दुर्लभम् ।
कृत्वा मोक्षमवाप्नोति योगिनामपि दुर्लभम् ॥ ३१ ।
गृहस्थो वानप्रस्थो वा वर्णी वा भिक्षुरेव‡ च ।
अद्वैतज्ञानशून्योऽपि§ मोक्षमस्माल्लभेन्नरः ॥ ३२ ।
य इदं व्रतमाहात्म्यं नारायणपरायणः ।
शृणुयाद्वाचयेद्वापि सर्व्वपापैः प्रमुच्यते ॥ ३३ ।

इति श्रीबृहन्नारदीये पुराणे मासोपवासव्रतकथनं
नाम विंशोऽध्यायः ।

---

* स्त्रीवेति (ख) ।

† ब्रह्मचारीणामिति छन्दोऽनुरोधादार्षं, ब्रह्मचारिणामिति साधु ।

‡ भिक्षुकोऽपिचेति (ख) ।

§ कृत्वैतज्ज्ञानशून्योऽपीति (ङ) । एष श्लोकः (ग) पुस्तके नास्ति ।

# एकविंशोऽध्यायः ।

## ( एकादशीव्रतम् ।)

सूत उवाच ।

इदमन्यत्प्रवक्ष्यामि व्रतं त्रैलोक्यविश्रुतम् ।
सर्व्वपापप्रशमनं सर्व्वकामफलप्रदम् ॥ १ ।
ब्राह्मणक्षत्रियविशां शूद्राणाञ्चैव योषिताम् ।
मोक्षदं कुर्व्वतां भक्त्या विष्णोः प्रियतरं द्विजाः* ॥ २ ।
एकादशीव्रतं नाम सर्व्वकामफलप्रदम् ।
कर्त्तव्यं सर्व्वथा विप्रा† विष्णुप्रीणनकारणम्‡ ॥ ३ ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
यदि भुङ्क्ते स पापी स्यात्परत्र नरकं व्रजेत् ॥ ४ ।
उपवासफलं प्रेप्सु§र्जह्याद्भक्तचतुष्टयम् ।
पूर्व्वापरदिने रात्रावहोरात्रन्तु मध्यमे ॥ ५ ।
एकादशीदिने यस्तु भोक्तुमिच्छति सत्तमाः ।
स भोक्तुं सर्व्वपापानि स्पृहयालुर्न संशयः¶ ॥ ६ ।
भवेद्दशम्यामेकाशी द्वादश्याञ्च मुनीश्वराः ।

---

* तथेति (ग) ।

† विप्रैरिति (ख), (ग) ।

‡ हेतवे इति (ख) ।

§ लिप्सुरिति बहुषु पुस्तकेषु पाठः ।

¶ स्पृहयेन्नात्र संशय इति (ख) ।

एकादश्यां निराहारो यदि मुक्तिमभीप्सति ॥ ७ ।
यानि कानि च पापानि ब्रह्महत्यादिकानि* च ।
अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे ॥ ८ ।
ब्रह्महत्यादिपापानां कथञ्चिन्निष्कृतिर्भवेत् ।
एकादश्यान्तु यो भुङ्क्ते निष्कृतिर्नास्ति कुत्रचित्† ॥ ९
महापातकयुक्तो वा युक्तो वा सर्व्वपातकैः ।
एकादश्यां निराहारः स्थित्वा याति परं‡ पदम् ॥ १०
एकादशी महापुण्या विष्णुप्रियकरी§ तिथिः ।
संसेव्या सर्व्वथा विप्रैः संसारच्छेदलिप्सुभिः ॥ ११ ।
दशम्यां प्रातरुत्थाय दन्तधावनपूर्व्वकम् ।
स्नात्वा च विधिवद्विष्णुमर्च्चयेत्प्रयतो नरः¶ ॥ १२ ।
एकादशीं चरेत्तस्मिन्दिने‖ निगृहीतेन्द्रियः ।
विष्णोः समीपे शयीत** नारायणपरायणः ॥ १३ ।
एकादश्यां तथा स्नात्वा सम्पूज्य च जनार्द्दनम् ।
गन्धपुष्पादिभिः सम्यक् ततस्त्वेवमुदीरयेत्†† ॥ १४ ।

---

* समानि चेति (ख) ।

† कदाचिन्नास्ति निष्कृतिरिति (ग), नापि कुत्रचिदिति (ङ) ।

‡ स याति परममिति (ख) ।

§ प्रियतरेति (ख) ।

¶ प्रयतेन्द्रिय इति (क), (ख), (ग) ।

‖ एकादशीदिने तस्मिंश्चरेदिति (ङ) ।

** शायी चेति (घ), (ङ) ।

†† ततस्त्वमुदीरयेदिति ।

एकादश्यां निराहारः स्थित्वाऽहनि परे ह्यहम् ।
भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाऽच्युत ॥ १५ ।
इमं मन्त्रं समुच्चार्य्य देवदेवस्य चक्रिणः ।
भक्तिभावेन तुष्टात्मा उपवासं समर्पयेत् ॥ १६ ।
देवस्य पुरतः कुर्य्याज्जागरं नियतो व्रती ।
गीतैर्वाद्यैश्च नृत्यैश्च पुराणश्रवणादिभिः ॥ १७ ।
ततः प्रातः समुत्थाय द्वादशीदिवसे व्रती ।
स्नात्वा च विधिवद्विष्णुं पूजयेत्संयतेन्द्रियः* ॥ १८ ।
पञ्चामृतेन संस्नाप्य एकादश्यां जनार्द्दनम् ।
द्वादश्यां पयसा स्नाप्य† हरिसारूप्यमश्नुते ॥ १९ ।
अज्ञानतिमिरान्धस्य व्रतेनाऽनेन केशव ।
प्रसीद‡ सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ॥ २० ।
एवं विज्ञाप्य विप्रेन्द्रा देवदेवस्य चक्रिणः ।
ब्राह्मणान् भोजयेत्पश्चाच्छक्त्या दद्याच्च दक्षिणाम्§ ॥ २१ ।
ततः स्वबन्धुभिः सार्द्धं नारायणपरायणः ।
कृतपञ्चमहायज्ञः स्वयं भुञ्जीत वाग्यतः ॥ २२ ।
एवं यः प्रयतः कुर्य्यात्पुण्यमेकादशीव्रतम् ।
स याति विष्णुभवनं पुनरावृत्तिदुर्लभम् ॥ २३ ।

---

* पूजयेच्च जितेन्द्रिय इति (ख) ।

† स्नाप्येति आर्षं, स्नापयित्वेति साधु ।

‡ प्रसादेति (ग) ।

§ दद्याच्च दक्षिणान्तमिति (ख) ।

उपवासव्रतपरो धर्म्मकारी च सत्तमाः* ।
चण्डालान्पतितञ्चापि वाङ्मात्रेणापि नार्च्चयेत् ॥ २४ ।
नास्तिकान् भिन्नमर्य्यादान्निन्दकान् पिशुनांस्तथा ।
उपवासव्रतपरो नालपेत्सर्व्वथा बुधः† ॥ २५ ।
वृषलीसूतिपोष्टारं‡ वृषलीपतिमेव च ।
अयाज्ययाजकञ्चैव नालपेत्सर्व्वथा§ व्रती ॥ २६ ।
कुण्डाशिनं गायकञ्च¶ तथा देवलकाशिनम् ।
भैषज्यकार्य्यकर्त्तारं देवद्विजविरोधिनम् ।
परान्नलोलुपञ्चैव परस्त्रीनिरतं तथा ।
व्रतोपवासनिरतो वाङ्मात्रेणाऽपि नार्च्चयेत् ॥ २७।२८ ।
इत्येवमादिभिः शुद्धो वशी सर्व्वगुणैर्युतः‖ ।
उपवासपरो भूत्वा परां सिद्धिं गमिष्यति ॥ २९ ।
नास्ति गङ्गासमं तीर्थं नास्ति मातृसमो गुरुः ।
नास्ति विष्णुसमो देवस्तपो नाऽनशनात्परम् ॥ ३० ।
नास्ति वेदसमं शास्त्रं नास्ति शान्तिसमं सुखम् ।
नास्ति चक्षुःसमं** ज्योतिस्तपो नाऽनशनात्परम् ॥ ३१

* धर्म्मधारीति (ख), उपवासपरो धर्म्मकारी च मुनिसत्तमा इति (ग) ।

† च कुकर्म्मभिरिति (क) ।

‡ वृषलीमभिपोष्टारमिति (ख) ।

§ सर्व्वदेति (ख) ।

¶ गोलकञ्चेति (ख) ।

‖ सर्व्वहिते रत इति (ख), (ग) ।

** सत्यसममिति (ख) ।

नास्ति क्षमासमा ख्याति*र्नास्ति कीर्त्तिसमं धनम्†।
नास्ति ज्ञानसमो लाभस्तपो नाऽनशनात्परम्॥ ३२॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम्।
संवादं भद्रशीलस्य तत्पितुर्गालवस्य च॥ ३३॥
पुरा हि गालवो नाम मुनिः सत्यपरायणः।
उवास नर्म्मदातीरे शान्तो दान्तस्तपोनिधिः॥ ३४॥
बहुवृक्षसमाकीर्णे नानामृगनिषेविते‡।
सिद्धचारणगन्धर्व्वयक्षविद्याधराऽन्विते॥ ३५॥
कन्दमूलफलैः पूर्णे मुनिवृन्दनिषेविते।
गालवो नाम विप्रेन्द्रो निवासमकरोच्चिरम्॥ ३६॥
तस्याऽभवद्भद्रशील इति ख्यातः सुतो वशी।
जातिस्मरो महाभागो नारायणपरायणः॥ ३७॥
बालक्रीड़नकालेऽपि भद्रशीलो महामतिः।
सदा च विष्णोः प्रतिमां कृत्वा पूजापरो§ऽभवत्॥ ३८॥
विप्रान् बोधयते¶ नित्यं विष्णुः पूज्यो नरैरिति।
एकादशीव्रतञ्चैव कर्त्तव्यमतिपण्डितैः॥ ३९॥
एतेन बोधिताश्चापि शिशवोऽपि मुनीश्वराः।

---

* धर्म्म इति (ख)।

† बलमिति (घ), (ङ)।

‡ मृगवर्गनिषेविते इति (ख)।

§ कार इति (क), (ग), (ख) पुस्तके एतदर्द्धं परश्लोकश्च नस्तः।

¶ बोधयतीति साधु ; विप्रानाबोधयत्येवेति (क)।

हरेर्गृहं विनिर्म्माय सदा* पूजापराभवन्† ॥ ४० ।
नमस्कुर्व्वन् भद्रशीलो‡ विष्णवे सर्व्वजिष्णवे ।
सर्व्वेषां जगतां स्वस्ति भूयादित्यब्रवीत्सदा ॥ ४१ ।
क्रीड़ाकाले मुहूर्त्तं वा मुहूर्त्तार्द्धमथाऽपि वा ।
एकादशीति सङ्कल्प्य विष्णवे प्रणमत्यसौ ॥ ४२
एवं सुचरितं दृष्ट्वा तनयं गालवो मुनिः ।
अपृच्छद्विस्मयाविष्टः समाभाष्य§ तपोनिधिम् ॥ ४३ ।

गालव उवाच ।

भद्रशील महाभाग भद्रशीलोऽसि सुव्रत¶ ।
चरितं|| मङ्गलं यत्ते योगिनामपि दुर्लभम् ॥ ४४ ।
हरिपूजापरो नित्यं सर्व्वभूतहिते रतः** ।
एकादशीव्रतपरो लोकानुग्रहतत्परः ॥ ४५ ।
निर्द्वन्द्वो निर्म्ममः शान्तो हरिध्यानपरायणः ।
जातेयं परमा बुद्धिः कथं वक्तुं ममार्हसि†† ॥ ४६ ।

---

* हरिं सदैव निर्म्माय सर्व्व इति (ख) ।

† परा अभवन्निति साधु ।

‡ भद्रमतिरिति (ख)।

§ समालिङ्ग्येति (ख), समाश्लिष्य इति (ङ), तपोनिधिरिति (ख), (ग) ।

¶ पुत्रकेति (ख) ।

|| चरित्रमिति (ख) ।

** (ग) पुस्तकेऽत. परं सार्द्धैक. श्लोको नास्ति ।

†† इहार्हसीति (ख) ।

भद्रशीलः पितुर्वाक्यं श्रुत्वा प्रहसिताननः ।
स्वानुभूतं* यथावृत्तं सर्व्वं पित्रे न्यवेदयत् ॥ ४७ ।

भद्रशील उवाच ।

शृणु तात महाभाग अनुभूतं मया पुरा ।
जातिस्मरत्वाज्जानामि यमेन परिभाषितम्† ॥ ४८ ।
एतच्छ्रुत्वा मुनिश्रेष्ठो गालवो विस्मयान्वितः ।
उवाच प्रीतिमापन्नो भद्रशीलं महामतिम् ॥ ४९ ।

गालव उवाच ।

कस्त्वं पूर्व्वं महाभाग किमुक्तश्च यमेन ते ।
कस्य वा केन हेतोश्च‡ तत्सर्व्वं वक्तुमर्हसि ॥ ५० ।

भद्रशील उवाच ।

अहमासं पुरा तात राजा सोमकुलोद्भवः ।
धर्म्मकीर्त्तिरिति§ ख्यातो दत्तात्रेयेण शासितः ॥ ५१ ।
नववर्षसहस्राणि महीं कृत्स्नामपालयम् ।
अधर्म्मास्तु¶ तथा धर्म्मा मया तु बहवः कृताः ॥ ५२ ।
ततः श्रिया प्रमत्तोऽहं बहुधर्म्मा‖ण्यकारिषम् ।

---

* स्वार्थभूतमिति (क), आत्मभूतमिति (ग) ।

† (ख) पुस्तकेऽतः परं सूत उवाच, इति पाठो वर्त्तते ।

‡ वा हेतोरिति (ख) ।

§ वर्षकीर्त्तिरिति (क), (ङ) ।

¶ च इति (ख) ।

‖ बौद्धधर्म्माणीति (क) ।

पाषण्डजनसंसर्गात्पाषण्डचरितोऽभवम् ॥ ५३ ।
पुरार्जितानि पुण्यानि मया तु सुबहून्यपि ।
पाषण्डालापमात्रेण प्रनष्टानि तपोधन ॥ ५४ ।
पाषण्डैर्बोधितोऽहन्तु वेदमार्गं समत्यजम् ।
मखाश्च सर्व्वे विध्वस्ता कूटयुक्तिविदा मया ॥ ५५ ।
अधर्म्मनिरतं मान्तु दृष्ट्वा मद्देशजाः प्रजाः ।
सदैव दुष्कृतं चक्रुः षष्ठांशस्तत्र मेऽभवत् ॥ ५६ ।
एवं पापसमाचारो व्यसनाभिरतस्तथा ।
मृगयाभिरतोभूत्वा* ह्येकदा प्राविशं वनम् ॥ ५७ ।
ससैन्योऽहं वने तत्र हत्वा बहुविधान्मृगान् ।
क्षुत्तृट्परिगतः† श्रान्तो रेवातीरमुपागमम् ॥ ५८ ।
प्रवृद्धतापविक्रान्तो रेवायां स्नानमाचरम् ।
अदृष्टसैन्य एकाकी पीड्यमानः क्षुधा तृषा‡ ॥ ५९ ।
समेतास्तत्र मे केचित्तात तीर्थनिवासिनः§ ।
एकादशीव्रतपरा मया दृष्टा निशामुखे ॥ ६० ।
निराहारश्च तत्राहमेकाकी तज्जनैः सह ।
जागरं कृतवांस्तात सेनया रहितो निशि¶ ॥ ६१ ।

---

* भूयानिति (ग)।

† परिवृत इति (ख)।

‡ पीड्यमानो बुभुक्षयेति (ख), क्षुधातृषमिति (ग), (ङ)।

§ तत्तीरवासिन इति (ग), (ङ)।

¶ (क) पुस्तके ६१, ६२ श्लोकयोः स्थाने एवं पाठोऽस्ति—एकादशीतिथिः सा च दैवयोगान्निशामुखे। निराहारश्च तत्राहमेकाकी बन्धुवर्ज्जितः। जागरं कृतवानिति।

अध्वश्रमपरिश्रान्तः क्षुत्पिपासाप्रपीड़ितः।
तत्रैव जागरान्तेऽहं तात* पञ्चत्वमागतः॥ ६२।
ततो यमभटैर्बद्धो महादंष्ट्राभयङ्करैः।
अनेकक्लेशसम्पन्नान्मार्गान् प्राप्तो यमान्तिकम्।
दंष्ट्राकरालवदनमपश्यं समवर्त्तिनम्॥ ६३।
अथ कालश्चित्रगुप्तमाहूयेदमभाषत।
अस्य शिक्षाभिधानञ्च यथा तद्वद् पण्डित॥ ६४।
एवमुक्तश्चित्रगुप्तो धर्म्मराजेन सत्तमाः†।
चिरं विचारयामास पुनश्चेदमभाषत॥ ६५।
असौ पापरतः सत्यं तथापि शृणु धर्म्मप।
एकादश्यां निराहारात्सर्व्वपापैर्विमोचितः‡॥ ६६।
एकादशीदिने ह्येष रेवातीरे मनोरमे।
जागरञ्चोपवासञ्च कृत्वा पापैर्विमोचितः॥ ६७।
यानि कानि च पापानि कृतानि सुबहूनि च।
तानि सर्व्वाणि नष्टानि उपवासप्रभावतः॥ ६८।
एवमुक्तो धर्म्मराजश्चित्रगुप्तेन धीमता।
ननाम दण्डवद्भूमौ मम तातातिकम्पितः§॥ ६९।
पूजयामास मां तात भक्तिभावेन धर्म्मराट्।

---

* तत इति (घ), (ङ)।

† धर्म्मवान् सत्यविक्रम इति (क)।

‡ सर्व्वपापविमोचित इति बहुषु पाठः।

§ तथेति (ख)।

ततश्च* स्वभटान्सर्व्वानाहूयेदमभाषत ॥ ७० ।

यम उवाच ।

शृणुध्वं मद्वचो दूता हितं वक्ष्याम्यनुत्तमम् ।
धर्म्मेषु निरतान्मर्त्यान्मानयध्वं ममाऽन्तिकम् ॥ ७१ ।

ये विष्णुभक्तिनिरताः प्रयताः कृतज्ञाः†
एकादशीव्रतपरा विजितेन्द्रियाश्च ।
नारायणाच्युत हरे शरणं भवेति
सन्तो‡ वदन्ति सततं तरसा त्यजध्वम् ॥ ७२ ।
नारायणाच्युत जनार्द्दन कृष्ण विष्णो
पद्मेश पद्मजनितः§ शिव शङ्करेति ।
नित्यं वदन्त्यखिललोकहिताः प्रशान्ता
दूराद्भटास्त्यजत तत्र न मेऽस्ति शिक्षा ॥ ७३ ।
नारायणार्पितक्रियान्¶ हरिभक्तभक्ता-
नाचार‖मार्गनिरतान् गुरुसेवकांश्च** ।
सत्यान्नदाननिरतान् हरिभक्तिमूलान्††

---

* ततीयमश्च स्वभटानिति (क) ।

† कृतपञ्चयज्ञा इति (घ) ।

‡ शान्ता इति (क), (ग) ।

§ पद्मदयितः इति (ख), पद्मजपितः इति (घ) ।

¶ विधीनिति (ख) ।

‖ स्वाचार इति (क) ।

** हरिकीर्त्तिसक्तानिति (ख) ।

†† एष पादः (ख) पुस्तके नास्ति ।

दूतास्त्यजध्वमनिशं हरिनामयुक्तान् ॥ ७४ ।
पाषण्डसङ्गरहितान्द्विजभक्तिनिष्ठान्
सत्सङ्गलोलुपपरांश्च तथाऽऽतिथेयान् ।
शम्भोर्हरेश्च समबुद्धिमतस्तथैव
दूतास्त्यजध्वमुपकारपराञ्जनानाम् ॥ ७५ ।
ये वीक्षिताः* हरिकथामृतसेवकैश्च
नारायणस्तुतिपरायणमानसैश्च ।
विप्रेन्द्रपादजलसेवनसंप्रहृष्टै-
स्तान्पापिनोऽपि च भटाः सततं त्यजध्वम् ॥ ७६ ।
ये मातृतातपरिभर्त्सनशीलिनश्च
लोकद्विषो द्विजजनाहितकर्म्मणश्च† ।
देवस्वलोभनिरताञ्जननाशहेतूं-
स्तानानयध्वमपराधरतांश्च‡ दूताः ॥ ७७ ।
एकादशीव्रतपराङ्मुखमुग्रशीलं
लोकापवादनिरतं पर§निन्दुकञ्च ।
ग्रामस्य नाशकरणमुत्तमनिन्दुकञ्च
दूताः समानयत विप्रधनेषु लुब्धम् ॥ ७८ ।

---

* वीक्षिता इति (क) ; तत्र सेवकाः, मानसाः, हृष्टा इति प्रथमान्ताः पठ्यन्ते ।

† कर्म्मण इति आर्षं, कर्म्माण इति साधु । कर्म्मिणश्चेति (ख), (ग) ।

‡ अपराधकृतश्चेति (ख) ।

§ द्विजेति (ग) ।

¶ ये ग्रामनाशकरमिति (क) ।

ये विष्णुभक्तिविमुखा न नमन्ति ये च
नारायणाय शरणागतपालकाय ।
विष्ण्वालयञ्च नहि याति नरोऽतिमूर्ख-*
स्तानानयध्वमतिपापतरान्† प्रशास्यान् ॥ ७९
एवं संस्तुतवान् पूर्व्वं यमेन परिभाषितम् ।
दृष्टोऽहं‡मनुतापेन स्मृत्वा तत्कर्म्म§ तत्र वै ॥ ८० ।
पितर्म्ममानुतापेन तद्धर्म्मश्रवणेन¶ च ।
तदैव सर्व्वपापानि निःशेषं विगतानि च‖ ॥ ८१ ।
पापशेषविनिर्म्मुक्तं हरिसारूप्यतां गतम् ।
सहस्रसूर्य्यसङ्काशं मां ननाम यमस्तदा ॥ ८२ ।
एतद्दृष्ट्वा विस्मितास्ते यमदूता भयोत्कटाः ।
विश्वासं परमं चक्रुर्यमोक्ते सर्वं एव ते ॥ ८३ ।
ततः सम्पूज्य मां कालो विमानशतसङ्कुलम् ।
सद्यः सम्प्रेषयामास तद्विष्णोः परमं पदम् ॥ ८४ ।
विमानकोटिभिः सार्द्धं सर्वभोगसमन्वितैः ।
कर्म्मणा तेन जनक विष्णुलोके मयोषितम् ॥ ८५ ।

---

* मूढ इति (क) ।
† पापकरानिति (ख) ।
‡ दृष्टोऽहमिति (क) ।
§ सत्कर्म्मेति (ख) ।
¶ स्मरणेनेति (क) ।
‖ भो इति (ग), वै इति (ङ) ।

कल्पकोटिसहस्राणि कल्पकोटिशतानि च।
स्थित्वा विष्णुपदे पश्चादिन्द्रलोकं समागतः॥ ८६॥
तत्रापि सर्व्वभोगाढ्यः सर्व्वदेवनमस्कृतः।
तावत्कालं दिवि स्थित्वा ततो भूमिं समागतः॥ ८७॥
अत्रापि* विप्रप्रवर कुले महति सम्भवः।
जातिस्मरत्वाज्जानामि सर्व्वमेतन्मुनीश्वर॥ ८८॥
तस्माद्विष्णुर्व्वनोद्योगं ततोऽहं† प्रकरोमि वै।
एकादशीव्रतमिदमिति न ज्ञातवान्‡ पुरा॥ ८९॥
जातिस्मृति§प्रभावेण तज्ज्ञातं साम्प्रतं मया।
अवशेनापि यत्कर्म्म कृतं तस्य फलन्त्विदम्॥ ९०॥
एकादशीव्रतं भक्त्या कुर्व्वतां किमुत¶ प्रभो।
तस्माच्चरिष्ये जनक शुभ‖मेकादशीव्रतम्।
विष्णुपूजाञ्चाहरहः परमस्थान**काङ्क्षया॥ ९१॥
एकादशीव्रतं ये तु कुर्व्वन्ति श्रद्धया नराः।

---

* तत्र इति (ग), (ङ)।

† ताताहमिति (ख), (घ)।

‡ चाज्ञातवानिति (क)।

§ स्मार इति (घ)।

¶ किमत इति (क)।

‖ पुण्यमिति (घ)।

** पूजाञ्च परमं बहवः स्यामेति (क), पूजाञ्च बहव इति (ङ)।

ते यान्ति विष्णुभवनं* परमानन्ददायकम्† ॥ ९२ ॥
यश्चैतत्‡ शृणुयान्नित्यं पठेद्वा भक्तिभावतः ।
सर्व्वपापविनिर्म्मुक्तो विष्णुलोके महीयते ॥ ९३ ।

सूत उवाच ।

एवं पुत्रवचः श्रुत्वा सन्तुष्टो गालवो मुनिः ।
अवाप परमां तुष्टिं मनसाऽप्यति§हर्षितः ॥ ९४ ।
मज्जन्म सफलं जातं मद्वंशः पावनीकृतः ।
यतोऽसौ¶ मत्कुले जातो विष्णुभक्तिपरायणः ॥ ९५ ।
इति सन्तुष्टचेतास्तु तस्य पुत्रस्य धीमतः ।
हरिपूजाविधानञ्च यथावत्समबोधयत्‖ ॥ ९६ ।
इत्येतद्वो मुनिगणा यथावत्कथितं मया ।
सङ्कोचविस्तराभ्याञ्च किमन्यत्कथयामि वः ॥ ९७ ।

इति श्रीबृहन्नारदीयपुराणे एकादशीव्रतकथनो नामैकविंशोऽध्यायः ।



---

* भवनं विष्णोरिति (ङ) ।

† कारणमिति (ग) ।

‡ त्वेतदिति (ख) ।

§ चातीति (ख) ।

¶ यतस्त्वमिति (क) ।

‖ समबोचयदिति (क), (घ), (ङ) तत्तु आर्षमेव ।

# द्वाविंशोऽध्यायः ।

## वर्णाश्रमविधिः ।

ऋषय ऊचुः ।

कथितं भवता सर्व्वं सूत तत्त्वार्थकोविद ।
भागीरथ्याः सुमहिमा धर्म्माधर्म्माश्च सत्तम* ॥ १ ।
हरिपूजाविधानञ्च व्रतपूजा सविस्तरम् ।
एकादश्याश्च महिमा त्वया प्रोक्तो विशेषतः ॥ २ ।
इदानीं श्रोतुमिच्छामो वर्णाश्रमविधिं मुने ।
तथैव चाश्रमाचारं प्रायश्चित्तविधिं मुने ॥ ३ ।
एतत्सर्व्वं महाभाग सूत तत्त्वार्थकोविद ।
कृपया परयाविष्टो यथावद्वक्तुमर्हसि ॥ ४ ।

सूत उवाच ।

शृणुध्वमृषयः सर्व्वे यदुक्तो ब्रह्मसूनुना ।
सनत्कुमारमुनये वर्णाश्रमविनिर्णयः† ॥ ५ ।
वर्णाश्रमाचारवता‡ पूज्यते हरिरव्ययः ।
तस्माद्वक्ष्यामि विप्रेन्द्रा मन्वाद्यैश्चोदितञ्च यत् ॥ ६ ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चत्वार एव ते§ ।

---

* कोविद इति (ख), सत्तमा इति (ग) ।

† यदुक्तं निर्णयमिति बहुषु पाठोऽस्ति । निर्णयस्य पुंस्त्वात्स आर्ष एव ।

‡ युतैरिति (ख), (ग) ।

§ हीति (ङ) ।

वर्णा इति समाख्याता एतेषां ब्राह्मणोऽधिकः ॥ ७ ।
ब्राह्मणः क्षत्रियो वैश्यो द्विजाः प्रोक्तास्त्रिजास्तथा* ।
मातृतश्चोपनयनाद्दीक्षाया जन्म वै क्रमात् ॥ ८ ।
एतैर्वर्णैः सर्व्वधर्म्माः कार्य्या वर्णानुरूपतः† ।
स्ववर्ण‡धर्म्मत्यागेन पाषण्डः प्रोच्यते बुधैः ॥ ९ ।
स्वगृह्यचोदितं कर्म्म द्विजः कुर्व्वन् कृती भवेत् ।
अन्यथा पतितं विद्यात्सर्व्वधर्म्म§वहिष्कृतम् ॥ १० ।
युगधर्म्माः परिग्राह्या वर्णैरेतैर्यथोचितम् ।
ग्रामाचारस्तथा ग्राह्यः स्मृतिमार्गाविरोधतः ॥ ११ ।
कर्म्मणा मनसा वाचा यत्नाद्धर्म्मान् समाचरेत् ।
अस्वर्ग्यं लोकविद्विष्टं धर्म्म्यमप्याचरेन्न तु ॥ १२ ।
समुद्रयात्रास्वीकारः कमण्डलुविधारणम् ।
द्विजानामसवर्णासु¶ कन्यासूपयमस्तथा ॥ १३ ।
देवरेण सुतोत्पत्तिर्मधुपर्के पशोर्वधः‖ ।
मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा ॥ १४ ।
दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च ।

---

* त्रिजातय इति (ङ) ।

† स्वरूपत इति (क) ।

‡ स्वकर्म्मेति (ख) ।

§ सर्व्वकर्म्मेति (ख) ।

¶ असवर्णानामिति (ग) ।

‖ च गोर्वध इति (क), ऽपि गोरिति (ङ) ।

दीर्घकालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ ॥ १५ ।
महाप्रस्थानगमनं गोमेधञ्च तथा मखम् ।
इमान्धर्म्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः ॥ १६ ।
देशाचाराः परिग्राह्यास्तत्तद्देशीयजैर्नरैः ।
अन्यथा पतितो ज्ञेयः सर्व्वधर्म्मवहिष्कृतः ॥ १७ ।
ब्राह्मणक्षत्रियविशां शूद्राणाञ्चैव सत्तमाः ।
क्रियाः समासतो वक्ष्ये शृणुध्वं सुसमाहिताः ॥ १८ ।
दानं दद्याद्द्विजेन्द्राणां यज्ञैर्देवान्यजेत्तथा* ।
स्ववृत्त्यर्थं यजेच्चैवं† अन्यानध्यापयेत्तथा ॥ १९ ।
याजयेद्यजनेः‡ योग्यान्विप्रो नित्योदकी भवेत् ।
कुर्य्याच्च वेदग्रहणं यज्ञैर्देवान्यजेत्तथा§ ॥ २० ।
शास्त्रजीवी भवेच्चैव तथाग्नेश्च परिग्रहम् ।
ग्रावे रत्ने च¶ पारक्ये समबुद्धिर्भवेत्तथा ॥ २१ ।
सर्व्वलोकहितं कुर्य्यान्मृदुवाक्यमुदीरयेत् ।
ऋतावभिगमः पत्न्यां ब्राह्मणस्य प्रशस्यते‖ ॥ २२ ।

---

* यजेदित आर्षं, यजेतेति साधु, एवं परत्रापि ।

† वृत्त्यर्थं याजयेदेकमिति (क), याजयेदेवमिति (ख), याजयेदेव इति (ग) याजयेच्चैव इति (ङ) ।

‡ याजयेयुर्ज्जनानिति (ख) ।

§ तथाग्नेश्च परिग्रहमिति (ख), तत्रातः परं चरणद्वयं नास्ति, (क) पुस्तकेऽतः परं सार्द्धत्रिश्लोका न सन्ति ।

¶ ग्राह्यद्रव्ये चेति (ख) ।

‖ शस्यते ब्राह्मणस्य वै इति (ख), (ग), (ङ) ।

न कस्याप्यहितं ब्रूयाद्विष्णुपूजापरो भवेत् ।
दानानि दद्याद्विप्रेभ्यः* क्षत्रियोऽपि द्विजोत्तमाः† ॥ २३ ।
कुर्य्याच्च वेदग्रहणं यज्ञैर्देवान्यजेत्तथा ।
शस्त्राजीवो भवेच्चैव पालयेद्धर्म्मतो महीम् ।
दुष्टानां शासनं कुर्य्याच्छिष्टांश्च परिपालयेत् ॥ २४ ।
पाशुपाल्यञ्च वाणिज्यं कृषिश्च द्विजसत्तमाः ।
वेदस्याध्ययनञ्चैव वैश्यस्याऽपि प्रकीर्त्तितम् ॥ २५ ।
दद्याद्दानञ्च शूद्रोऽपि पाकयज्ञैर्यजेन्न च‡ ।
ब्राह्मणक्षत्रियविशां शुश्रूषानिरतो भवेत् ॥ २६ ।
ऋतुकालाभिगमनं स्वदारेषु प्रशस्यते ।
सर्व्वलोकहितैषित्वं मङ्गलं प्रियवादिता ॥
अनायासो महोत्साहस्तितिक्षानभिमानिता ।
सामान्यं सर्व्ववर्णानां मुनिभिः परिकीर्त्तितम् ॥
सर्व्वे च मुक्तिमायान्ति स्वाश्रमोचितकर्म्मणा ॥२७।२८।२९।
ब्राह्मणः क्षत्रियाचारमाश्रयेदापदि द्विजाः ।
क्षत्रियोऽपि च विड्वृत्तिमत्यापदि समाश्रयेत् ॥ ३० ।
नाश्रयेच्छूद्रवृत्तिं तु अत्यापद्यपि वै द्विजः ।

---

* विप्राणामिति बहुषु पाठः ।

† द्विजोत्तम इति (ख), (ङ) ।

‡ दद्याद्दानञ्च विप्राणां यज्ञैर्देवान्यजेत्तथेति (क), दद्याद्दानञ्च विप्रेभ्यो यज्ञैर्देवान् यजेत्तथा । कुर्य्याच्च दारग्रहणं धर्म्मांश्चैव समाचरेत् । क्रयविक्रयजैर्वापि धनैः कारुतरेण वेत्यधिकः पाठः (ख),(ग) पुस्तकयोर्दृश्यते । यजेत चेति (ग), यजेत्तथेति (ङ) ।

यद्याश्रयेद्विजो मूढ़ः स चाण्डाल इति स्मृतः॥ ३१।
ब्राह्मणक्षत्रियविशो द्विजा इति हि विश्रुताः।
चत्वारश्चाश्रमास्तेषां पञ्चमो नोपपद्यते॥ ३२।
ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्च सत्तमाः।
एते चैवाश्रमाः* प्रोक्ताः पञ्चमो नोपपद्यते† ॥ ३३।
चतुर्भिराश्रमैरेभिः साध्यते धर्म्म उत्तमः‡।
विष्णुस्तुष्यति विप्रेन्द्राः कर्म्मयोगरतात्मनाम्§ ॥ ३४।
निस्पृहाः शान्तमनसः स्वकर्म्मपरिनिष्ठिताः।
ते यान्ति परमं स्थानं नावर्त्तन्ते यतः पुनः॥ ३५।

इति श्रीवृहन्नारदीयपुराणे वर्णाश्रमविधिकथने द्वाविंशोऽध्यायः।



## त्रयोविंशोऽध्यायः।

### वर्णाश्रमाचारविधिः।

सूत उवाच।

वर्णाश्रमाचारविधिं प्रवक्ष्यामि विशेषतः।
शृणुध्वमृषयः सर्व्वे सुसमाहितचेतसः॥ १।

---

* एतएवाश्रमा इति (ग)।

† (ख) पुस्तके एष श्लोको नास्ति।

‡ सत्तमा इति (ख), उत्तमा इति (घ), (ङ)।

§ स्वधर्म्मपरिनिष्ठिता इति (क)।

यः स्वकर्म्म परित्यज्य परकर्म्म निषेवते ।
पाषण्डः स हि विज्ञेयः सर्व्वधर्म्म*वहिष्कृतः ॥ २ ।
गर्भाधानादिसंस्काराः कार्य्या मन्त्रविधानतः ।
स्त्रीणाममन्त्रतः कार्य्या यथाकालं यथाविधि ॥ ३ ।
सीमन्तं प्रथमे गर्भे चतुर्थे मासि शस्यते† ।
षष्ठे वा सप्तमे वापि अष्टमे वापि कारयेत् ॥ ४ ।
जाते पुत्रे पिता स्नात्वा‡ सचेलं जातकर्म्मसु§ ।
कुर्य्यान्नान्दीमुखं श्राद्धं¶ स्वस्तिवाचनपूर्व्वकम् ॥ ५ ।
हेम्ना वा|| चारुधान्यैर्व्वा जातश्राद्धं प्रकल्पयेत्** ।
अन्नेन†† कारयेद्यस्तु स चण्डालसमो भवेत् ॥ ६ ।
कृत्वाऽभ्युदयिकं श्राद्धं पिता पुत्रस्य वाग्यतः ।
कुर्व्वीत नामनिर्द्देशं सूतकान्ते‡‡ यथाविधि ॥ ७ ।
अस्पष्टमर्थहीनञ्च§§ अतिगुर्व्वक्षरान्वितम् ।

---

* सर्व्वकर्म्मवहिष्कृत इति (क), (ङ) ; सर्व्ववर्णवहिष्कृत इति (ग) ।

† कारयेदिति (ग) ।

‡ स्नायादिति (क) ।

§ जातकर्म्म तु इति (ख) ।

¶ नान्दीश्राद्धञ्चेति (क), (ङ) ; नान्दीश्राद्धं वै इति (घ) ।

|| हेम्ना चेति (क), हेम्नाथेति (ख), (ग) ।

** प्रकल्प्यते इति (ग) ।

†† अर्थेन कारयेद्यस्त्विति (क), अथो न कारयेद्यस्तु स च चण्डाल उच्यते इति (ख)।

‡‡ सूतकार्येति (घ) ।

§§ अर्थहीनन्त्विति (ग) ।

नाद्यान्नाम* विप्रेन्द्रास्तथा च विषमाच्चरम् ॥ ८ ।
तृतीये वत्सरे चौड़ं पञ्चमे सप्तमेऽपि वा ।
षष्ठे चैवाष्टमे वाऽपि कुर्य्याद्गृह्योक्तमार्गतः† ॥ ९ ।
दैवयोगादतिक्रान्ते गर्भाधानादिकर्म्मणि ।
कर्त्तव्यः कृच्छ्रपादो वै चौड़े वार्द्धं प्रकल्पयेत्‡ ॥ १० ।
गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ।
आषोड़शाब्दपर्य्यन्तं कालमाहुश्च गौणतः ॥ ११ ।
गर्भैकादशमेऽब्दे तु राजन्यस्योपनायनम् ।
आद्वाविंशाब्दपर्य्यन्तं कालमाहुर्विपश्चितः ॥ १२ ।
विशोपनयनं प्रोक्तं गर्भद्वादशमेव च ।
चतुर्विंशतिपर्य्यन्तं कालमाहुर्मनीषिणः ॥ १३ ।
एतत्कालावधेर्यस्य द्विजस्यातिक्रमो यदि§ ।
सावित्रीपतितं विद्यान्नालपेत्तं कदाचन ॥ १४ ।
द्विजोपनयने विप्रा मुख्यकालव्यतिक्रमे ।
द्वादशाब्दं चरेत्कृच्छ्रं पश्चाच्चान्द्रायणं चरेत्¶ ॥ १५ ।

---

* न कुर्य्यान्नामेति (ङ) ।

† बहुषु पुस्तकेषु—

तृतीये च चतुर्थे च पञ्चमे षष्ठमे तथा ।
सप्तमे चाष्टमे वापि कुर्य्याद्‌गृह्योक्तमार्गतः ॥

इति श्लोकोऽस्ति । (क) पुस्तके तु षष्ठम इत्यत्र षष्ठक इति पाठोऽस्ति ।

‡ पादकृच्छ्री वै गौणं दुर्गं प्रकल्पयेदिति (क), चौडे वर्षमिति (ख) ।

§ भवेदिति (ख) ।

¶ चान्द्रायणं तथेति (क) ।

सान्तपनद्वयञ्चैव कृत्वा कर्म्म समाचरेत् ।
अन्यथा पतितं विद्यात्कर्त्तापि ब्रह्महा भवेत् ॥ १६ ।
मौञ्जी विप्रस्य विज्ञेया धनुर्ज्या क्षत्रियस्य च ।
आवी वैश्यस्य विज्ञेया शृणुध्वमजिनन्तथा ॥ १७ ।
विप्रस्य प्रोक्तमैणेयं रौरवं क्षत्रियस्य च ।
आजं वैश्यस्य विज्ञेयं दण्डान्वक्ष्ये यथाक्रमात्* ॥ १८ ।
पालाशं ब्राह्मणस्योक्तं नृपस्यौडुम्बरन्तथा ।
वैल्वं वैश्यस्य विज्ञेयं प्रमाणं शृणुत द्विजाः ॥ १९ ।
विप्रस्य केशमानं स्याद्ाललाटं नृपस्य तु ।
नासाग्रसम्मितं दण्डं वैश्यस्याहुर्मनीषिणः† ॥ २० ।
तथा वासांसि वक्ष्यामि विप्रादीनां यथाक्रमात् ।
काषायञ्चैव माञ्जिष्ठं हारिद्रञ्च‡ प्रकीर्त्तितम् ॥ २१ ।
उपनीतो द्विजो विप्राः परिचर्य्यापरो गुरोः ।
वेदग्रहणपर्य्यन्तं निवसेद्गुरुवेश्मनि§ ॥ २२ ।
प्रातःस्नायी भवेद्वर्णी¶ समित्कुशफलादिकान् ।
गुर्व्वर्थमाहरेन्नित्यं कल्यं कल्यं मुनीश्वराः ॥ २३ ।
यज्ञोपवीतमजिनं दण्डञ्च द्विजसत्तमाः ।

---

* एषश्लोकः (ख) (घ) पुस्तकयोर्नास्ति ।

† विपश्चित इति (ख), (ग) ।

‡ हारितञ्चेति (ख) ।

§ मन्दिरमिति (ख) ।

¶ तूष्णीमिति (क) ।

नष्टे भ्रष्टे नवं मन्त्राद्धार्यं* भ्रष्टं जले क्षिपेत् ॥ २४ ।
वर्णिनो वर्त्तनं प्राहुर्भिक्षान्नेनैव केवलम् ।
भिक्षाञ्च श्रोत्रियागारादाहरेत्प्रयतेन्द्रियः ॥ २५ ।
भवत्पूर्व्वं ब्राह्मणस्य भवन्मध्यं नृपस्य च† ।
भवदन्तं विशः प्रोक्तं भिक्षयाहार एव च ॥ २६ ।
सायं प्रातरग्निकार्य्यं यथाकालं जितेन्द्रियः‡ ।
कुर्य्यात्प्रतिदिनं वर्णी ब्रह्मयज्ञञ्च तर्पणम् ॥ २७ ।
अग्निकार्य्यपरित्यक्तः पतितः प्रोच्यते बुधैः ।
ब्रह्मयज्ञविहीनश्च ब्रह्महा परिकीर्त्तितः ॥ २८ ।
देवताभ्यर्च्चनञ्चैव शुश्रूषा च परं गुरोः ।
भिक्षान्नं भोजयेन्नित्यं नैकान्नाशी§ कदाचन ॥ २९ ।
आनीय नित्यं¶ विप्राणां गृहाद्भिक्षां जितेन्द्रियः ।
निवेद्य गुरवेऽश्नीयाद्वाग्यतस्तदनुज्ञया ॥ ३० ।
मधुस्त्रीमांसलवणताम्बूलं दन्तधावनम् ।
उच्छिष्टभोजनञ्चैव दिवास्वापञ्च‖ वर्जयेत् ॥ ३१ ।
छत्रपादुकगन्धांश्च तथा माल्यानुलेपने ।

---

* धृत्वा इति (ख)।

† तु इति (ग)।

‡ २६ श्लोकः, २७ श्लोकस्य पूर्व्वार्द्धञ्च (क) (ख) पुस्तकयो र्न स्तः।

§ नैकान्नादीति (ख)।

¶ आनीयाऽनिन्द्येति (क), (ख), (ङ)।

‖ स्वप्नञ्चेति (ख), (ङ)।

जलकेलिद्यूतगीतवाद्यञ्च परिवर्ज्जयेत्* ॥ ३२ ॥
परीवादं रोषतोषं† विप्रलापं तथाञ्जनम् ।
पाषण्डजनसंयोगं‡ शूद्रसंगञ्च वर्जयेत् ॥ ३३ ।
अभिवादनशीलः स्याद्वृद्धेषु च यथाक्रमम् ।
ज्ञानवृद्धास्तपोवृद्धा वयोवृद्धा इति त्रयः ॥ ३४ ।
आध्यात्मिकानि दुःखानि निवारयति योगुरुः ।
वेदशास्त्रोपदेशेन तं पूर्व्वमभिवादयेत् ॥ ३५ ।
असावहमिति ब्रूयाद्द्विजोवै अभिवादने ।
नाभिवाद्याश्च विप्रेण क्षत्रियाद्याः कदाचन ॥ ३६ ।
नास्तिकं भिन्नमर्य्यादं कृतघ्नं ग्रामयाजकम् ।
तथा पातकिनञ्चैव कदाचिन्नाभिवादयेत्§ ॥ ३७ ।
पाषण्डं पतितं मूर्खं¶ तथा नक्षत्रपाठकम् ।
तथा पातकिनञ्चैव कदाचिन्नाभिवादयेत् ॥ ३८ ।
उन्मत्तञ्च शठं धूर्त्तं धावन्तमशुचिन्तथा ।
अभ्यक्ताङ्गशिरश्चैव जपन्तं नाभिवादयेत् ॥ ३९ ।
तथा स्नानं प्रकुर्व्वन्तं समित्पुष्पकरं तथा ।
उदपात्रधरञ्चैव भुञ्जानं नाभिवादयेत् ॥ ४० ।

---

* एष श्लोकः (ख) (घ) पुस्तकयोर्नास्ति ।

† रोषतापमिति (क), (ग) ; चोपतापमिति (ख) ।

‡ पाषण्डजनसंसर्गमिति (ग) ।

§ स्त्रियञ्च कितवञ्चैव कदाचिन्नाभिवादयेदिति (क), (ङ) ।

¶ पतितं व्रात्यमिति (ग), (ङ), ३५—३८ श्लोकाः (घ) पुस्तके न सन्ति ।

विवादशीलिनश्चण्डं रमन्तं जलमध्यगम्।
भिक्षान्नधारिणञ्चैव शयानं नाभिवादयेत्* ॥ ४१ ॥
भर्तृघ्नीं पुष्पिणीं जारां सूतिकां गर्भपातिनीम्† ।
कृतघ्नीञ्च तथा चण्डां कदाचिन्नाभिवादयेत् ॥ ४२ ॥
सभायां यज्ञशालायां देवतायतनेष्वपि‡ ।
प्रत्येकन्तु नमस्कारो हन्ति पुण्यं पुराकृतम् ॥ ४३ ॥
पुण्यक्षेत्रे पुण्यतीर्थे स्वाध्यायसमये तथा ।
प्रत्येकन्तु नमस्कारो हन्ति पुण्यं पुराकृतम्§ ॥ ४४ ॥
श्राद्धं व्रतं तथा दानं देवताभ्यर्च्चनं तथा ।
यज्ञञ्च तर्पणञ्चैव कुर्व्वन्तं नाभिवादयेत् ॥ ४५ ॥
कृतेऽभिवादने यस्तु न कुर्य्यात्प्रतिवादनम् ।
नाभिवाद्यः स विज्ञेयो यथा शूद्रस्तथैव सः ॥ ४६ ॥
प्रक्षाल्य पादावाचम्य गुरोरभिमुखः¶ सदा ।
तस्य पादौ च संगृह्य अधीयीत‖ विचक्षणः ॥ ४७ ॥
अष्टकासु चतुर्द्दश्यां प्रतिपत्पर्व्वणो**स्तथा ।

---

* एष श्लोकः (घ) पुस्तके नास्ति ।

† सूतां गर्भोपघातिनीमिति (क) ।

‡ देवतायतने तथेति (ग) ।

§ पुरातनमिति (ख) ।

¶ गुरुष्वभिरत इति (क) ।

‖ अधीयन्त इति (घ) ।

** पक्षयोरिति (क), (ख) ।

महाभरण्यां विप्रेन्द्राः श्रवणद्वादशीदिने ॥
भाद्रपदापरपक्षे द्वितीयायां तथैव च ।
शयनोत्थानद्वादश्यां श्रोत्रिये मरणं गते ॥
आषाढ़ी कार्त्तिकी चैव फाल्गुनी च द्विजोत्तमाः ।
द्वितीया शुक्लपक्षस्य ग्रामदाहे तथैव च ॥
माघस्य सप्तमी शुक्ला नवम्यश्वयुजि तथा ।
परिवेशाधिके* सूर्य्ये श्रोत्रिये गृहमागते ॥
वन्दिते ब्राह्मणे चैव प्रवृद्धे कलहे तथा ।
सन्ध्यायां गर्ज्जिते मेघे ह्यकालगर्जिते तथा† ॥
उल्काशनिप्रपाते च तथा विप्रेऽवमानिते ।
मन्वादिषु च विप्रेन्द्रा युगादौ च चतुष्टये‡ ।
नाधीयीत द्विजः कश्चित्सर्व्वकर्म्म§फलोत्सुकः ॥ ४८—५३ ।
शुक्लतृतीया वैशाखे प्रेतपक्षे त्रयोदशी ।
कार्त्तिके नवमी शुक्ला माघमासे च पूर्णिमा ।
एते युगादयः प्रोक्ता दत्तस्याक्षयकारकाः¶ ॥ ५४ ।
मन्वादींश्च प्रवक्ष्यामि शृणुध्वं सुसमाहिताः ॥ ५५ ।
अश्वयुक्शुक्लनवमी कार्त्तिके द्वादशी सिता ।

---

* परिवेशादिके इति (क) ।

† (क) पुस्तके परिवेश इत्यारभ्य सार्द्धैकः श्लोको नास्ति । सन्ध्यायामित्यर्द्धं (ख) पुस्तके नास्ति ।

‡ युगादिषु चतुर्षु च इति (ख), चतुर्ष्वपीति (ग) ।

§ सर्व्वलोक इति (घ), फलार्थिक इति (ङ) ।

¶ दत्तस्याक्षयकारिका इति (ख), (ग), (ङ) ।

तृतीया चैत्रमासस्य तथा भाद्रपदस्य च।
आषाढ़शुक्लदशमी सिता माघस्य सप्तमी।
श्रावणस्याष्टमी कृष्णा तथाषाढ़ी च पूर्णिमा।
फाल्गुनस्याप्यमावास्या* पौषस्यैकादशी† सिता।‡
कार्त्तिकी फाल्गुनी चैत्री§ ज्यैष्ठी पञ्चदशी सिता।
मन्वादयः समाख्याता दत्तस्याक्षयकारकाः¶।
द्विजैः‖ श्राद्धन्तु कर्त्तव्यं मन्वादिषु युगादिषु॥५६—५९॥
श्राद्धे निमन्त्रिते चैव ग्रहणे चन्द्रसूर्य्ययोः**।
अयनद्वितये चैव नाधीयीत द्विजोत्तमाः॥६०॥
शवानुगमने चैव आरण्यकमधीत्य च।
सूतकद्वितये चैव अनध्यायः प्रशस्यते॥६१॥
सर्पादिदर्शने चैव†† तथा भूकम्पनेऽपि च।
एवमादिषु सर्व्वेषु अनध्यायः प्रशस्यते॥६२॥

---

* फाल्गुनस्य त्वमावास्येति (क), (ग), (ङ)।

† पुष्यस्यैकादशीति (क), (ग), (ङ)।

‡ (ख) पुस्तके तृतीयेत्यारभ्य श्लोकद्वयं नास्ति।

§ चैत्रेति (क)।

¶ कारिका इति (ख), (ग), (ङ)।

‖ विप्रैरिति (ग)।

** तथा भूकम्पनेऽपि चेति (ख)।

†† (ख) पुस्तके श्राद्धे निमन्त्रित इत्यत आरभ्य सर्पादिदर्शने चैवेत्यन्तः प्रबन्धो नास्ति।

अनध्यायेष्वधीतानां प्रजाः प्रज्ञा यशः श्रियम् ।
आयुष्यं बलमारोग्यं निकृन्तति यमः स्वयम् ॥ ६३ ।
अनध्यायेषु योऽधीते तं विद्याद्ब्रह्मघातिनम्* ।
न तं सम्भाषयेद्विप्रा न तेन सह संवसेत् ॥ ६४ ।
कुण्डगोलकयोः केचिज्जड़ादीनाञ्च सत्तमाः ।
वदन्ति चोपनयनं तत्पुत्रेषु च† केचन ॥ ६५ ।
अनधीत्य तु यो वेदाञ्छास्त्राणि पठते नरः ।
शूद्रतुल्यः स विज्ञेयो नरकायोपपद्यते ॥ ६६ ।
नाचारफलमाप्नोति‡ यथा शूद्रस्तथैव सः ॥ ६७ ।
नित्यं नैमित्तिकं काम्यं यच्चान्यत्कर्म्म वैदिकम् ।
अनधीयानविप्रस्य सर्व्वं भवति निष्फलम् ॥ ६८ ।
शब्दो ब्रह्ममयो§ विष्णुर्वेदः साक्षाद्धरिः स्मृतः ।
वेदाध्यायी ततो विप्राः सर्व्वान्कामानवाप्नुयात्¶ ॥ ६९ ।

इति श्रीबृहन्नारदीये पुराणे वर्णाश्रमविधौ त्रयोविंशोऽध्यायः ।

---

* घातकमिति (क), (ख), (ग) ।

† तत्पुत्रादिष्विति (ख), (ग), (ङ) ।

‡ नैव तत्फलमाप्नोतीति (क), (ख) ; (ङ) पुस्तके एतस्मात्पूर्व्वमनधीतो द्विजो यस्तु आचारेषु प्रपद्यते इत्यधिकाङ्कं वर्त्तते ।

§ सर्व्वधर्म्ममय इति (ख) ।

¶ नवाप्नुयादिति (ख) ।

# चतुर्विंशोऽध्यायः ।

सूत उवाच ।

वेदग्रहणपर्य्यन्तं शुश्रूषानिरतो गुरोः ।
अनुज्ञातस्ततस्तेन कुर्य्यादग्निपरिग्रहम् ॥ १ ।
वेदाङ्गानि च वेदांश्च धर्म्मशास्त्राणि च* द्विजाः ।
अधीत्य गुरवे दत्त्वा दक्षिणां स भवेद्गृही ॥ २ ।
रूपलक्षणसम्पन्नां सगुणां सुकुलोद्भवाम्† ।
द्विजः समुद्वहेत्कन्यां‡ सुशीलां धर्म्मचारिणीम् ॥ ३ ।
मातृतः पञ्चमाद्दीनां पितृतः सप्तमात्तथा ।
द्विजः समुद्वहेत्कन्यामन्यथा गुरुतल्पगः ॥ ४ ।
रोगिणीञ्चैव वृत्ताक्षीं सरोगकुलसम्भवाम् ।
अतिकेशामकेशाञ्च वाचालां§ नोद्वहेद्बुधः ॥ ५ ।
कोपनां¶ वामनाञ्चैव दीर्घदेहां विरूपिणीम् ।
न्यूनाधिकाङ्गीमुन्मत्तां पिशुनां नोद्वहेद्बुधः ॥ ६ ।
स्थूलगुल्फां दीर्घजङ्घां तथैव पुरुषाकृतिम् ।
श्मश्रुव्यञ्जनसंयुक्तां विकारां‖ नोद्वहेद्बुधः ॥ ७ ।

---

* वेति (ग) ।

† सत्कुलोद्भव मिति (क) ।

‡ (ख) पुस्तकेऽत परं चत्वार पादा न सन्ति ।

§ कराला नोद्वहेदिति (ग) ।

¶ कपिलामिति (ख) ।

‖ श्मश्रुव्यञ्जनसघातामिति (ङ) । कन्यां नैवोद्वहेदिति (ख) ।

वृथाहास्यमुखीञ्चैव सदान्यगृहवासिनीम् ।
विवादशीलां भ्रमितां निष्ठुरां नोद्वहेद्बुधः ॥ ८ ।
बह्वशनीं स्थूलदन्तां स्थूलोष्ठीं घर्घरस्वराम् ।
अतिकृष्णां रक्तवर्णां धूर्त्तां नैवोद्वहेद्बुधः* ॥ ९ ।
सदा रोदनशीलाञ्च पाण्डुवर्णाञ्च कुत्सिताम् ।
श्वासकासादिसंयुक्तां निद्राशीलाञ्च नोद्वहेत् ॥ १० ।
अनर्थभाषिणीञ्चैव लोकद्वेषपरायणाम् ।
परापवादनिरतां तस्करां नोद्वहेद्बुधः† ॥ ११ ।
दीर्घनासाञ्च कितवां तनूरुहविभूषिताम् ।
खर्व्विकां‡ वकवृत्तिञ्च सर्व्वथा नोद्वहेद्बुधः ॥ १२ ।
बालभावादविज्ञातस्वभावामुद्वहेद्यदि ।
प्रगल्भामगुणां ज्ञात्वा सर्व्वथा तां परित्यजेत् ॥ १३ ।
भर्तृपुत्रेषु या नारी निष्ठुरा सर्व्वथा भवेत् ।
परानुकूलिनी§ चैव सर्व्वथा तां परित्यजेत् ॥ १४ ।
विवाहांस्तत्राष्टविधा ब्राह्माद्या मुनिसत्तमाः¶ ।
पूर्व्वः पूर्व्वो वरो ज्ञेयः पूर्व्वाभावे परः परः ॥ १५ ।

---

* (ङ) पुस्तके ८।९ श्लोकौ न स्तः ।

† नो गृह्हेद्बुध इति (क) ।

‡ गर्व्विनामिति (क), (ख) ; खर्व्वितामिति (ग), (ङ) ।

§ परार्याह्लादिनीति (घ) ; परानुकूलिनोमिति (ङ) ।

¶ एतदर्द्धं (क) पुस्तके नास्ति । विवाहाष्टमविधा इति (घ), विवाहोह्यष्टमविध इति (ङ) । तत्राष्टमित्यार्षम् ।

ब्राह्मो दैवस्तथैवार्षः* प्राजापत्यस्तथासुरः।
गान्धर्व्वो राक्षसश्चैव पैशाचो ह्यष्टमः† स्मृतः॥ १६।
ब्राह्मेणैव विवाहेन विवहेद्वै‡ द्विजोत्तमः।
दैवेनाप्यथवा कुर्य्यात्केचिदार्षं प्रचक्षते॥ १७।
प्राजापत्यादयो विप्रा विवाहाः पञ्च गर्हिताः।
अभावेषु च पूर्व्वेषु§ कुर्य्यादेवं परान् बुधः॥ १८।
यज्ञोपवीतद्वितयं सोत्तरीयञ्च धारयेत्॥ १९।
सुवर्णकुण्डले¶ चैव धौतवस्त्रद्वयं तथा।
अनुलेपनलिप्ताङ्गः क्लृप्तकेशनखः‖ शुचिः॥ २०।
धारयेद्वैणवं दण्डं सोदकञ्च कमण्डलुम्॥ २१।
उष्णीषममलं छत्रं पादुके चाप्युपानहौ।
धारयेत्पुष्पमाल्ये च** सुगन्धेः†† प्रियदर्शनः॥ २२।
नित्यमध्यायशीलश्च‡‡ यथाचारं समाचरेत्।

---

* तथा चार्षं इति (क), (ग)।

† श्चाष्टम इति (ख), (ङ), श्चाष्टमोमत इति (ग)।

‡ विवहेद्वै सर्व्वथापीति (घ)।

§ उक्तपूर्व्वेषु इति (क), ह्युक्तपूर्व्वेषु इति (ख), अभावेषु तु इति (ग)।

¶ कुण्डलञ्चैवेति (क), (ङ)।

‖ क्लृत्तकेशनख इति (ख)।

** पुष्पमाल्यञ्चेति (ङ)।

†† सुगन्ध प्रियदर्शन इति (क), (ग), सुगन्धिरिति (ङ)।

‡‡ नित्यस्वाध्यायशीलश्च इति (क), स्वाध्यायशीलः स्यादिति (ख), (ग)।

परान्नं नैव भुञ्जीत परदारांश्च वर्ज्जयेत्* ।
पादेन नाक्रमेत्† पादमुच्छिष्टं नैव लङ्घयेत् ॥ २३ ।
न संहताभ्यां कण्डूयेत्‡ बाहुभ्यामात्मनः शिरः
पूज्यदेवालयञ्चैव§ नापसव्यं व्रजेद्द्विजाः ॥ २४ ।
देवार्च्चाचमनस्नानव्रतश्राद्धक्रियासु च ।
न भवेन्मुक्तकेशश्च नैकवस्त्रधरस्तथा ॥ २५ ।
नारोहेद्दुष्टयानञ्च¶ शुष्कवादं‖ विवर्जयेत् ।
अन्यस्त्रियं न गच्छेच्च पैशुन्यं परिवर्ज्जयेत् ॥ १६ ।
नापसव्यं व्रजेद्विप्रानश्वत्थञ्च चतुष्पथम् ।
असूयां मत्सरञ्चैव दिवास्वापञ्च** वर्ज्जयेत् ॥ १७ ।
न वदेत्परपापानि स्वपुण्यं नैव कीर्त्तयेत्†† ।
स्वकं नाम‡‡ स्वनक्षत्रं मानञ्चैवापि§§ गोपयेत् ॥ १८ ।

---

* परवादं विवर्ज्जयेदिति(ख),परदारञ्च वर्ज्जयेदिति(ग),परपाकञ्च वर्ज्जयेदिति(ङ)।

† आरोहयेदिति (ख) ।

‡ न संहताभ्यां पाणिभ्यां कण्डूयेदिति (क), (ख), (ग) (ङ) ।

§ पूजने देवतानाञ्चेति (क) ।

¶ न पिबेदुष्णपानञ्चेति (ख) ।

‖ शुष्कवैरमिति (ग) ।

** स्वप्नञ्चेति (ग) ।

†† १६।१७ श्लोकौ (ख) पुस्तके न स्तः ।

‡‡ स्वधनञ्च स्वनक्षत्रमिति (ख), स्वनाम वेति (ग) ।

§§ मानञ्चैवातिगोपयेदिति (ग), मानञ्चैव भिगोपयेदिति (ङ) । मतञ्चैवापि गोपयेदिति क्वचित्पाठः ।

न दुर्ज्जनैः सह* वसेन्नाशास्त्रं शृणुयात्तथा ।
असारद्यूतगीतेषु द्विजस्तु न रतिं चरेत् ॥ १९ ।
मार्गस्थितमथोच्छिष्टं† शूद्रञ्च पतितं तथा ।
शवञ्च भिषजं स्पृष्टा‡ सचेलं स्नानमाचरेत् ॥ २० ।
चितिञ्च चितिकाष्ठञ्च यूपं चाण्डालमेव च ।
स्पृष्टा देवलकञ्चैव सचेलं स्नानमाचरेत्§ ॥ २१ ।
दीपखट्टातनुच्छायाः¶ केशवस्त्रं घटोदकम् ।
अजमार्ज्जाररेणुश्च|| हन्ति पुण्यं पुरा कृतम् ॥ २२ ।
सूर्पवातं प्रेतधूमं तथा शूद्रान्नभोजनम् ।
वृषलीपतिसङ्गञ्च दूरतः परिवर्ज्जयेत् ॥ २३ ।
असच्छास्त्राभिगमनं खादनं नखकेशयोः ।
तथैव नग्नशयनं सर्व्वथा** परिवर्ज्जयेत् ॥ २४ ।
ग्रामश्वञ्च†† सभाञ्चैव तथैव च चतुष्पथम् ।
देवतायतनञ्चैव नापसव्यं व्रजेद्द्विजाः ॥ २५ ।

---

* दुर्ज्जनै सहसंवास इति (ख) ।

† आर्द्रास्थिरुधिरोच्छिष्टमिति (ख) ।

‡ द्दष्टेति (क) ; ससुरं पात्रकं स्पृष्टा सवासा जलमाविशेदिति (ख) ।

§ सवासा जलमाविशेदिति (ख) ।

¶ प्रदीपस्य तथा छाया इति (ख) ।

|| दुग्धश्चेति (क) ।

** सर्व्वदेति (ख) ।

†† ग्रामाश्वत्थमिति (ख) ।

शिरोऽभ्यङ्गावशिष्टेन तैलेनाङ्गं न लेपयेत्*।
ताम्बूलमशुचिर्नाद्यात्तथा सुप्तं न बोधयेत् ॥ २६ ।
नाशुद्धोऽग्निं† परिचरेत्पूजाञ्च गुरुदेवयोः‡ ।
न वामहस्तेनैकेन पिबेद्वक्त्रेण वा जलम् ॥ २७ ।
न चाक्रमेद्गुरोश्छायां तदाज्ञाञ्च मुनीश्वराः ।
न निन्देद्योगिनो§ विप्रा व्रतिनोऽपि यतींस्तथा ॥ २८ ।
परस्परस्य मर्म्माणि कदाऽपि न वदेद्द्विजाः ।
दर्शे च पौर्णमास्याञ्च¶ यागं कुर्य्याद्यथाविधि ॥ २९ ।
औपासनञ्च होतव्यं सायं प्रातर्द्विजातिभिः ।
औपासनपरित्यागी सुरापीत्युच्यते बुधैः ॥ ३० ।
अयने विषुवे चैव युगादिषु चतुर्ष्वपि‖ ।
दर्शे च प्रेतपक्षे च श्राद्धं कुर्य्याद्गृही द्विजाः ॥ ३१ ।
मन्वादिषु मृताहेषु अष्टकासु** च सत्तमाः ।
नवधान्ये समायाते गृही श्राद्धं समाचरेत् ॥ ३२ ।
श्रोत्रिये गृहमायाते ग्रहणे चन्द्रसूर्य्ययोः ।

---

* न लेपनमिति (घ) ।

† नाशुद्धाग्निमिति (ख) ।

‡ पूज्याश्च गुरुदेवता इति (ख) ।

§ रोगिण इति (ख) ।

¶ पौर्णमासे चेति (ग) ।

‖ ततस्त्रिष्विति (ख) ।

** अष्टकादिष्विति (ख) ।

पुण्यक्षेत्रेषु तीर्थेषु* गृही श्राद्धं समाचरेत् ॥ ३३ ।
यज्ञो दानं तपो होमः स्वाध्यायः पितृतर्पणम् ।
वृथा भवति विप्रेन्द्रा ऊर्द्ध्वपौण्ड्रं विनाकृतम् ॥ ३४ ।
ऊर्द्ध्वपौण्ड्रञ्च तुलसीं श्राद्धे नेच्छन्ति केचन ।
वृद्धाचारः† परिग्राह्यस्तस्माच्छ्रेयोऽर्थिभिर्नरैः ॥ ३५ ।
इत्येवमादयो धर्म्माः स्मृतिमार्गेषु‡ चोदिताः ।
कार्य्या द्विजातिभिः सम्यक् सर्व्वकामफलप्रदाः ॥ ३६ ।
सदाचारपरा ये तु तेषां विष्णुः प्रसीदति ।
विष्णौ प्रसन्नतां याते किमसाध्यं द्विजोत्तमाः§ ॥ ३७ ।

इति श्रीवृहन्नारदीयपुराणे वर्णाश्रमविधिवर्णने चतुर्व्विंशोऽध्यायः।

—•—

* पुण्येष्विति (ख)।

† वृथाचार इति (घ)।

‡ स्वर्गमार्गेष्विति (ख)।

§ वदस्व मे इति (क)। एष श्लोकः (ख) पुस्तके नास्ति।

# पञ्चविंशोऽध्यायः ।

सूत उवाच ।

सदाचारविधिः ।

गृहस्थस्य सदाचारं वक्ष्यामि मुनिसत्तमाः ।
कुर्व्वतां सर्व्वपापानि नश्यन्त्येव न संशयः ॥ १ ।
ब्राह्मे मुहूर्त्ते चोत्थाय पुरुषार्थाविरोधिनीम् ।
वृत्तिं सञ्चिन्तयेद्विप्राः कृतकेशप्रसाधनः ॥ २ ।
दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।
कुर्य्यान्मूत्रं पुरीषञ्च* रात्रौ च दक्षिणामुखः ॥ ३ ।
शिरः प्रावृत्य वस्त्रेण अन्तर्धाय तृणैर्महीम् ।
वहन् काष्ठं करेणैकं तावन्मौनी भवेद्विजाः ॥ ४ ।
पथि गोष्ठे नदीतीरे तड़ाग†कूपसन्निधौ‡ ।
तथैव वृक्षच्छायायां कान्तारे वह्निसन्निधौ ॥§ ५ ।
देवालये तथोद्याने कृष्टभूमौ चतुष्पथे ।
ब्राह्मणानां समीपे च तथा गोऽश्वत्थयोषिताम्¶ ॥ ६ ।

---

* कुर्य्यान्मूत्रपुरीषे तु इति (ख), पुरीषन्तु इति (ग) ।

† तडागे इति (क) ।

‡ पाचसन्निधौ इति (ख) ।

§ एतदर्द्धं (ख) पुस्तके नास्ति ।

¶ तथा गोष्ठसमीपत इति (क), गोगुरुसन्निधाविति (ख), गोगुरुयोषिताmिति (ग) ।

तुषाङ्गारकपालेषु जलमध्ये तथैव च ।
एवमादिषु देशेषु मलमूत्रं न कारयेत् ॥ ७ ।
शौचे यत्नः* सदा कार्य्यः शौचमूलो द्विजः स्मृतः ।
शौचाचारविहीनस्य समस्तं कर्म्म निष्फलम् ॥ ८ ।
शौचं तद्द्विविधं प्रोक्तं† वाह्यमाभ्यन्तरं स्मृतम्‡ ।
मृज्जलाभ्यां वहिःशुद्धिर्भावशुद्धिस्तथान्तरम्§ ॥ ९ ।
गृहीतशिश्नश्¶ उत्थाय शौचार्थं मृत्तिकां गृहेत्‖ ।
गन्धलेपक्षयकरं शौचं कुर्य्यात्प्रयत्नतः ।
अनुच्छिष्टप्रदेशे तु शौचार्थं मृत्तिकां गृहेत्** ॥ १० ।
न मूषिकादिजनितां†† फालोत्कृष्टां‡‡ तथैव च ।
वापीकूपतड़ागेषु नाहरेद्वाह्यमृत्तिकाम् ॥ ११ ।
शौचङ्कुर्य्यात्प्रयत्नेन नादायान्तर्जले मृदम् ।
लिङ्गे मृदेका दातव्या तिस्रो वा मेढ्रयोर्द्वयम् ॥ १२ ।

---

* शौचयत्नः सदा कार्य्यं इति (ग), शौचमूला द्विजाः स्मृता इति च (ग) ।

† शौचञ्चेति (ग), तद्द्विविधं प्रोक्तमिति (क) ।

‡ तथेति (ख) ।

§ तथापरेति (ख) ।

¶ गृहीतशौचश्चोत्थायेति (क) ।

‖ गृहेदिति आर्षं, गृह्णीयादिति साधु । एवमन्यत्रापि । हरेदिति (ख), मृद-
ाहरेदिति (ग) ।

** एवं परत्रापि । हरेदिति (ख) ।

†† न च यूकादिसहितमिति (ख) ।

‡‡ हालोत्कृष्टामिति (ख) ।

अपाने पञ्च वामे तु दश सप्त तथोभयोः ।
तिस्रस्तिस्रः प्रदातव्याः पादयोर्मृत्तिकाः पृथक् ॥ १३ ।
एवं शौचं प्रकुर्व्वीत गन्धलेपापनुत्तये ।
एतच्छौचं गृहस्थस्य द्विगुणं ब्रह्मचारिणाम् ॥ १४ ।
त्रिगुणन्तु वनस्थानां यतीनान्तु चतुर्गुणम् ।
स्वग्रामे* पूर्णमाचारं पथ्यर्द्धं† मुनिसत्तमाः ॥ १५ ।
आतुरे नियमो नास्ति महापदि तथैव च ॥ १६ ।
गन्धलेपक्षयकरं शौचं कुर्य्यात्प्रयत्नतः‡ ।
स्त्रीणामनुपनीतानां गन्धलेपक्षयावधि§ ॥ १७ ।
व्रतस्थानाञ्च¶ सर्व्वेषां यतिवच्छौचमिष्यते ।
विधवानाञ्च विप्रेन्द्रा एवं शौचं प्रकीर्त्तितम् ॥ १८ ।
एवं शौचञ्च निर्व्वर्त्त्य पश्चाद्वै सुसमाहितः ।
प्राङ्मुखोदङ्मुखो वापि‖ ह्याचामेत्प्रयतेन्द्रियः ॥ १९ ।
त्रिश्चतुर्व्वापि चेदापो गन्धफेनादिवर्ज्जिताः ।
द्विर्मार्जयेत्कपालञ्च त्रयेणौष्ठौ च सत्तमाः ॥ २० ।

---

* स्वाश्रमे इति (ग) ।

† यथार्त्तमिति (घ) ।

‡ कुर्व्वीत सर्व्वत इति (ख) । एतदर्द्धं (ग) पुस्तके नास्ति ।

§ क्षयोविधिरिति (ख) ।

¶ व्रतस्थानान्तु इति (ग) ।

‖ आदाविति (क) ।

तर्ज्जन्यङ्गुष्ठयोगेन नासारन्ध्रद्वयं स्पृशेत्* ।
अङ्गुष्ठानामिकाभ्याञ्च नेत्रश्रोत्रे यथाक्रमम् ॥ २१ ।
कनिष्ठाङ्गुष्ठयोगेन नाभिदेशं स्पृशेद्बुधः† ।
तलेनोरःस्थलञ्चैव अङ्गुल्यग्रैः शिरः स्पृशेत् ॥ २२ ।
तलेन वाङ्गुल्यग्रैर्व्वा स्पृशेदंसौ विचक्षणः ।
एवमाचम्य विप्रेन्द्राः शुद्धिमाप्नोत्यनुत्तमाम् ॥ २३ ।
ततः स्नानं प्रकुर्व्वीत‡ मार्ज्जनं तिलतर्पणम् ।
ततः सन्ध्यामुपासीत गायत्र्यार्घ्यं रवेः क्षिपेत् ॥ २४ ।
गायत्रीञ्च जपेत्प्रातस्तिष्ठन्नासूर्य्यदर्शनात्§ ।
तथैव सायमासीनो जपेदाऋक्षदर्शनात् ॥ २५ ।
उपास्य सन्ध्यां मध्याह्ने क्षिपेदर्घ्यञ्च¶ पूर्व्ववत् ।
गायत्रीञ्च जपेत्सम्यक् तिष्ठन्नासीन एव वा ॥ २६ ।
प्रातर्मध्यन्दिने चैव गृहस्थः स्नानमाचरेत् ।
ब्रह्मयज्ञं प्रकुर्व्वीत‖ दर्भपाणिर्मुनीश्वराः ॥ २७ ।
वेदोदितानि कर्म्माणि** प्रमादादकृतानि वै ।

---

* (क) पुस्तकेऽतःपरं पादत्रयं नास्ति । तलेनोष्ठाविति (ख), (ग) ।

† द्विजा इति (ख) ।

‡ प्रकुर्व्वन्तीति (ख) ।

§ तिष्ठन्नासीन एव च इति (क) ।

¶ सूर्य्यञ्च पूर्व्ववदिति (क) ।

‖ ब्रह्मचर्य्यञ्च कुर्व्वीतेति बहुषु पाठः ।

** कार्य्याणीति (ख) ।

सर्व्वेष्वाः प्रथमे यामे तानि कुर्य्याद्यथाक्रमम्* ॥ २८ ।
नोपास्ते यो द्विजः सन्ध्यां धूर्त्तो मर्त्त्यो ह्यनापदि ।
पाषण्डः स हि विज्ञेयः सर्वकर्म्म†वहिष्कृतः ॥ २९ ।
यस्तु सन्ध्यादिकर्म्माणि कूटयुक्तिविशारदः ।
परित्यजति तं विद्यान्महापातकिनां वरम् ॥ ३० ।
ये द्विजा अभि‡भाषन्ते त्यक्तसन्ध्यादिकर्म्मणाम् ।
ते यान्ति नरकान् घोरान्यावदाचन्द्रतारकम् ॥ ३१ ।
देवार्च्चनं तथा कुर्य्याद्देश्वरदेवं यथाविधि ।
आयातमतिथिं सम्यग्गन्धाद्यैश्च§ प्रपूजयेत् ॥ ३२ ।
वक्तव्या मधुरा वाणी अतिथिष्वागतेषु वै ।
जलान्नकन्दमूलैर्व्वा गृही यानेन¶ वार्च्चयेत् ॥ ३३ ।
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्त्तते ।
स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥ ३४ ।
अज्ञातगोत्रनामानमन्यग्रामादुपागतम् ।
विपश्चितोऽतिथिं प्राहुर्विष्णुवत्तं‖ प्रपूजयेत् ॥ ३५ ।

---

* अतन्द्रित इति (ग) ।

† सर्व्ववर्णेति (ग) ।

‡ अपीति (ख) ।

§ अर्हणाद्यैरिति (ख) ।

¶ गृही दानेन वेति (क), (ख) ।

‖ विष्णुवर्णमिति (क), विष्णुभक्तमिति (ख) ।

स्वग्रामवासिनं लेकं* श्रोत्रियं विष्णुतत्परम्।
अनाथं† प्रत्यहं विप्रमुद्दिश्य स्वपितॄन्यजेत्॥ ३६।
पञ्चयज्ञपरित्यागी ब्रह्महेत्युच्यते बुधैः।
कुर्य्यादहरहस्तस्मात्पञ्च यज्ञान् प्रयत्नतः॥ ३७।
देवयज्ञो भूतयज्ञः पितृयज्ञस्तथैव च।
नृयज्ञो ब्रह्मयज्ञश्च पञ्च यज्ञाः प्रकीर्त्तिताः॥ ३८।
भृत्यमित्रादिसंयुक्तः स्वयं भुञ्जीत वाग्यतः।
द्विजो नाभोज्यमश्नीयात्पात्रं नैव परित्यजेत्॥ ३९।
संस्थाप्य चासने‡ पादौ वस्त्रार्द्धं परिधाय वा।
मुखेन§ धमितं भुक्त्वा सुरापीत्युच्यते बुधैः॥ ४०।
खादितान्नं पुनः खादेन्मोदकानि फलानि वै।
प्रत्यक्षलवणञ्चैव गोमांसाशी निगद्यते॥ ४१।
आपोशाने चाचमने पेयद्रव्येषु च द्विजः।
शब्दं न कारयेद्विप्राः कुर्य्याच्चेन्नारकी भवेत्॥ ४२।
पथ्यमन्नं प्रभुञ्जीत शास्यतोऽन्नं न कुत्सयेत्।
ततस्त्वाचम्य विप्रेन्द्राः¶ शास्त्रचिन्तापरो भवेत्॥ ४३।
रात्रावपि यथाशक्त्या शयनासनभोजनैः।

---

* श्लोकमिति (ख)।

† अन्नादौ इति (ख)।

‡ ह्यासने इति (ख)।

§ चन्नेनेति (ख)।

¶ (ख) पुस्तकेऽतः परं एकः श्लोको नास्ति।

कन्दमूलफलैर्वापि चायातमतिथिं यजेत् ॥ ४४ ।
एवं गृही सदाचारं कुर्य्यात्प्रतिदिनं बुधाः ।
यद्याचार*परित्यागी प्रायश्चित्तीयते ध्रुवम् ॥ ४५ ।
दूषितां† स्वतनुं दृष्ट्वा पलिताद्यैश्च सत्तमाः ।
पुत्रेषु भार्य्यां निक्षिप्य‡ वनं गच्छेत्सहैव वा ॥ ४६ ।
भवेत्त्रिषवणस्नायी नखश्मश्रुजटाधरः ।
तृणशायी ब्रह्मचारी पञ्चयज्ञपरायणः ॥ ४७ ।
फलमूलाशने नित्यं स्वाध्यायनिरतस्तथा ।
दयावान्सर्व्वभूतेषु नारायणपरायणः ॥ ४८ ।
वर्ज्जयेद्ग्रामजातानि पुष्पाणि च फलानि च ।
अष्टौ ग्रासांश्च भुञ्जीत न कुर्य्याद्रात्रिभोजनम् ॥ ४९ ।
अभ्यङ्गं वन्यतैलेन वानप्रस्थः समाचरेत् ।
व्यवायं वर्ज्जयेच्चैव निद्रालस्यञ्च वर्ज्जयेत् ॥ ५० ।
मृषावादं§ परीवादं मिथ्यावादञ्च वर्ज्जयेत् ।
शङ्खचक्रगदापाणिं नित्यं नारायणं स्मरन् ॥ ५१ ।
वानप्रस्थः प्रकुर्व्वीत तपश्चान्द्रायणादिकम् ।
सहेत शीततापादि वह्निं परिचरेत्सदा ॥ ५२ ।

---

* अथाचारेति (ख) ।

† दुःखितामिति (ख) ।

‡ पुत्रे भार्य्यां विनिक्षिप्येति (ख) ।

§ परिवादं परीवादमिति (क) । एष श्लोकः (ख) पुस्तके नास्ति ।

यदा मनसि* वैराग्यं जातं सर्व्वेषु जन्तुषु† ।
तदैव संन्यसेद्विद्वानन्यथा पतितो भवेत् ॥ ५३ ।
वेदान्ताभ्यासनिरतः‡ शान्तो दान्तो जितेन्द्रियः ।
निर्द्वन्द्वो निरहङ्कारो निर्म्ममः सर्व्वदा भवेत् ॥ ५४ ।
समादिगुणनिर्युक्तः कामक्रोधविवर्ज्जितः ।
नग्नो वा जीर्णकौपीनो भवेन्मुण्डो यती द्विजः ।
समः शत्रौ च मित्रे च तथा मानाऽपमानयोः ॥ ५५ ।
एकरात्रं वसेद्ग्रामे त्रिरात्रं नगरे वसेत् ।
भैक्ष्येण वर्त्तयेन्नित्यमेकान्नाशी§ भवेद्यतिः ॥ ५६ ।
अनिन्दितद्विजगृहे व्यङ्गारे भुक्तवर्ज्जिते ।
विवादरहिते चैव भिक्षार्थं पर्य्यटेद्यतिः ॥ ५७ ।
भवेत्त्रिसवनस्नायी नारायणपरायणः ।
जपेच्च प्रणवं नित्यं यतात्मा विजितेन्द्रियः ॥ ५८ ।
नैकान्नाशी भवेद्यस्तु कदाचिल्लम्पटो यतिः ।
तस्य वै निष्कृतिर्नास्ति प्रायश्चित्तशतैरपि ॥ ५९ ।
विप्रा यदि यतिर्लिप्सुः¶ प्रवृत्त‖दम्भको भवेत् ।

* समन्तु इति (क)।

† वस्तुषु इति (क), (ख)।

‡ वेदाभ्यासेषु निरत इति (क)।

§ नैकान्नादीति (ख)।

¶ दौर्भाग्यादिति (क)।

‖ प्रवृद्धदण्डक इति (ङ)। लोभात्प्रवृत्तदम्भक इति (ख) दण्डक इति (क)।

स चण्डालसमो ज्ञेयो वर्णाश्रमविगर्हितः ॥ ६० ॥
आत्मानं चिन्तयेद्देवं नारायणमनामयम् ।
निर्द्वन्द्वं निर्म्मम शान्तं मायावीत*ममत्सरम् ॥ ६१ ॥
अव्ययं परिपूर्णञ्च सदानन्दैकविग्रहम् ।
ज्ञानस्वरूपममलं परं ज्योतिः सनातनम् ॥ ६२ ॥
अविकारमनाद्यन्तं जगच्चैतन्यकारणम् ।
निर्गुणं परमं ध्यायेदात्मानं परमात्परम् ॥ ६३ ॥
पठेदुपनिषद्वाक्यं वेदार्थांश्चैव चिन्तयेत् ।
सहस्रशीर्षं देवेशं सदा ध्यायेज्जितेन्द्रियः ॥ ६४ ॥
एवं ध्यानपरो यस्तु यतिर्विगतमत्सरः ।
स याति परमानन्दं परं ब्रह्म† सनातनम् ॥ ६५ ॥‡
इत्येवमाश्रमाचारान्यः करोति द्विजः क्रमात् ।
स याति परमं स्थानं यत्र गत्वा न शोचति ॥ ६६ ॥
वर्णाश्रमाचाररताः सर्व्वपापविमोचिताः ।
नारायणपरा यान्ति तद्विष्णोः परमं पदम् ॥ ६७ ॥

इति श्रीबृहन्नारदीयपुराणे सदाचारवर्णने पञ्चविंशोऽध्यायः ।

———०———

* मायातीतमिति (क) ।

† परज्योतिरिति (क) ।

‡ (क) पुस्तकेऽतः परं सूत उवाच इति पाठोवर्त्तते ।

# अथ षड्विंशोऽध्यायः ।

## श्राद्धविधिः ।

सूत उवाच ।

शृणुध्वमृषयः सर्व्वे श्राद्धस्य विधिमुत्तमम् ।
यच्छ्रुत्वा* सर्व्वपापेभ्यो मुच्यते नाऽत्र संशयः ॥ १ ।
विप्रः क्षयाह्नः पूर्व्वेद्युः स्नात्वा त्वेकाशनो भवेत् ।
अधःशायी ब्रह्मचारी निशि विप्रान्निमन्त्रयेत् ॥ २ ।
दन्तधावनताम्बूलं तैलाभ्यङ्गं तथैव च ।
स्वाध्यायञ्च परान्नानि श्राद्धकर्त्ता विवर्ज्जयेत् ॥ ३ ।
अध्वानं कलहं क्रोधं व्यवायञ्च बुधस्तथा ।
श्राद्धकर्त्ता च भोक्ता च दिवास्वापञ्च† वर्ज्जयेत् ॥ ४ ।
श्राद्धे निमन्त्रितो यस्तु व्यवायं कुरुते यदि ।
ब्रह्महत्यामवाप्नोति नरकायोपपद्यते ॥ ५ ।
श्राद्धे नियोजयेद्विप्रं श्रोत्रियं विष्णुतत्परम् ।
यथार्थाचारनियतं‡ प्रसन्नं§ सुकुलोद्भवम् ॥ ६ ।
रागद्वेषविहीनञ्च पुराणार्थविशारदम् ।¶

---

* यच्छ्रुत्वेति (घ) ।

† स्वप्नञ्चेति (क) ।

‡ तथा त्वाचारनियतमिति (ख), यथा स्वाचारनिरतमिति (ग), (ङ) ।

§ प्रशान्तमिति (क), (ख), (ङ), प्रशान्तं सत्कुलोद्भवमिति (ग) ।

¶ (क) पुस्तके तृतीयचतुर्थचरणौ न स्तः ।

त्रिमधुं त्रिसुपर्णञ्च सर्व्वभूतदयापरम् ॥ ७ ।
देवपूजारतञ्चैव* स्मृतितत्त्वविशारदम् ।
वेदार्थतत्त्वसम्पन्नं† सर्व्वलोकहिते रतम् ॥ ८ ।
कृतज्ञं गुणसम्पन्नं गुरुशुश्रूषणे रतम् ।
परोपदेशनिरतं शास्त्रार्थकथनैस्तथा‡ ।
एते नियोजितव्या वै श्राद्धे विप्रा मुनीश्वराः ॥ ९ ।
श्राद्धे वर्ज्यान् प्रवक्ष्यामि शृणुध्वं गदतो मम ।
न्यूनाङ्गा अधिकाङ्गाश्च प्रायशो§ रोगिणस्तथा ॥ १० ।
कुष्ठी च कुनखी चैव लम्पटश्च¶ क्षतव्रतः‖ ।
नक्षत्रपाठजीवी च तथाच शवदाहकः** ॥ ११ ।
कुवादी†† परिवेत्ता च तथा देवलकश्च यः‡‡ ।
निन्दको मर्षणो धूर्त्तस्तथैव ग्रामयाजकः§§ ॥ १२ ।

---

* देवपूजापरं नित्यमिति (ख), देवपूजापरञ्चैवेति (ग) ।

† वेदान्ततत्त्वसम्पन्नमिति (क) ।

‡ सच्छास्त्रकथनैस्तथेति (क), (ख), (ग) ।

§ कदर्या इति (ख), रोमशा इति (ग) ।

¶ लम्बकर्ण इति (क), (ग), (ङ) ।

‖ कर्णसूचक इति (ख) ।

** ग्रामयाजक इति (ख) ।

†† विवादीति (क) ।

‡‡ तथा देवलकः खलः इति (क), (ग), शठ इति (ख) ।

§§ ग्रामदाहक इति (ख) ।

असच्छास्त्राभि*निरतः परान्ननिरतस्तथा।
वृषलीसूतिपोष्टा च वृषलीपतिरेव च॥ १३।
कुण्डश्च गोलकश्चैव अयाज्यानाञ्च याजकः।
दण्डाचारी वृथामुण्डी अन्यस्त्रीधनतत्परः॥ १४।
विष्णुभक्तिविहीनश्च शिवभक्तिपराङ्मुखः।
वेदविक्रयणश्चैव स्मृतिविक्रयिणस्तथा॥ १५।
व्रतविक्रयिणश्चैव मन्त्रविक्रयिणस्तथा†।
गायकाः‡ काव्यकर्त्तारो भिषक्शास्त्रोपजीविनः॥ १६।
वेदनिन्दापराश्चैव विप्रनिन्दापरास्तथा§।
नित्यं राजोपसेवी च कृतघ्नः कितवस्तथा॥ १७।
सदामानपरश्चैव द्यूतसेवापरायणाः¶।
मिथ्याभिवादिनश्चैव ग्रामारण्यप्रदाहकः॥ १८।
तथातिकामुकश्चैव तथैव रसविक्रयी।
कूटयुक्तिरतश्चैव‖ श्राद्धे वर्ज्याः प्रयत्नतः॥ १९।
निमन्त्रयीत पूर्व्वेद्युस्तस्मिन्नेव दिनेऽथवा।
निमन्त्रितो भवेद्विप्रो ब्रह्मचारी जितेन्द्रियः॥ २०।

---

* असच्छास्त्रार्थेति (ग)।

† (क), (घ) पुस्तकयोः अयाज्येत्यारभ्य एतदन्तः पाठ. पतितः।

‡ गायना इति (ख)।

§ परनिन्दापराश्चैव द्यूतायनपरायणा इति (ख), तत्र परः श्लोको नास्ति।

¶ ग्रामारण्यप्रदाहक इति (क), तत्रातः परं चरणद्वयं नास्ति।

‖ पराश्चैवेति बहुषु पाठः।

श्राद्धे चणस्तु कर्त्तव्यः प्रशस्तश्चेति सत्तमाः ।
निमन्त्रयेद्द्विजं प्राज्ञं दर्भपाणिर्जितेन्द्रियः ॥ २१ ।
ततः प्रातः समुत्थाय काल्यं कर्म्म* समाप्य च ।
श्राद्धं समाचरेद्विद्वान् काले कुतपसंज्ञके† ॥ २२ ।
दिवसस्याष्टमे भागे यदा मन्दायते रविः ।
स कालः कुतपो नाम पितॄणां दत्तमक्षयम् ॥ २३ ।
अपराह्णः पितॄणान्तु दत्तः कालः स्वयम्भुवा ।
तत्काल एव दातव्यं कव्यं तस्माद्‡द्विजोत्तमैः ॥ २४ ।
यत्कव्यं दीयते विप्रैरकाले मुनिसत्तमाः ।
राक्षसं तद्धि विज्ञेयं पितॄणां नोपसर्पति ॥ २५ ।
कव्यं दत्तन्तु§ सायाह्ने राक्षसं¶ तद्भवेद्ध्रुवम् ।
दाता नरकमाप्नोति भोक्ता च नरकं व्रजेत् ॥ २६ ।
क्षयाहस्य तिथिर्विप्रा यदि खण्डतिथिर्भवेत्‖ ।
व्याप्तापराह्णिकायान्तु श्राद्धं कार्य्यं विजानता ॥ २७ ।
क्षयाहस्य तिथिर्या तु अपराह्णद्वये यदि ।
पूर्व्वा क्षये तु कर्त्तव्या वृद्धौ कार्य्या तथोत्तरा ॥ २८ ।

---

* काल्यं कर्म्मेति (ख) ।
† कुतपसंज्ञिते इति (ख) ।
‡ तस्मै इति (घ) ।
§ दत्तं कव्यन्त्विति (क), कव्यं दत्तञ्चेति (ङ) ।
¶ तामसं तद्भवेदिति (ख) ।
‖ यदि युक्ततिथिर्भवेदिति (ख) ।

मुहूर्त्तद्वितयं पूर्व्वदिने स्यादपरेऽहनि ।
तिथिः सायाह्नगा तत्र परा* काव्यस्य विश्रुता ॥ २९ ।
केचित्पूर्व्वदिनं† प्राहुर्मुहूर्त्तद्वितये सति ।
नैतन्मतं हि सर्व्वेषां काव्यदाने मुनीश्वराः ॥ ३० ।
निमन्त्रितेषु विप्रेषु मिलितेषु द्विजोत्तमाः ।
प्रायश्चित्तविशुद्धात्मा तेभ्योऽनुज्ञां समाचरेत् ॥ ३१ ।
श्राद्धार्थं समनुज्ञातो विप्रान् भूयो निमन्त्रयेत् ।
उभौ च विश्वेदेवार्थं पित्रर्थं त्रीन्‡ यथाविधि ॥ ३२ ।
देवतार्थञ्च पित्रर्थमेकैकं वा निमन्त्रयेत् ।
श्राद्धार्थं समनुज्ञातो मण्डलं कारयेद्द्वयम्§ ॥ ३३ ।
चतुरस्रं ब्राह्मणस्य त्रिकोणं क्षत्रियस्य च ।
वैश्यस्य वर्त्तुलं ज्ञेयं शूद्रस्याभ्युक्षणं भवेत् ॥ ३४ ।
ब्राह्मणानामभावे तु भ्रातरं पुत्रमेव च ।
आत्मानं वा नियुञ्जीत न विप्रं वेदवर्जितम् ॥ ३५ ।
प्रक्षाल्य विप्रपादांश्च आचान्तानुपवेश्य च ।
यथावदर्च्चनं¶ कुर्य्यात्परं नारायणं प्रभुम् ॥ ३६ ।

---

* यत्रेति (क), या स्यादिति (ख) ।
† पूर्व्वदिने इति (घ) ।
‡ पित्रे त्रीणीति (क), (घ) ।
§ कारयेत्त्रयमिति (क), (ङ) ।
¶ यथार्च्चनं तत इति (ग) ।

ब्राह्मणानान्तु मध्ये तु* द्वारदेशे च सत्तमाः ।
अपहता इत्युच्चार्य्य कर्त्ता तु विकिरेत्तिलान्† ॥ ३७ ।
यवैर्दर्भैश्च विश्वेषां देवानामिदमासनम् ।
दत्त्वेति भूयोदद्याच्च देवेचणप्रतीचणम्‡ ॥ ३८ ।
अर्घ्यासनयोः षष्ठी द्वितीयावाहने स्मृता ।
अन्नदाने चतुर्थी स्याच्छेषाः सम्बुद्धयः स्मृताः ॥ ३९ ।
आसाद्य पात्रं द्वितयं दर्भशाखासमन्वितम् ।
तत्पात्रे सेचयेत्तोयं शन्नोदेवीत्यृचा द्विजः ॥ ४० ।
यवोऽसीति यवान्चिप्ता गन्धपुष्पैः प्रपूजयेत्§ ।
आवाहयेत्ततो देवान्विश्वेदेवास इत्यृचा ॥ ४१ ।
या दिव्या इति मन्त्रेण दद्यादर्घ्यं¶ समाहितः ॥ ४२ ।
गन्धैश्च पत्रपुष्पैश्च धूपदीपैश्च सत्तमाः‖ ।
वासोविभूषणैश्चैव यथाविभवमर्च्चयेत्** ॥ ४३ ।

---

* ब्राह्मणानाञ्च मध्ये चेति बहुषु पाठः ।

† कर्त्ता भुवि किरेत्तिलानित्यपि क्वचित् पाठः ।

‡ दत्ते च भूयो दद्याच्च दैवे हव्यं वहेत्तत इति (क), (ङ) ।
दत्ते तु भूयो दद्याच्च पितॄणां तदनन्तरमिति (ख) ।
दत्त्वेति भूयो दद्याच्च देवेचण इति चणमिति (ग) ।

§ प्रपूज्य चेति (ख), (ग), (ङ) ।

¶ कुर्य्यादर्घमिति (क), दद्यादर्घञ्च पूर्व्ववदिति (ङ) ।

‖ यजेत्तत इति (ख) ।

** एतदर्द्धं (क) पुस्तके नास्ति ।

देवैश्च समनुज्ञातो यजेत्पितृगणांस्तथा* ।
तिलसंयुक्तदर्भैश्च दद्यात्तेषां तथासनम् ॥ ४४ ।†
पात्राण्यासादयेत्त्रीणि अर्घ्यार्थं पूर्ववद्द्विजः ।
शन्नोदेव्या जलं क्षिप्त्वा तिलोऽसीति तिलं क्षिपेत् ॥ ४५ ।
उशन्त इत्यृचावाह्य पितॄन् विप्रः समाहितः ।
या दिव्या इति मन्त्रेण दद्यादर्घ्यञ्च पूर्ववत् ॥ ४६ ।
गन्धैश्च पत्रपुष्पैश्च धूपदीपैश्च सत्तमाः ।
वासोविभूषणैश्चैव यथाविभवमर्चयेत् ॥ ४७ ।
ततोऽन्नग्रासमादाय‡ घृतयुक्तं विचक्षणः ।
अग्नौकरिष्ये इत्युक्त्वा तेभ्योऽनुज्ञां समाहरेत् ॥ ४८ ।
करवै करवाणीति विप्रोक्त्वा ब्राह्मणैर्द्विजाः ।
कुरुष्व क्रियताञ्चेति कुरु चेत्याहृतं§ द्विजाः ॥ ४९ ।
औपासनाग्निमाधाय स्वगृह्योक्तविधानतः ।
सोमाय पितृमते स्वाहा¶ नम इति च सत्तमाः ।
अग्नये कव्यवाहनाय स्वाहा नम एव च‖ ।
स्वधान्तेनापि वा विप्रा जुहुयात्पितृयज्ञवत् ॥ ५०।५१ ।

---

* यजेदिति आर्षं, यजेतेति साधु ।

† (ख), (ग), (ङ) पुस्तकेषु ४४—४६ श्लोका न सन्ति ।

‡ ततोऽनुज्ञां समादायेति (क), (ग), (घ) पुस्तकेषु पाठः ।

§ कुरुतेत्याहरेद्द्विजा इति (ग) । (ख) पुस्तके एतदर्द्धं नास्ति ।

¶ (ख) पुस्तके स्वधेति पाठः, एवं परत्रापि ।

‖ स्वधा नम इति क्रमात्स्वाहान्तेनापीति (ग) ।

आभ्यामेवाहुतिभ्याञ्च पितरस्तृप्तिमाप्नुयुः ।*
अग्न्यभावे तु विप्रस्य पाणौ होमो विधीयते ॥ ५२ ।
यथाचारं प्रकुर्व्वीत पाणावग्नौ च वा द्विजाः ॥ ५३ ।
नष्टाग्निर्दूरभार्य्यश्चेत्पार्वणे समुपस्थिते ।
सन्धायाग्निं ततः कार्य्यं कृत्वा तं विसृजेत्कृती ॥ ५४ ।
यद्यग्निर्दूरगो विप्राः पार्व्वणे समुपस्थिते ।
ऋत्विग्भिः कारयेच्छ्राद्धं साग्निकैर्विधिवद्द्विजाः ॥ ५५ ।
क्षयाहदिवसे प्राप्ते स्वस्याग्निर्दूरगो यदि ।
तदैव भ्रातरस्तत्र लौकिकाग्निरिति स्थितिः ॥ ५६ ।
औपासनाग्नौ दूरस्थे समीपे भ्रातरि स्थिते ।
यद्यग्नौ जुहुयाद्वापि पाणौ वा स हि पातकी ॥ ५७ ।
औपासनाग्नौ दूरस्थे केचिदिच्छन्ति सत्तमाः ।
पाणावेव च होतव्यमिति† तन्न समञ्जसम् ॥ ५८ ।
प्राचीनावीतिना होमः कार्य्योऽग्नौ द्विजसत्तमाः ।
तच्छेषं विप्रपात्रेषु विकिरेत्संस्मरन् हरिम् ॥ ५९ ।
भक्ष्यैर्भोज्यैश्च खाद्यैश्च लेह्यैर्विप्रान् प्रपूजयेत् ।
अन्नत्यागं ततः कुर्य्यादुभयत्र समाहितः ॥ ६० ।
आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।
ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥ ६१ ।

---

* (ग) पुस्तकेऽत्र पाठक्रमविपर्य्ययो लक्ष्यते, केचित् पूर्व्वपरिहृताः श्लोका अत्रैव पठिताः ।

† प्रहोतव्यमिति (ग) । (ख) पुस्तके एतदर्द्धं परश्लोकश्च न स्तः ।

इति संप्रार्थयेद्देवान्ये देवा स ऋचाऽनुवै* ।
तथा संप्रार्थयेद्विद्वान्ये चेति ऋचा पितॄन् ॥ ६२ ।
अमूर्त्तानां समूर्त्तानां पितॄणां दीप्ततेजसाम् ।
नमस्यामि सदा तेषां ध्यायिनां† योगचक्षुषाम् ॥ ६३ ।
एवं पितॄन्नमस्कृत्य नारायणपरायणाः ।
दत्तं हविश्च तत्कर्म‡ विष्णवे च समर्पयेत् ॥ ६४ ।
ततस्ते ब्राह्मणाः सर्व्वे भुञ्जीरन्वाग्यता द्विजाः ।
हसते रोदते घोरं राक्षसं तद्भवेद्धविः ॥ ६५ ।
यथाचारं प्रदेयञ्च मधुमांसादिकं तथा ।
पाकादि न प्रशंसेरन्वाग्यता धृतभाजनाः ॥ ६६ ।
यदि पात्रं त्यजेयुस्ते ब्राह्मणाः श्राद्धभोजिनः ।
श्राद्धे हन्ता स विज्ञेयो नरकायोपपद्यते ॥ ६७ ।
भुञ्जानेषु च विप्रेषु चान्योन्यं संस्पृशेद्यदि ।
तदन्नमत्यजन् भुक्त्वा गायत्र्यष्टशतं जपेत् ॥ ६८ ।
भुञ्जमानेषु§ विप्रेषु कर्त्ता श्राद्धपरायणः ।
स्मरन्नारायणं देवमनन्तमपराजितम् ।
रक्षोघ्नान्वैष्णवांश्चैव पैतृकांश्च विशेषतः ।
जपेच्च पौरुषं सूक्तं नाचिकेतत्रयन्तथा ॥ ६९।७० ।

---

* ये देवा मानुवाचयेदिति (ग) ।

† ऋषीणां इति (क), ध्यानिनामिति (ख), (ङ) ।

‡ यत्कर्म्मेति क्वचित्पाठः ।

§ आर्षः प्रयोग., भुञ्जानेष्विति साधु ।

त्रिमधुस्त्रिसुपर्णांश्च पावमानीर्यजूंषि च ।
सामान्यपि तथोक्तानि वदेत्पुण्यकथास्तथा ॥ ७१ ।
इतिहासपुराणानि धर्म्मशास्त्राणि चैव हि ।
भुञ्जीरन् ब्राह्मणा यावत्तावदेव जपेत्* द्विजाः ॥ ७२
ब्राह्मणेषु च भुक्तेषु विकिरेन्निक्षिपेत्तथा ।
शेषमन्नं वदेच्चैव मधुसूक्तञ्च वै जपेत् ॥ ७३ ।
स्वयञ्च पादौ प्रक्षाल्य सम्यगाचम्य पण्डिताः ।
आचान्तेषु च विप्रेषु पिण्डं निर्व्वापयेत्ततः ॥ ७४ ।
स्वस्तिवाचनकं कुर्य्यादक्षय्योदकमेव च ।
दत्त्वा समाहितः कुर्य्यात्कृत्वा† गोत्राभिवादनम् ।
अचालयित्वा पात्रन्तु स्वस्ति कुर्व्वन्ति ये द्विजाः ।
वत्सरं पितरस्तेषां भवन्त्युच्छिष्टभोजिनः ॥ ७५।७६ ।
दातारो नो विवर्द्धन्तामित्याद्यैः स्मृतिभाषितैः ।
आशीर्व्वादो भवेत्तेभ्यो‡ नमस्कारं चरेत्ततः ॥ ७७ ।
दद्याच्च दक्षिणां शक्त्या ताम्बूलं गन्धसंयुतम् ।
न्युब्जपात्रमथानीय स्वधाकारमुदीरयेत् ॥ ७८ ।
वाजे वाजे इति ऋचा पितॄन्देवान्विसर्ज्जयेत् ।
भोक्ता च श्राद्धकृत्तस्यां रजन्यां मैथुनं त्यजेत् ॥ ७९ ।
तथा स्वाध्यायमध्वानं प्रयत्नेन विवर्ज्जयेत् ॥ ८० ।

---

* भुञ्जते ब्राह्मणा यावत्तावदेव वदेदिति (ङ) ।

† तथेति (ख) ।

‡ आशीर्व्वादं लभेत्तेभ्य इति (ख) ।

अध्वगश्चातुरश्चैव विहीनश्च धनैस्तथा।
आमश्राद्धन्तु कुर्व्वीत होमा वा द्विजसत्तमाः॥ ८१।
द्रव्याभावे द्विजाभावे अन्नमात्रन्तु पाचयेत्।
पैतृकेन तु सूक्तेन होमं कुर्य्याद्विचक्षणः॥ ८२।
अत्यन्तद्रव्यशून्यश्च शक्त्या दद्यात्तृणं गवाम्।
स्नात्वा च विधिवद्विप्राः कुर्य्याद्वा तिलतर्पणम्॥ ८३।
अथवा रोदनं कुर्य्यादत्युच्चैर्विजने वने।
दरिद्रोऽहं महापापी वदेदिति विचक्षणः॥ ८४।
परेद्युः श्राद्धकृन्मर्त्त्यो यो न तर्पयते पितॄन्।
तत्कुलं नाशमाप्नोति ब्रह्महत्याञ्च विन्दति॥ ८५।
श्राद्धं कुर्व्वन्ति ये मर्त्त्याः श्रद्धावन्तो मुनीश्वराः।
न तस्य सन्ततिच्छेदः सन्त्रासो वापि* जायते॥ ८६।
पितॄन्यजन्ति ये श्राद्धे तैश्च† विष्णुः प्रपूजितः॥ ८७।
पितरो देवताश्चैव गन्धर्व्वाप्सरसस्तथा‡।
यक्षाश्च सिद्धा मनुजा हरिरेव सनातनः॥ ८८।
येनेदमखिलं जातं जगत्स्थावरजङ्गमम्।
तस्माद्भोक्ता च दाता च सर्व्वं विष्णुः सनातनः॥ ८९।
विप्रा यदस्ति यन्नास्ति दृश्यञ्चादृश्यमेव च।

---

* सम्पन्नः सोऽपीति (ङ)।

† तत्रेति (ङ)।

‡ तस्मिन्तुष्टे जगन्नाथे सर्व्वास्तुष्टास्तु देवता इति (ख) पुस्तके अधिकः पाठो वर्त्तते।

सर्व्वं विष्णुमयं ज्ञेयं तस्मादन्यन्न विद्यते ॥ ९० ।*
आधारभूतो विश्वस्य सर्व्वभूतात्मकोऽव्ययः† ।
अनौपम्यस्वभावश्च भगवान् हव्यकव्यभुक् ॥ ९१ ।
परं ब्रह्माभिधेयो यः एक एव‡ जनार्द्दनः ।
कर्त्ता कारयिता चैव स वै विष्णुः§ सनातनः ॥ ९२ ।
इत्येष वो मुनिश्रेष्ठाः श्राद्धस्य विधिरुत्तमः ।
कथितः कुर्व्वतामेवं पापशान्तिर्भविष्यति ॥ ९३ ।
य इदं पठते नित्यं¶ श्राद्धकाले मुनीश्वराः ।
पितरश्चैव तुष्यन्ति सन्ततिश्चैव वर्द्धते ॥ ९४ ।

इति श्रीबृहन्नारदीयपुराणे श्राद्धविधिकथनो नाम षड्विंशोऽध्यायः ।

---

* (क) पुस्तके एष श्लोको नास्ति। इत्यस्याद्दश्यमेव चेति (ग), (ङ) पुस्तकयोः श्लोकशेषः ।

† सर्व्वभूतात्मने नम इति (ख) ।

‡ परब्रह्माभिधेयात्मा पर एवेति (ख)

§ सर्व्वो विष्णुरिति (क), (ख), (ङ) ।

¶ भक्त्येति (ख), (ग) ।

# सप्तविंशोऽध्यायः ।

## अथ तिथिनिर्णयः ।

सूत उवाच ।

तिथीनां निर्णयं वक्ष्ये प्रायश्चित्तविधिं तथा ।
शृणुध्वं सर्व्वधर्म्माणां सिद्धिर्येन प्रजायते ॥ १ ।
श्रौतस्मार्त्तव्रतं दानं यच्चान्यत्कर्म्म वैदिकम् ।
अनिर्णीतासु तिथिषु न किञ्चित्फलति द्विजाः ॥ २ ।
एकादश्यष्टमी षष्ठी* पौर्णमासी चतुर्द्दशी ।
अमावास्या द्वितीया च† उपवासव्रतादिषु ॥ ३ ।
परविद्धाः प्रशस्ताः स्युर्न ग्राह्याः‡ पूर्वसंयुताः ।
आभिरन्याश्च तिथयो ग्राह्याः स्युः पूर्वसंयुताः ॥ ४ ।
नागविद्धा च या षष्ठी शिवविद्धा तु सप्तमी ।
दशम्येकादशीविद्धा नोपोष्या स्यात्§ कदाचन ॥ ५ ।
दर्शञ्च पौर्णमासीञ्च सप्तमीं पितृवासरम् ।
पूर्वविद्धां प्रकुर्व्वाणो नरकायोपपद्यते ॥ ६ ।
कृष्णपक्षे पूर्वविद्धामष्टमीञ्च चतुर्द्दशीम् ।

---

* चैवेति (ख) ।

† तृतीया चेति (ख), (ग), (ङ) ।

‡ अग्राह्या इति (क) । (ग) पुस्तके श्लोकस्यास्य परार्द्धं नास्ति ।

§ नैवोपोष्या इति (ख), नोपोष्या चेति (ङ) ।

प्रशस्तां केचिदाहुस्तु* तृतीयां नवमीं तथा ॥ ७ ।
व्रतादीनाञ्च सर्व्वेषां शुक्लपक्षो विशिष्यते ।
अपराह्णाच्च पूर्व्वाह्णं† ग्राह्यं श्रेष्ठतरं‡ विदुः ॥ ८ ।
असम्भवे व्रतादीनां यदि पूर्व्वाह्णिकी तिथिः ।
मुहूर्त्तद्वितयं ग्राह्यं भगवत्युदिते रवौ§ ॥ ९ ।
प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा ।
उपोषितव्यं नक्षत्रं येनास्तं याति भास्करः ॥ १० ।
तिथिनक्षत्रसंयोगविहितव्रतकर्म्मणि ।
प्रदोषव्यापिनी ग्राह्या त्वन्यथा विफलं¶ भवेत् ॥ ११ ।
अर्द्धरात्रादधो या तु नक्षत्रव्यापिनी तिथिः ।
सैव ग्राह्या मुनिश्रेष्ठा नक्षत्रविहितव्रते ॥ १२ ।
यदार्द्ध‖रात्रयोर्व्याप्तं नक्षत्रन्तु दिनद्वये ।
तत्पुण्यतिथिसंयुक्तं नक्षत्रं ग्राह्यमुच्यते ॥ १३ ।
अर्द्धरात्रद्वये स्यातां नक्षत्रञ्च तिथिर्यदि ।
क्षये पूर्व्वा प्रशस्ता स्याद्वृद्धौ कार्य्या तथोत्तरा** ॥ १४

---

* केचिदाहुश्चेति (क), (ग) ; स्तास्विति (घ) ।

† अपराह्णच्च पूर्व्वाह्णादिति (ग), (घ), (ङ) ।

‡ श्रेष्ठतममिति बहुषु पाठः । श्रेष्ठीव्रते सदेति (ख) ।

§ (ख) पुस्तके श्लोकोऽयं परश्लोकस्य च पूर्व्वार्द्धं नास्ति ।

¶ वितथमिति (ख), (ग) ।

‖ यद्यर्द्धरात्रयोरिति (क), (ख) ।

** यत्ने पूर्व्वा प्रशस्ता स्यात्पुण्ये कार्य्या तथोत्तरेति (ख) ।

ह्रासवृद्धिविशून्या चेद्ग्राह्या पूर्व्वा तथापरा।
ज्येष्ठा*संमिश्रिता मूला रोहिणी वह्निसंयुता ॥ १५ ।
मैत्रे संमिश्रिता ज्येष्ठा सन्तानादिविनाशिनी।
ततः स्युस्तिथयः पुण्याः कर्म्मानुष्ठानतो दिवा ॥ १६ ।
रात्रिव्रतेषु सर्व्वेषु रात्रियोगो विशिष्यते ॥ १७ ।
तिथिनक्षत्रयोगेन या पुण्या परिकीर्त्तिता।
तस्यान्तु यद्व्रतं कार्य्यं सैव कार्य्या विचक्षणैः ॥ १८ ।
उदयव्यापिनी ग्राह्या श्रवणद्वादशीव्रते।
सूर्य्येन्दुग्रहणं यावत्तावद्ग्राह्या जपादिषु ॥ १९ ।
संक्रान्तिषु च सर्व्वासु पुण्यकालं निगद्यते।†
स्नानदानजपादीनां कुर्व्वतामक्षयं फलम् ॥ २० ।
तत्र कर्कटके ज्ञेयो दक्षिणायनसंक्रमः‡।
पूर्व्वतो घटिकास्त्रिंशत्पुण्यकालं विदुर्बुधाः ॥ २१ ।
वृषभे वृश्चिके चैव सिंहे कुम्भे तथैव च§।
पूर्व्वमष्टमुहूर्त्तन्तु ग्राह्यं स्नानजपादिषु ॥ २२ ।
तुलायाञ्चैव मेषे च पूर्व्वतः परतः स्थिताः।
ज्ञेया दशैव घटिका दत्तस्याक्षयकारिकाः ॥ २३ ।

---

* त्याज्येति (ख)। बहुषु मूल इति पुस्त्वेन निर्द्दिष्टम्।

† (क) पुस्तके कृष्णपक्षे पूर्व्वविद्धा इत्यारभ्य पुण्यकालं निगद्यते इत्यन्त सन्दर्भो नास्ति।

‡ अथ कर्कटके ज्ञेयो दक्षिणायनकर्म्मण इति (ख)।

§ तथैव हीति (ख)।

कन्यायां मिथुने चैव मीने धनुषि च द्विजाः ।
घटिका षोड़श ज्ञेयाः परतः पुण्यदायिकाः ॥ २४ ।
माकरं संक्रमं* प्राहुरुत्तरायणसंज्ञकम् ।
पराश्च† त्रिंशद्घटिकाश्चत्वारिंशच्च पूर्व्वतः ॥ २५ ।
आदित्यशीतकिरणौ‡ ग्रस्तावस्तं गतौ यदि ।
दृष्ट्वा§ भुञ्जीत विप्रेन्द्राः परेद्युः शुद्धमण्डलम्¶ ॥ २६ ।
दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूः स्मृता ।
अमावस्या द्विधा प्रोक्ता विशुद्दै‖र्धर्म्मलिप्सुभिः ॥ २७ ।
सिनीवाली द्विजैर्ग्राह्या साग्निकैः श्राद्धकर्म्मणि ।
कुहूः शूद्रैस्तथा स्त्रीभिरपि चानग्निकैस्तथा** ॥ २८ ।
अपराह्णद्वयव्यापिन्यमावास्या तिथिर्यदि ।
क्षये पूर्व्वा तथा कार्य्या वृद्धौ कार्य्या तथा परा†† ॥ २९ ।
अमावास्या प्रतीता चेन्मध्याह्नात्परतो यदि ।
भूतविद्धेति विख्याता सद्भिः शास्त्रविशारदैः‡‡ ॥ ३० ।

---

* अर्कञ्च सङ्क्रमिति (ख), सञ्ज्ञितमिति च (ख) ।

† परास्त्रिंशच्चेति (ख), (ग) ।

‡ शीतकिरणाविति (ख) ।

§ स्नात्वेति (ख) ।

¶ शुभमण्डलमिति (ख) ।

‖ विद्वद्भिरिति (ख), (ङ) ।

** नाग्निधरैरिति (ख) ।

†† क्षये पूर्व्वा तु कर्त्तव्या वृद्धौ कार्य्या तथोत्तरेति (ख), (ग) ।

‡‡ शास्त्रार्थकोविदैरिति (ग) ।

अत्यन्तक्षयपक्षे तु परेद्युर्नापराह्णगा ।
तत्र ग्राह्या सिनीवाली सायाह्नव्यापिनी तिथिः ॥ ३१ ॥
अर्व्वाचीनक्षये* चैव सायाह्नव्यापिनी तथा† ।
सिनीवाली परा ग्राह्या सर्व्वथा श्राद्धकर्म्मणि ॥ ३२ ।
अत्यन्ततिथिवृद्धौ तु भूतविद्धां परित्यजेत् ।
ग्राह्या स्यादपराह्णस्था कुहूः पैतृककर्म्मणि ॥ ३३ ।
तथार्व्वाचीनवृद्धा‡ तु संत्याज्या भूतसंस्थिता ।
परेद्युर्विबुधश्रेष्ठैः कुहूर्ग्राह्यापराह्णगा ॥ ३४ ।
मध्याह्नद्वितये प्राप्ता§ अमावास्या तिथिर्यदि ।
तत्रेच्छया च संग्राह्या पूर्व्वा वाप्यथवा परा¶ ॥ ३५ ।
अग्न्याधानं प्रवक्ष्यामि‖ मतं सम्पूर्णपर्व्वणि ।
प्रतिपद्दिवसे कुर्य्याद्यागञ्च** मुनिसत्तमाः ॥ ३६ ।
पर्व्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः ।
यागकालः परिज्ञेयः†† प्रातरुक्तो मनीषिभिः ॥ ३७ ।

---

* व्रते इति (ख) ।

† तिथिरिति (ख) ।

‡ अथार्व्वाचीनविद्धा त्विति (क), तथार्व्वाचीनवृद्धौ तु इति (ख), तथार्व्वाचीन-
[ग]ा त्विति (ख) ।

§ व्याप्तेति (घ) ।

¶ पूर्व्वा वाऽथ पराऽथवेति (ग) ।

‖ अग्न्याधानं प्रवक्ष्यन्ते इति बहुषु पाठः ।

** व्रतञ्चेति (ख) ।

†† स विज्ञेय इति (ख), (ग), (ङ) ।

मध्याह्नद्वितये स्याताममावास्या च पूर्णिमा ।
परेद्युरेव विप्रेन्द्राः सद्यः* कालो विधीयते ॥ ३८ ।
पर्व्वद्वये† परेद्युः स्यात्सङ्गमात्परतो‡ यदि ।
सद्यः कालः परेद्युः स्याज्ज्ञेयमेवं तिथिद्वये ॥ ३९ ।
सर्व्वैरेकादशी ग्राह्या दशमीपरिवर्ज्जिता ।
दशमीसंयुता हन्ति पुण्यं जन्मत्रयार्ज्जितम् ॥ ४० ।
एकादशी कलामात्रा द्वादश्यान्तु प्रतीयते ।
द्वादशी च त्रयोदश्यामस्ति वेला परा स्मृता§ ॥ ४१ ।
सम्पूर्णैकादशी शुद्धा द्वादश्यान्तु प्रतीयते ।
त्रयोदशी च रात्रशान्तु तत्र वक्ष्यामि सुव्रताः¶ ॥ ४२ ।
पूर्व्वा गृहस्थैः कार्य्या स्यादुत्तरा यतिभिः स्मृता ।
गृहस्था वृद्धि‖मिच्छन्ति यतो मोक्षं यतीश्वराः** ॥ ४३
द्वादश्यान्तु कलायाञ्च यद्यलभ्यत†† पारणम् ।
तदानीं दशमीविद्धाप्युपोष्यैकादशी तिथिः ॥ ४४ ।
शुक्ले वा यदि वा कृष्णे भवेदेकादशीद्वयम् ।

---

* सव्य इति (घ) ।

† पूर्व्वकाल इति (ग), पूर्व्वद्वये इति (ङ) ।

‡ सङ्गरात्परत इति (ग), (ङ), (क) पुस्तके श्लोकस्यास्यान्तिमपादो नास्ति ।

§ (ख) पुस्तके एतदर्द्धं परश्लोकस्य पूर्व्वार्द्धञ्च न स्तः ।

¶ सत्तमा इति (ग) ।

‖ ऋद्धिमिति (ग) ।

** मुनीश्वरा इति (क), (ख) ।

†† कलायां वा यदि लभ्येत पारणमिति (ग) ।

गृहस्थानान्तु पूर्व्वोक्ता यतीनामुत्तरा स्मृता ॥ ४५ ।
द्वादश्यां विद्यते किञ्चिद्दशमी संयुता यदि ।
दिनत्रये द्वितीयैव सर्व्वेषां परिकीर्त्तिता॥ ४६ ।
विद्धाप्येकादशी ग्राह्या परतो द्वादशी न चेत् ।
अविद्धापि निषिद्धैव परतो द्वादशी यदि ॥ ४७ ।
एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
द्वादश द्वादशी हन्ति* त्रयोदश्यान्तु पारणम् ॥ ४८ ।
एकादशी कलामात्रा विद्यते द्वादशीदिने ।
द्वादशी च त्रयोदश्यां नास्ति वा विद्यतेऽथवा ।
विद्धाप्येकादशी तत्र पूर्व्वा स्याद्गृहिणान्तथा ।
यतिभिश्चोत्तरा ग्राह्या अवीराभिस्तथैव च† ॥ ४९।५० ।
सम्पूर्णैकादशी शुद्धा‡ द्वादश्यान्नास्ति किञ्चन ।
द्वादशी च त्रयोदश्यां नास्ति तत्र कथं भवेत् ॥ ५१ ।
पूर्व्वा गृहस्थैः कार्य्या स्यादुत्तरा यतिभिस्तिथिः ।
उपोष्यैव द्वितीयाऽपि§ केचिदाहुश्च भक्तितः ॥ ५२ ।
एकादशी यदा विद्धा द्वादश्यां¶ न प्रतीयते ।

---

* तत्र क्रतुशतं पुण्यमिति (ग) ।

† सर्व्वदैव तथैव चेति (ख) ।

‡ विद्धेति (क), तत्र द्वादश्याञ्चास्तीति पाठः ।

§ द्वितीयैवेति (ख) ।

¶ दशम्यामिति (ख), (ग) । (ङ) पुस्तके विद्धेत्यत्र इद्धेति पाठः ।

द्वादशी च त्रयोदश्यामस्ति तत्र कथं भवेत्* ॥ ५३ ।
उपोष्या द्वादशी शुद्धा† सर्व्वैरेव न संशयः ।
केचिदाहुश्च पूर्व्वां तु तन्मतं ह्यसमञ्जसम् ॥ ५४ ।
संक्रान्तौ रविवारे च पाते च ग्रहयोस्तथा ।
पारणञ्चोपवासञ्च न कुर्य्यात्पुत्रवान् गृही‡ ॥ ५५ ।
अर्केऽह्नि पर्व्वरात्रौ च चतुर्द्दश्यष्टमी दिवा ।
एकादश्यामहोरात्रं भुक्ता चान्द्रायणं चरेत्§ ॥ ५६ ।
आदित्यग्रहणे प्राप्ते पूर्व्वयामचतुष्टये ।
न कुर्य्याद्भोजनं विद्वान् कुर्य्याच्चेन्मांसभोजनम् ॥ ५७ ।
चन्द्रस्य ग्रहणे प्राप्ते पूर्व्वयामत्रये तथा ।
नाद्याद्वै यदि भुञ्जीत सुरापानसमं स्मृतम् ॥ ५८ ।
आदित्यशीतकिरणौ ग्रस्तावस्तङ्गतौ यदि¶ ।
दृष्ट्वा स्नात्वा च भुञ्जीत परेद्युः शुद्धमण्डलम् ॥ ५९ ।
अग्न्याधानेष्टिमध्ये तु ग्रहणे चन्द्रसूर्य्ययोः ।
प्रायश्चित्तं मुनिश्रेष्ठाः कथं कुर्व्वन्ति‖ याज्ञिकाः ॥ ६०

* एतदर्द्धं (ख) पुस्तके नास्ति ।

† वृद्धेति (क) ।

‡ (क), (ङ) पुस्तकयोर्वक्ष्यमाणश्लोकोऽधिको दृश्यते—
"तथा च कृष्णैकादश्यां मन्दवारे च वैधृतौ ।
पारणञ्चोपवासञ्च न कुर्य्यात्पुत्रवान् गृही" ।

§ व्रजेदिति (ख) ।

¶ यदेति (ख) ।

‖ कुर्व्वीतेति (ख) ।

चन्द्रोपरागे जुहुयाद्दशमे सोम इत्यृचा* ।
आप्यायस्व ऋचा चैव सोमपास्त इति द्विजाः ॥ ६१ ।
सूर्य्योपरागे जुहुयादादित्यं जातवेदसम् ।
आसाद्य नोदयञ्चैव त्रयो मन्त्रा उदाहृताः ॥ ६२ ।
एवं तिथिं विनिश्चित्य† स्मृतिमार्गेण पण्डितः ।
यः करोति व्रतादीनि तस्य स्यादक्षयं फलम् ॥ ६३ ।
वेदप्रणिहितो धर्म्मो धर्म्मैस्तुष्यति केशवः ।
तस्माद्धर्म्मपरा यान्ति तद्विष्णोः परमं पदम् ॥ ६४ ।
ये धर्म्मान् कर्त्तुमिच्छन्ति ते वै विष्णुस्वरूपिणः ।
तस्मात्तेषां भवव्याधिः कदाचिन्नैव बाधते ॥ ६५ ।

इति श्रीबृहन्नारदीयपुराणे तिथिप्रायश्चित्तनिर्णये तिथिनिर्णयो नाम सप्तविंशोऽध्यायः ।

---

(ख) पुस्तकेऽन्वैवंविधः पाठोऽस्ति—

चन्द्रोपरागे जुहुयाद्यजुषा सुसमाहितः ।
आप्यायनं त्वृचा वै सोमपास्त इति द्विजाः ।
सूर्य्योपरागे जुहुयादुदुत्यं जातवेदसमिति ।

तत्र ६१—६३ श्लोका न सन्ति ।

† सुनिश्चित्येति (ङ) ।

# अष्टाविंशोऽध्यायः ।

## प्रायश्चित्तविधिः ।

सूत उवाच ।

प्रायश्चित्तविधिं वक्ष्ये शृणुध्वं सुसमाहिताः ।
प्रायश्चित्तविशुद्धात्मा सर्व्वकर्म्मफलं लभेत् ॥ १ ।
प्रायश्चित्तविहीनैस्तु यत्कर्म्म क्रियते द्विजाः* ।
तत्सर्व्वं निष्फलं याति न लभन्ते क्रियाफलम् ॥ २ ।
कामक्रोधविहीनैस्तु सर्व्वशास्त्रविशारदैः ।
विप्रस्तु धर्म्मः प्रष्टव्यः† स्वधर्म्मफललिप्सुभिः ॥ ३ ।
प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखैः ।
न निष्पुनन्ति‡ विप्रेन्द्राः सुराभाण्डमिवापगाः ॥ ४ ।
ब्रह्महा च सुरापी च स्तेयी च गुरुतल्पगः ।
महापातकिनस्त्वेते तत्संयोगी च पञ्चमः ॥ ५ ।
यस्तु संवत्सरं यावच्छयनाशनभोजनैः ।
संवसेत्सततं विद्यात्पतितं सर्व्वकर्म्मसु§ ॥ ६ ।
अज्ञानाद्ब्राह्मणं हत्वा चीरवासा जटी भवेत् ।

---

* नृभिरिति (ग) ।

† कर्त्तव्य इति (घ) ।

‡ न विशुध्यन्तीति (ख), निष्पवन्तीति (ङ) ।

§ (ग) पुस्तके श्लोकेऽत्र महान् पाठभेदो लक्ष्यते, यथा, यस्तु संवत्सरन्त्वेतैः शयनाशनभोजनैः । सवत्सरशतं विद्यात्पतितं सर्व्वकर्म्मस्विति ।

तस्यैव हतविप्रस्य कपालमभि*धारयेत् ॥ ७ ।
तदभावे मुनिश्रेष्ठाः कपालं चान्यमेव वा ।
तद्द्रव्यं ध्वजदण्डे तु धृत्वा वनचरो भवेत् ॥ ८ ।
वन्याहारो भवेन्नित्यमेकाहारो मिताशनः ।
सम्यक् सन्ध्यामुपासीत त्रिकालं स्नानमाचरेत्† ॥ ९ ।
अध्ययनाध्यापनादीन्वर्ज्जयेत्संस्मरन् हरिम् ।
ब्रह्मचारी भवेन्नित्यं गन्धमाल्यादि वर्ज्जयेत् ॥ १० ।
तीर्थान्यनुवसेच्चैव पुण्यतीर्थाश्रमाणि च ।
यदि वन्यैर्न जीवेत‡ ग्रामे भिक्षां समाचरेत् ॥ ११ ।
शरावपात्रधारी स्याद्द्वारस्थो विष्णुतत्परः ।
वदेच्च ब्रह्महास्मीति सप्तागाराणि पर्य्यटेत्§ ॥ १२ ।
चातुर्वर्ण्येषु वा भिक्षां त्रिवर्णेष्वथवा चरेत् ।
मिष्टामिष्टाविवेकेन¶ एककालन्तु भोजयेत् ॥ १३ ।
द्वादशाब्दं व्रतं कुर्य्यादेवं हरिपरायणः ।
ब्रह्महा शुद्धिमाप्नोति कर्म्मार्हश्चैव जायते‖ ॥ १४ ।

---

* मषीति (ग)।

† (ख) पुस्तके ८।९ श्लोकौ न स्तः।

‡ जीवेतेति आर्ष, जीवेदिति साधु।

§ सर्व्वत्रैव हि पर्य्यटन्निति (ख)।

¶ एतदर्द्ध (क) पुस्तके नास्ति। दृष्टादृष्टाविवेकेनेति (ङ), मृष्टामृष्टाविवेकेनेति (ग)।

‖ उपजायत इति (ख)।

व्रतमध्ये मृगैर्वापि रोगैर्वापि निसूदितः ।
गोनिमित्तं द्विजार्थञ्च प्राणान्वापि परित्यजेत् ॥ १५ ।
यद्वा दद्याद्विजेन्द्राणां गवामयुतमुत्तमम् ।
एतेष्वन्यतमं कृत्वा ब्रह्महा शुद्धि*माप्नुयात् ॥ १६ ।
दीक्षितं क्षत्रियं हत्वा चरेद्ब्रह्महणो व्रतम् ।
अग्निप्रवेशनं वापि मरुत्प्रपतनं† तथा ।
दीक्षितं ब्राह्मणं हत्वा द्विगुणं व्रतमाचरेत् ॥ १७ ।
आचार्य्यादिवधे चैव व्रतमुक्तं चतुर्गुणम् ।
हत्वा तु विप्रमात्रन्तु‡ चरेत्संवत्सरं व्रतम् ॥ १८ ।
एवं विप्रस्य कथितः§ प्रायश्चित्तविधिर्द्विजाः ।
द्विगुणं क्षत्रियस्योक्तं त्रिगुणन्तु विशः स्मृतम् ॥ १९ ।
ब्राह्मणं हन्ति यः शूद्रस्तं मुषल्यं विदुर्बुधाः¶ ।
राज्ञैव शिक्षा कर्त्तव्या इति शास्त्रेषु निश्चितम् ॥ २० ।
ब्राह्मणीनां वधेऽप्यर्द्धं पादस्तु‖ कन्यकावधे ।

---

* शुचिमाप्नुयादिति (ख) ।

† भृगुप्रपतनमिति (ख), मरुप्रपतनमिति (ग) । (ख) पुस्तके एतच्छ्लोकादनन्तरं षट् पादा न सन्ति ।

‡ मात्रश्चेति (ग) ।

§ एत विप्रस्य गदित इति (ख), एष—कथित इति (ग) ।

¶ तस्य न निष्कृतिर्भवेदिति (क), तं हि मल्यं विदुरिति (ख) ।

‖ पादः स्यादिति (क) ।

हत्वा त्वनुपनीतांस्तु तथा पादव्रतं चरेत्* ॥ २१ ।
हत्वा तु क्षत्रियं विप्रः षड़ब्दं कृच्छ्रमाचरेत्† ।
संवत्सरत्रयं वैश्यं हत्वा शूद्रन्तु वत्सरम् ॥ २२ ।
दीक्षितस्य स्त्रियं हत्वा ब्राह्मणीं चाष्टवत्सरम् ।
ब्रह्महत्याव्रतं कृत्वा‡ शुद्धो भवति निश्चितम् ॥ २३ ।
प्रायश्चित्तविधानन्तु सर्व्वत्र मुनिसत्तमाः ।
वृद्धातुरस्त्रीबालानामर्द्धमुक्तं मनीषिभिः ॥ २४ ।
गौड़ी माध्वी च विज्ञेया पैष्टी च§ त्रिविधा सुरा ।
चातुर्व्वर्ण्यैरपेया स्यात्तथा स्त्रीभिश्च पण्डिताः ॥ २५ ।
क्षीरं घृतं वा गोमूत्रमेतेष्वन्यतमं द्विजाः ।
स्नात्वार्द्रवासा नियतो नारायणमनुस्मरन् ।
पक्वाग्निसन्निभं कृत्वा पिवेच्च कुड़पं ततः ।
तत्तु लौहेन पात्रेण चायसेनाथवा पिवेत्¶ ॥ २६।२७ ।
ताम्रेण वाथ पात्रेण तत्पीत्वा मरणं व्रजेत् ।
सुरापी शुद्धिमाप्नोति नान्यथा शुद्धिरिष्यते ॥ २८ ।

---

* (क) पुस्तकस्यैकएव एवं पठित.,—"ब्राह्मणीना वधे त्वर्द्धं पाद क्षत्रवधे स्मृतम् । हन्तुश्चाऽनुपनीतानां (अनुपनीतस्य ?) दद्यात्पादव्रतं तथा ॥"

† षड वर्षं तत्समाचरेदिति (ख), षडब्दं व्रतमिति (ग) ।

‡ कुर्य्यात्कृत्वा शुद्धो भवतीति ।

§ गौडी पैष्टी च माध्वी च विज्ञेयेति (क) ।

¶ कांस्येनाऽप्यथवा पिवेदिति (ख) । (ङ) पुस्तके प्रथमपाद एव कांस्येनेति पाठोऽस्ति ।

अज्ञानजलवुद्धा तु सुरां पीत्वा द्विजश्चरेत् ।
ब्रह्महत्याव्रतं सम्यक् तच्चिह्नपरिवर्ज्जितम् ॥ २९ ।
यदि रोगनिवृत्त्यर्थमौषधार्थं सुरां पिवेत् ।
तस्योपनायनं भूयश्चान्द्रायणद्वयन्तथा* ॥ ३० ।
सुरासंस्पृष्टमन्नञ्च† सुराभाण्डोदकं तथा ।
सुरापानसमं प्राहुस्तथा चार्द्रस्य भक्षणम् ॥ ३१ ।
तालञ्च पानसञ्चैव द्राक्षं खर्ज्जूरसम्भवम् ।
माधुकं शैलमाविष्टं मैरेयं नारिकेलजम् ॥ ३२ ।
गौड़ी माध्वी सुरा मद्यमेवमेकादशं स्मृतम् ।
एतेष्वन्यतमं विप्रो न पिवेद्वै‡ कदाचन ॥ ३३ ।
एतेष्वन्यतमं यस्तु पिवेदज्ञानतो द्विजः ।
तस्योपनायनं भूयस्तप्तकृच्छ्रं चरेत्तथा ॥ ३४ ।
समक्षं वा परोक्षं वा बलाच्चौर्य्येण वा तथा§ ।
परस्वानामुपादानं¶ स्तेयमित्युच्यते बुधैः ॥ ३५ ।
सुवर्णस्य प्रमाणन्तु‖ मन्वाद्यैः परिभाषितम् ।
वक्ष्ये शृणुध्वं विप्रेन्द्राः प्रायश्चित्तोक्तिसाधनम् ॥ ३६ ।

---

* तथा चान्द्रायणद्वयमिति बहुषु पाठः ।

† सुरासंस्पृष्टपानञ्चेति (ख) ।

‡ पिवेत्त्विति (घ) ।

§ अज्ञानतोऽपि चेति (घ) ।

¶ परस्वसमुपादानमिति (क), (ग), (घ) ।

‖ चेति बहुषु पाठः ।

गवाक्षगतमार्त्तण्ड-रश्मिमध्ये प्रदृश्यते।
त्रसरेणुप्रमाणन्तु रज इत्युच्यते बुधैः॥ ३७।
त्रसरेण्वष्टकं निष्क*स्तत्त्रयं राजसर्षपः।
गौसर्षपं तत्त्रयन्तु तत्षट्कं यव उच्यते॥ ३८।
यवत्रयं कृष्णलः स्यान्माषः स्यात्तस्य पञ्चकम्।
माषषोड़शमानन्तु सुवर्णमिति कथ्यते॥ ३९।
हत्वा ब्रह्मस्वमज्ञानाद्द्वादशाब्दन्तु पूर्व्ववत्।
कपालध्वजहीनन्तु ब्रह्महत्याव्रतञ्चरेत्॥ ४०।
गुरूणां यज्ञकर्त्तॄणां धर्म्मिष्ठानां तथैव च।
श्रोत्रियाणां द्विजानान्तु हत्वा हेम कथं भवेत्॥ ४१।
कृतानुतापो देहञ्च सम्पूर्णं लेपयेद्घृतैः।
कारीषच्छादितो दग्धः स्तेयपापाद्विमुच्यते॥ ४२।
ब्रह्मस्वं क्षत्रियो हत्वा अश्वमेधेन शुध्यति।
आत्मतुल्यसुवर्णं वा दत्त्वा† वा गोशतत्रयम्॥ ४३।
ब्रह्मस्वं यस्तु हत्वा च पश्चात्तापमवाप्य च।
पुनर्ददाति तत्रैव प्रायश्चित्तविधिः कथम्‡॥ ४४।
तत्र सान्तपनं कृत्वा द्वादशाहोपवासतः§।
शुद्धिमाप्नोति विप्रेन्द्रा अन्यथा पतितो भवेत्॥ ४५।

---

* नालमिति (ख), व्रच इति (ग)।

† दद्यादिति (ख), (ग), (ङ)।

‡ प्रायश्चित्तं कथं भवेदिति (ख)।

§ उपवासन इति (ख)।

रत्नासनमनुष्यस्त्री*भूमिधेन्वादिकेषु च ।
सुवर्णसदृशेष्वेवं† प्रायश्चित्तार्द्धमुच्यते ॥ ४६ ।
त्रसरेणुसमं हेम हृत्वा कुर्य्यात्समाहितः ।
प्राणायामद्वयं कुर्य्यात्तेन शुध्यति सत्तमाः ।
प्राणायामत्रयं कृत्वा हृत्वा निष्कप्रमाणकम् ॥ ४६ ।
प्राणायामाश्च चत्वारो राजसर्षपमात्रके ।
गौसर्षपप्रमाणन्तु हृत्वा हेम‡ विचक्षणाः ।
स्नात्वा च विधिवत्कुर्य्याद्गायत्र्यष्टसहस्रकम् ॥ ४८ ।
यवमात्रसुवर्णस्य§ स्तेये शुद्धौ जपेद्द्विजाः ।
आसायं प्रातरारभ्य गायत्रीं वेदमातरम् ॥ ४९ ।
हेम्नः कृष्णलमानस्य¶ हृत्वा सान्तपनं चरेत् ॥ ५० ।
माषप्रमाणहेम्नस्तु प्रायश्चित्तन्तु कथ्यते ।
गोमूत्रपक्कयवभुक् देवार्च्चनपरायणः ।
मासत्रयेण शुद्धः स्यान्नारायणपरायणः‖ ॥ ५१ ।
किञ्चिन्न्यूनसुवर्णस्य स्तेये मुनिवरोत्तमाः ।
गोमूत्रपक्कयवभुगब्देनैकेन शुध्यति ॥ ५२ ।

---

* तद्वद्वस्त्रकमनुष्यस्त्रीति (ख) ।

† एष्विति (ग), (ङ) ।

‡ यश्चेति (क) ।

§ यावन्मात्रसुवर्णस्येति (घ) ।

¶ हेमस्योत्कृष्टमणिनः इति (क) ।

‖ एतदर्द्धं (ग) पुस्तके नास्ति ।

सम्पूर्णस्य सुवर्णस्य स्तेयं कृत्वा मुनीश्वराः।
ब्रह्महत्याव्रतं कुर्य्याद्द्वादशाब्दान् समाहितः॥ ५३।
सुवर्णमानान्न्यूने तु रजतस्तेयकर्म्मणि।
कुर्य्यात्सान्तपनं कुर्य्यादन्यथा पतितो भवेत्॥ ५४।
दशनिष्कान्तपर्य्यन्तमर्द्धनिष्कचतुष्टयात्।
हृत्वा चेद्रजतं विद्वान् कुर्य्याच्चान्द्रायणं द्विजाः॥ ५५।
दशादिशतनिष्कान्तरजतस्तेयकर्म्मणि।
चान्द्रायणद्वयं प्रोक्तं तत्पापपरिशोधकम्॥ ५६।
शतादूर्द्ध्वं सहस्रान्तं प्रोक्तं चान्द्रायणत्रयम्*।
सहस्रादधिकस्तेये ब्रह्महत्याव्रतं चरेत्॥ ५७।
कांस्यपित्तलमुख्येषु† अयस्कान्ते तथैव च।
सहस्रनिष्कमाने तु पाराक्यं परिकीर्त्तितम्॥ ५८।
प्रायश्चित्तन्तु रत्नानां स्तेये रजतवत्स्मृतम्॥ ५९।
गुरुतल्पगतानाञ्च प्रायश्चित्तं प्रवक्ष्यते।
अज्ञानान्मातरं गत्वा तत्सपत्नीमथापि वा।
स्वयमेव स्वमुष्कन्तु छिन्द्यात्पापमुदाहरन्॥ ६०।
हस्ते गृहीत्वा मुष्कन्तु गच्छेद्वै नैर्ऋतीं दिशम्।
गच्छन्तं मार्गसंयुक्तं‡ कदाचिन्न निवारयेत्॥ ६१।

---

* चान्द्रत्रयं द्विजा इति (क), (ग), प्रोक्तं चान्द्रायणं द्विजा इति (ख), चान्द्रद्वयं द्विजा इति (ङ)।

† कांस्यपित्तलौषधीष्विति (ख), कांस्यपित्तलशेषीष्विति (घ)।

‡ मार्गसंसक्तमिति (ङ)।

अपश्यन् पृष्ठतो* गच्छेत्प्राणान्तं यः स शुध्यति ।
मरुत्प्रपतनं वापि कुर्य्यात्पापमुदाहरन् ॥ ६२ ।
सवर्णोत्तमवर्णास्त्रीगमने त्वविजानतः† ।
ब्रह्महत्याव्रतं कुर्य्याद्द्वादशाब्दं समाहितः ॥ ६३ ।
अमत्याभ्यासतो‡ गच्छेत्सवर्णाञ्चोत्तमाञ्च वा ।
कारीषवह्निना दग्धः शुद्धिं याति द्विजोत्तमाः ॥ ६४ ।
रेतःसेकपूर्व्वमेव निवृत्तो यदि मातरि ।
ब्रह्महत्याव्रतं कुर्य्याद्रेतःसेकेऽग्निदाहनम्§ ॥ ६५ ।
सवर्णोत्तमवर्णासु निवृत्तो वीर्य्यसेचनात् ।
ब्रह्महत्याव्रतं तत्र षड़ब्दं कृच्छ्रमाचरेत्¶ ॥ ६६ ।
क्षत्रियां पितृभार्य्याञ्च गत्वा विप्रः सकृन्मुने ।
ब्रह्महत्याव्रतं कुर्य्यान्नवाब्दान्विष्णुतत्परः|| ॥ ६७ ।
वैश्यायां पितृपत्न्यान्तु षड़ब्दं कृच्छ्रमाचरेत् ।
गत्वा शूद्रां गुरोर्भार्य्यां त्रिरब्दं व्रतमाचरेत् ॥ ६८ ।
मातृस्वसारञ्च पितृस्वसारं
आचार्य्यभार्य्यामथ मातुलानीम् ।

---

* पृच्छत इति (क), (ग), (ङ) ।

† अविचारत इति (ख) ।

‡ स्वमत्येति (क), (ग) ।

§ रेतःसेकाग्निदाहनमिति (घ), (ङ) ।

¶ कृच्छ्रमान् भवेदिति (क) ।

|| (ख) पुस्तके एष श्लोको नास्ति ।

पुत्रीञ्च गच्छेद्यदि कामतो यः
श्वश्रूञ्च गत्वा शृणु तत्फलानि* ॥ ६९ ।
दिनद्वये ब्रह्महत्याव्रतं कुर्य्याद्यथाविधि ।
एकस्मिन्नेव सेके तु बहुवारे त्रिवर्षकम् ॥ ७० ।
एकवारं गते ह्यब्दव्रतं कृत्वा विशुध्यति ।
दिनद्वये† गते वह्निदग्धः शुध्येत‡ नान्यथा ॥ ७१ ।
चाण्डालीं पुक्कशीञ्चैव§ स्नुषाञ्च भगिनीं तथा ।
मित्रस्त्रियं शिष्यपत्नीं यस्तु वै कामतो व्रजेत् ॥ ७२ ।
ब्रह्महत्याव्रतं कुर्य्यात् षड़ब्दं मुनिसत्तमाः ।
अकामतो व्रजेद्यस्तु त्रिरब्दं¶ कृच्छ्रमाचरेत् ॥ ७३ ।
महापातकिसंसर्गे‖ प्रायश्चित्तन्तु कथ्यते ।
प्रायश्चित्तविशुद्धात्मा सर्व्वकर्म्मफलं लभेत् ॥ ७४ ।
यस्य येन भवेत्सङ्गो ब्रह्महादिचतुर्ष्वपि** ।
तत्तद्व्रतन्तु निर्व्वर्त्त्य शुद्धिमाप्नोत्यसंशयम् ॥ ७५ ।

---

* नरकाय केवलमिति (क), व्रजेद्यदि ब्राह्मणघातकः स इति (ख), (ग) पुस्तके शेषपादो नास्ति।

† दिनत्रये इति (ग)।

‡ शुध्येतेति आर्षं, शुध्येदिति साधु ।

§ पुक्कषीञ्चैवेति (क), पुक्कषीमिति (ङ)।

¶ द्विरब्दमिति (क)।

‖ महापातकसंसर्गे इति (ग), (ङ)।

** ब्रह्महत्याचतुर्ष्वपीति (ङ)।

अज्ञानात्पञ्चरात्रन्तु सङ्गमेभिः करोति यः ।
कायव्रतं* चरेत् सम्यगन्यथा पतितो भवेत् ॥ ७६ ।
द्वादशरात्रसंसर्गे महासान्तपनं† स्मृतम् ।
सङ्गं कृत्वार्द्धमासे तु उपवासान्दशाचरेत् ॥ ७७ ।
पराकं माससंसर्गे चान्द्रं मासत्रये स्मृतम् ।
कृत्वा षण्माससङ्गन्तु कुर्य्याचान्द्रायणत्रयम्‡ ॥ ७८ ।
किञ्चिन्न्यूनाब्दसङ्गे तु षण्मासं व्रतमाचरेत् ।
अस्य द्वित्रिगुणं प्रोक्तं ज्ञानात्सङ्गे यथाक्रमम् ॥ ७९ ।
मण्डूकं नकुलं काकं वराहं मूषिकं तथा ।
मार्ज्जाराजाविकं श्वानं हत्वा वै§ कुक्कुटं तथा ।
कृच्छ्रार्द्धमाचरेद्विप्रास्त्विकृच्छ्रमश्वहा चरेत् ॥ ८० ।
तप्तकृच्छ्रं¶ करिवधे पराकं गोवधे स्मृतम् ।
कामतो गोवधे नैव शुद्धिर्दृष्टा मनीषिभिः ॥ ८१ ॥
यानशय्यासनाद्येषु पुष्पमूलफलेषु च ।
भक्ष्यभोज्यापहारेषु पञ्चगव्यं विशोधनम् ॥ ८२ ।
शुष्ककाष्ठतृणानाञ्च द्रुमाणाञ्च‖ गुड़स्य च ।

---

* कायकृच्छ्रमिति (ख) ।

† शान्तपनमिति (क), (ग) ।

‡ द्वयमिति (ख) ।

§ च इति (घ) ।

¶ सप्तकृच्छ्रमिति (घ), (ङ) ।

‖ द्रव्याणाञ्चेति (ख) ।

चर्म्मभस्त्रामिषाणाञ्च त्रिरात्रं स्यादभोजनम् ॥ ८३ ।
टिट्टिभं चक्रवाकञ्च हंसकारण्डवं तथा ।
उलूकं सारसञ्चैव कपोतं* जालपादकम् ।
ऋकवाकुं वलाकञ्च शिशुमारञ्च कच्छपम् ।
एतेष्वन्यतमं हत्वा द्वादशाहमभोजनम् ॥ ८४।८५ ।
प्राजापत्यव्रतं कुर्य्याद्रेतोविण्मूत्रभोजने ।
चान्द्रायणत्रयं† प्रोक्तं शूद्रोच्छिष्टस्य भोजने ॥ ८६ ।
रजस्वलाञ्च चाण्डालं महापातकिनं तथा ।
सूतिकां पतितञ्चैव उच्छिष्ट‡रजकादिकम् ।
स्पृष्ट्वा सचेलं स्नायीत§ घृतस्य प्राशनं तथा ।
गायत्रीञ्च विशुद्धात्मा जपेदष्टशतं तथा ॥ ८७।८८ ।
एतेष्वन्यतमं स्पृष्ट्वा अज्ञानाद्यदि भोजयेत् ।
त्रिरात्रोपोषितः¶ शुद्ध्येत्पञ्चगव्यस्य प्राशनात्‖ ॥ ८९ ।
दानस्नानजपादीनां भोजनाध्वरयोस्तथा ।
मध्ये शृणोति यद्येषां शब्दं** कुर्य्यात्कथं द्विजाः ॥ ९० ।

---

* पातनमिति (क) ; (ख) पुस्तके ८४—८६ श्लोका न सन्ति ।

† चान्द्रायणव्रतमिति (क) ।

‡ उच्छिष्टमिति (ग) ।

§ स्नायीतेति आर्षं, स्नायादिति साधु । स्नायी स इति (ख) ।

¶ त्रिरात्रोपोषणादिति (ख) ।

‖ चाशनादिति (ख) ।

** स च कुर्य्यादिति (ख) ।

उद्वमेद्भुक्तमन्नञ्च स्नात्वा चोपवसेत्तथा ।
द्वितीयेऽह्नि घृतं प्राश्य शुद्धिमाप्नोति पण्डिताः* ॥ ८१ ।
व्रतादिमध्ये शृणुयाद्यदोषांº मुनिसत्तमाः ।
अष्टोत्तरसहस्रन्तु जपेद्वै वेदमातरम् ॥ ८२ ।
पापानामधिकं पापं द्विजदैवतनिन्दनम् ।
न दृष्टा निष्कृतिस्तेषां सर्व्वशास्त्रेषु‡ सत्तमाः ॥ ८३ ।
महापातकतुल्यानि यानि प्रोक्तानि सूरिभिः ।
प्रायश्चित्तन्तु सर्व्वेषामेवं कुर्य्याद्यथाविधि ॥ ८४ ।
प्रायश्चित्तानि सङ्कुर्य्यान्नारायणपरायणः ।
तस्य पापानि नश्यन्ति ह्यन्यथा पतितो भवेत् ॥ ८५ ।
यस्तु रागादि§निर्मुक्तो योऽनुतापसमन्वितः¶ ।
सर्व्वभूतदयायुक्तो विष्णुस्मरणतत्परः‖ ।
महापातकयुक्तो वा युक्तो वा सर्व्वपातकैः ।
सर्व्वैः प्रमुच्यते सद्यो यतो विष्णुः परं तपः ॥ ८६।८७ ।
नारायणमनाद्यन्तं विश्वाकार**मनामयम् ।

---

* अनुत्तमा इति (ख) ।
† यस्तथैवाद्य सत्तमा इति (ख), यद्येषां ध्वनिसुत्तमा इति (ग) ।
‡ चोत्तमा इति (घ) ।
§ धनादीति (ख), कामादीति (ङ) ।
¶ सोऽनुतापसमन्वित इति (क), (ग), (ङ) ।
‖ हरिस्मरणतत्पर. इति (ख) ।
** विश्वकायमिति (ख) ।

यस्तु संस्मरते* नित्यं सर्व्वपापैः प्रमुच्यते ॥ ९८ ।
स्मृतो वा पूजितो वापि ध्यातो वा नमितोऽपि वा ।
नाशयत्येव पापानि विष्णुरेव सनातनः ॥ ९९ ।
सम्पर्काद्यदि वा मोहाद्यस्तु पूजयते हरिम् ।
सर्वपापविनिर्म्मुक्तः प्रयाति परमं पदम् ॥ १०० ।
सकृत्संस्मरणाद्विष्णोर्नश्यन्ति क्लेशसञ्चयाः ।
स्वर्गादिभोगप्राप्तिस्तु तस्य विघ्नोऽनुमीयते† ॥ १०१ ।
मानुष्यं दुर्लभं जन्म प्राप्यते यैर्मुनीश्वराः ।
तत्रापि हरिभक्तिस्तु दुर्लभा परिकीर्त्तिता ॥ १०२ ।
तस्मात्तड़िल्लतालोलं मानुष्यं प्राप्य दुर्लभम् ।
हरिं संपूजयेद्भक्त्या पशुपाशविमोचकम् ॥ १०३ ।
सर्वान्तराया नश्यन्ति मनःशुद्धिश्च जायते ।
परं मोक्षं लभेच्चैव‡ पूज्यमाने जनार्द्दने ॥ १०४ ।
धर्म्मार्थकाममोक्षाख्याः पुरुषार्थाः सनातनाः§ ।
हरिपूजापराणान्तु सिध्यन्ति नात्र संशयः¶ ॥ १०५ ।
संसारेऽस्मिन्महाघोरे मोहनिद्रासमाकुले ।
ये हरिं शरणं यान्ति कृतार्थास्ते न संशयः ॥ १०६ ।

---

* संस्मरयेदिति (ग) ।

† विघ्नः प्रतीयते इति (ख) ।

‡ लभेदिति आर्ष, लभेत इति साधु ।

§ (ख) पुस्तके श्लोकस्यास्य द्वितीय-तृतीयपादौ न स्तः ।

¶ (ख) पुस्तके एष श्लोको नास्ति ।

पुत्रदारगृहक्षेत्रे धनधान्यविमोहिनीम् ।
लब्ध्वेमां मानुषीं वृत्तिं रे रे दर्पन्तु मा कृथाः* ॥ १०७ ।
सन्त्यज्य कामं क्रोधञ्च लोभं मोहं मदं तथा ।
परापवादं निन्दाञ्च यजध्वं भक्तितो हरिम् ॥ १०८ ।
व्यापारान् सकलांस्त्यक्त्वा पूजयध्वं जनार्द्दनम् ।
निकटा एव दृश्यन्ते कृतान्तनगरद्रुमाः ॥ १०९ ।
यावन्नायाति मरणं यावन्नायाति वै जरा† ।
यावन्नेन्द्रियवैकल्यं तावदेवार्च्चयेद्धरिम् ॥ ११० ।
धीमान्न कुर्य्याद्विश्वासं शरीरेऽस्मिन्नशाश्वते‡ ।
नित्यं सन्निहितो मृत्युः सम्पदत्यन्तचञ्चला ॥ १११ ।
आसन्नमरणो देहस्तस्माद्दर्पं निषेधय§ ।
संयोगा विप्रयोगान्ताः सर्व्वञ्च क्षणभङ्गुरम् ।
एतज्ज्ञात्वा महाभागाः पूजयध्वं जनार्द्दनम् ।
आशु यास्यथ¶ तेनैव मोक्षमत्यन्तदुर्लभम् ॥ ११२।११३ ।
भक्त्या यजति‖ यो विष्णुं महापातकवानपि ।
प्रयाति परमं स्थानं सर्व्वपापविमोचितः ॥ ११४ ।

---

* एतदर्थं कृती नर इति (ख)।

† यावन्नोपैत्यशक्तितेति (ख), यावन्नाभ्येति मरणं यावन्नाभ्येति वै जरेति (ग) ।

‡ अशाश्वते शरीरेऽस्मिन्धीमान्नयेन विश्वसेदिति (ख) ।

§ धर्म्मं निषेवयेदिति (ग) ।

¶ अनुयास्यथेति (ग) ।

‖ अत्र यजतीति आर्षं, यजते इति आत्मनेपद साधु ।

सर्व्वतीर्थानि यज्ञाश्च साङ्गवेदाश्च सत्तमाः।
नारायणार्च्चनस्यैते कलां नार्हन्ति षोड़शीम्* ॥ ११५ ।
किं वेदैः किमु वा शास्त्रैः किं वा तीर्थाभिषेचनैः† ।
विष्णुभक्तिविहीनानां किं तपोभिः किमध्वरैः ॥ ११६ ।

सूत उवाच ।

एवमुक्तानि संक्षेपात्प्रायश्चित्तानि भो द्विजाः‡ ।
सनत्कुमारमुनये नारदेन महात्मना ॥ ११७ ।

यजन्ति§ ये विष्णुमनन्तमूर्त्तिं
निरीहमोङ्कारगतं वरेण्यम् ।
वेदान्तवेद्यं भवरोगवैद्यं
ते यान्ति सर्वे पदमच्युतस्य ॥ ११८ ।
अनादिमात्मानमनन्तशक्ति-
माधारभूतं जगतां परेशम् ।
ज्योतिःस्वरूपं परमच्युताख्यं¶
सम्पूजिता यान्ति पदं पवित्रम् ॥ ११९ ॥

इति श्रीवृहन्नारदीयपुराणे प्रायश्चित्तविधिकथनोनामाऽष्टाविंशोऽध्यायः ।



* कला नारायणस्यैते नार्हन्ति षोडशीमपीति (घ) ।

† निषिञ्चणैरिति (ग) ।

‡ (ख) पुस्तके एतदर्द्धं नास्ति ।

§ अत्र यजन्तीति आर्ष, यजन्ते इति साधु ।

¶ वरमच्युताख्यमिति (ङ) ।

# ऊनचिंशोऽध्यायः ।

अथ यममार्गादिकथनम् ।

ऋषय ऊचुः* ।

कथितो भवता सम्यग्वर्णाश्रमविधिर्मुने ।
इदानीं श्रोतुमिच्छामो यममार्गं सुदुर्गमम्† ॥ १ ।
तथा संसारदुःखाग्निं तत्क्लेशच्चयसाधनम् ।
ऐहिकान्नरकांश्चैव‡ यथावद्वक्तुमर्हसि§ ॥ २ ।

सूत उवाच ।

विप्राः शृणुध्वं वक्ष्यामि यममार्गं सुदुर्गमम् ।
सुखदं पुण्यशीलानां पापिनान्तु भयङ्करम् ॥ ३ ।
षड़शीतिसहस्राणि योजनानां मुनीश्वराः ।
यममार्गस्य विस्तारः पापिनां भयदायकः ॥ ४ ।
ये नरा दानशीलाश्च ते यान्ति सुखिनो द्विजाः ।
धर्म्मशून्या नरा यान्ति दुःखेन शृणु यातनाः¶ ॥ ५ ।
प्रेतभूता विवस्त्राश्च‖ शुष्ककण्ठौष्ठतालुकाः ।

---

* (घ), (ङ) पुस्तकयोरेष पाठो नास्ति ।

† सुदुस्तरमिति (ख) ।

‡ ऐहिकामुष्मिकांश्चैवेति (ख) ।

§ (क) पुस्तके एष श्लोकः परश्लोकस्य पूर्व्वार्द्धञ्च न स्तः ।

¶ शृणुतायनमिति (क), (ग), (ङ) ।

‖ सुदुःखार्त्ता इति (ख) ।

क्रन्दन्तः सुस्वरं दीनाः पापिनो यान्ति तत्पथे* ॥ ६ ।
हन्यमाना यमभटैः प्रतोदाद्यैस्तथायुधैः† ।
इतस्ततः प्रधावन्तो यान्ति दुःखेन तत्पथे ॥ ७ ।
वक्ष्ये शृणुध्वं विप्रेन्द्रा यममार्गं भयङ्करम् ।
तत्रैव पापिनो यान्ति शृखतामतिभीतिदम् ॥ ८ ।
क्वचित्पङ्कः क्वचिद्वह्निः क्वचित्सन्तप्तकर्द्दमः ।
सन्तप्तसैकताश्चैव तीक्ष्णधाराः शिलाः क्वचित् ॥ ९ ।
क्वचिदङ्गारवृष्टिश्च‡ शिलावृष्टिस्तथैव च ।
जलवृष्टिः शस्त्रवृष्टिरुष्णाम्बुवर्षणन्तथा ॥ १० ।
क्षारकर्द्दमवृष्टिश्च महातापान्वितो मरुत् ।
उष्णकर्द्दमवृष्टिश्च महानिम्नानि च§ क्वचित् ॥ ११ ।
क्वचित्कण्टकवृक्षाश्च दुःखारोहाः शिलास्तथा ।
गाढान्धकाराश्च तथा¶ कण्टकावरणं महत् ॥ १२ ।

---

* तत्पथीति बहुषु पाठः, एवं परत्रापि ।

† प्रताडितैरिति (ङ) ।

‡ क्वचिदङ्गारराशिश्च महाधूमाकुलं क्वचित् ।
क्वचिद्दुःसहशीतञ्च क्वचिद्वायुविशोषणम् ॥
क्वचिदङ्गारवृष्टिश्च शिलावृष्टिस्तथैव च ।
जलवृष्टिः शस्त्रवृष्टीरुधिरावर्षणन्तथा ॥
नानाकण्टकवृष्टिश्च मा दाता पथि वै जलमिति (ख) ।

§ महादुष्टानि च क्वचिदिति (क) ।

¶ गाढाभेका बहुविधा इति (क) ।

वप्राग्रारोहणञ्चैव* कन्दरस्य प्रवेशनम् ।
शर्कराश्च तथा लोष्टाः सूचितुल्याश्च कण्टकाः ॥ १३ ।
शैवालञ्च क्वचिन्मार्गे क्वचित्कीलकपङ्क्तयः† ।
एवं बहुविधैः क्लेशैः पापिनो यान्ति सत्तमाः ॥ १४ ।
क्रोशन्तश्च रुदन्तश्च घातयन्तश्च‡ पापिनः§ ।
पाशेन यन्त्रिताः केचित्क्लिश्यमानास्तथायुधैः¶ ।
शस्त्रास्त्रैर्नीयमानाश्च पृष्ठतः पापिनस्तथा‖ ॥
नासाग्रपाशकृष्टाश्च** कर्णपाशैस्तथापरे ।
गलपाशैः कृष्यमाणाः करे कृष्टास्तथापरे ॥
पादाग्रपाशकृष्टाश्च†† केचिद्व्रातैश्च बन्धिताः ।
वहन्तश्चायसम्भारं शिरसाग्रेण प्रयान्ति वै ॥ १५।१६।१७ ।

---

* वप्राश्चारोहणाश्चैवेति (ख), वृक्षाग्रारोहणञ्चैवेति (घ) ।

† (क) (ख) पुस्तकयोरतःपरं वक्ष्यमाणं श्लोकार्द्धं वर्त्तते—

क्वचिद्गजाश्च गर्ज्जन्ति धारयन्ति क्वचिन्नराः ।

(ख) पुस्तके धारयन्तीत्यत्र बाधन्त इति पाठः ।

‡ ग्लापयन्तश्चेति (ङ) ।

§ शासिता इति (ख) ।

¶ अङ्कुशैरिति (क), (ङ); कृष्यमाणास्तथाच तैरिति (ख), कृष्यमाणास्तथा कुशैरिति (ग) ।

‖ पीड्यमानाश्च केचिद्व्रातेषु बन्धिता इति (ख), बन्धिता इति आर्षं बद्धा इति साधु ।

** संकृष्टा इति (क), एष श्लोकः (ख) पुस्तके नास्ति, नासाग्रपादकृष्टाश्चेति (ग) ।

†† शस्त्रान्तै. पीड्यमानाश्च इति (ख) ।

अयोभारद्वयं केचिन्नासाग्रेण तथापरे*।
कर्णाभ्याञ्च तथा केचिद्वहन्तो यान्ति पापिनः॥ १८।
केचिच्च स्खलिता† यान्ति ताड्यमानास्तथापरे‡।
निरुच्छ्वासतया केचित्केचिच्छादितलोचनाः§॥
छायाजलविहीने तु पथि यान्ति सुदुःखिताः¶।
शोचन्तः स्वानि‖ कर्म्माणि शुष्ककण्ठोष्ठतालुकाः॥१९।२०।
मुनीन्द्रा ये तु धर्म्मिष्ठा दानशीलाः सुबुद्धयः।
अतीवसुखसम्पन्नाः प्रयान्ति यममन्दिरम्॥ २१।
अन्नदा विबुधश्रेष्ठा भुञ्जन्तः** स्वादु†† यान्ति वै।
नीरदा यान्ति सुखिनः पिबन्तः क्षीरमुत्तमम्॥ २२।
तक्रदा दधिदाश्चैव पिबन्तः क्षीरमुत्तमम्।
घृतदा मधुदाश्चैव क्षीरदाश्च द्विजोत्तमाः।
सुधापानं प्रकुर्व्वन्तः प्रयान्ति यममन्दिरम्॥ २३।
शाकदः पायसं भुञ्जन्दीपदो ज्वलयन्दिशः।
वस्त्रदो विबुधश्रेष्ठा याति दिव्याम्बरं दधत्॥ २४।

---

* प्रयान्ति वै इति (ग)।

† प्रज्वलिता इति (ख), (ग), (ङ)।

‡ बध्यमाना इति (ख)।

§ सादितलोचन इति (ङ)।

¶ अत्यन्तदुःखिताः इति (ख)।

‖ स्वानि शोचन्तीति (ख)।

** भुञ्जन्त इति चार्षं, भुञ्जाना इति साधु।

†† तत्र इति (ख)।

परिष्कारप्रदो याति पूज्यमानोऽमरैः सदा ।
गोदानेन नरो याति सर्व्वकामसमन्वितः ॥ २५ ।
भूमिदो गृहदश्चैव विमाने सर्व्वसम्पदि ।
अप्सरोगणसङ्कीर्णे क्रीड़न्याति यमालयम् ॥ २६ ।
हयदो यानदश्चापि रथदश्च द्विजोत्तमाः ।
यमालयं विमानेन याति भोगान्वितेन वै ॥ २७ ।
अनडुद्दा मुनिश्रेष्ठा यानारूढ़ाः प्रयान्ति वै ॥ २८ ।
फलदाः पुष्पदाश्चैव यान्ति सन्तोषसंयुताः ।
अप्सरोगणसङ्कीर्णाः सर्व्वकामसमन्विताः ॥ २९ ।
ताम्बूलदो नरो याति तुष्टास्यो* यममन्दिरम् ॥ ३० ।
मातापित्रोश्च शुश्रूषां कृतवान्यो नरोत्तमः ।
स याति परितुष्टात्मा पूज्यमानोऽमरैर्मुहुः† ॥ ३१ ।
शुश्रूषां कुरुते यस्तु यतीनां ब्रह्मचारिणाम् ।
द्विजाग्नि‡ब्राह्मणानाञ्च स यात्यतिसुखान्वितः ॥ ३२ ।
सर्व्वभूतदयायुक्तः पूज्यमानोऽमरैर्द्विजाः ।
सर्व्वभोगान्वितेनासौ विमानेन प्रयाति वै ॥ ३३ ।
विद्यादानरतो याति पूज्यमानोऽब्जसूनुना ।
पुराणपाठको याति स्तूयमानो मुनीश्वरैः ॥ ३४ ।
एवं धर्म्मपरा यान्ति सुखेन यममन्दिरम् ।

---

* तुष्टात्मेति (क), (ग) (ङ) ।

† बहु इति बहुषु पाठः ।

‡ द्विजाग्र्येति (घ) ।

दुःखेन पापिनो यान्ति यममार्गे सुदुर्गमे ॥ ३५ ।
यमश्चतुर्भुजो भूत्वा शङ्खचक्रगदादिभृत् ।
पुण्यकर्म्मरतानाञ्च स्नेहान्मित्रवदर्च्चयेत् ॥ ३६ ।
भो भो बुद्धिमतां श्रेष्ठा नरकक्लेशभीरवः ।
युष्माभिः साधितं पुण्यं परत्र सुखदायकम् ॥ ३७ ।
मनुष्यजन्म सम्प्राप्य सुकृतं न करोति यः ।
स एव पापिनां श्रेष्ठ आत्मघातकसंज्ञितः* ॥ ३८ ।
अनित्यं मानुषं प्राप्य नित्यं यस्तु न साधयेत् ।
स याति नरकं घोरं कोऽन्यस्तस्मादचेतनः ॥ ३९ ।
शरीरं यातनारूपं मलाद्यैः परिदूषितम्† ।
तस्मिन् करोति विश्वासं तं विद्यादात्मघातकम् ॥ ४० ।
भूतानां‡ प्राणिनः श्रेष्ठास्तेषां वै बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणास्तथा ॥ ४१ ।
ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः ।
कृतबुद्धिषु कर्त्तारः कर्त्तृषु ब्रह्मवादिनः ॥ ४२ ।
ब्रह्मवादिष्वपि श्रेष्ठा निर्म्ममा इति ह्योच्यते§ ।
एतेभ्योऽपि परो ज्ञेयो नित्यं¶ध्यानपरायणः ॥ ४३ ।

---

* संज्ञक इति (क), (ख) ।

† परिभूषितमिति (क) (घ) ।

‡ सर्व्वेषामिति (ख), (ग) ।

§ ब्रह्मवादिष्वपि तथा श्रेष्ठा निर्म्मम उच्यते इति बहुषु पाठः ।

¶ विष्णुरिति (ख) ।

तस्मात्सर्व्वप्रयत्नेन कर्त्तव्यो धर्म्मसङ्ग्रहः ।
सर्व्वत्र पूज्यते सम्यग्धर्म्मवान्नात्र संशयः ॥ ४४ ।
गच्छध्वं पुण्यसंस्थानं सर्व्वभोगसमन्वितम् ।
अस्ति चेद्दुष्कृतं किञ्चित्पश्चात्तत्रैव भोक्ष्यथ ॥ ४५ ।
एवं समस्तानभ्यर्च्च्य प्रापयित्वा च सद्गतिम्* ।
आहूय पापिनः सर्व्वान् कालदण्डेन तर्जयेत् ॥ ४६ ।
प्रलयाम्बुधिनिर्घोषः† अञ्जनाद्रिसमप्रभः ।
विद्युत्प्रभायुधैर्भीमो‡ द्वात्रिंशद्भुजसंयुतः ॥
योजनत्रयविस्तारो रक्ताक्षो दीर्घनासिकः ।
दंष्ट्राकरालवदनो वापीतुल्यविलोचनः ॥
मृत्युज्वरादिभिर्युक्तश्चित्रगुप्तो विभीषणः ।
सर्व्वे दूताश्च गर्ज्जन्ति यमतुल्यविभीषणाः ॥ ४७।४८।४९
ततो ब्रवीति तान् सर्व्वान् कम्पमानांश्च§ पापिनः ।
शोचतः स्वानि कर्म्माणि चित्रगुप्तो यमाज्ञया ॥ ५० ।
भो भोः पापा दुराचारा अहङ्कारप्रदूषिकाः¶ ।
किमु स्वमर्ज्जितं‖ पापं युष्माभिरविवेकिभिः ॥ ५१ ।

---

* (ख) पुस्तके एतदर्द्धं नास्ति ।
† प्रलयाम्बुदनिर्घोष इति (ख), (ग), (ङ) ।
‡ विद्युद्वरायुधैर्भीम इति (क) ।
§ सुपापिन इति (ख) ।
¶ प्रदु.खिता इति (ख), प्रदूषिता इति (ग), प्रदूषका इति (ङ) ।
‖ किमर्थमर्ज्जितमिति (ख), (ग), (ङ) ।

कामक्रोधादिदुष्टेन* सगर्व्वेण तु चेतसा ।
यद्यत्पापतरं तत्तत्क्रिमर्थं चरितं† जनाः ॥ ५२ ।
कृतवन्तः पुरा यूयं पापान्यत्यन्तहर्षिताः ।
तथैव यातना भोज्याः किं वृथा ह्यतिदुःखिताः ॥ ५३ ।
पुत्रमित्रकलत्रार्थं‡ दुष्कृतं चरितं महत् ।
तेषु कर्म्मवशाज्जाता यूयमत्रातिदुःखिताः ॥ ५४ ।
युष्माभिः पोषिता ये तु पुत्राद्यास्त्वन्यतो गताः ।
युष्माकमेव तत्पापं प्राप्तं किं दुःखकारणम् ॥ ५५ ।
यथा कृतानि पापानि युष्माभिस्तु बहूनि वै ।
तानि प्राप्तानि दुःखस्य कारणं नास्ति ते§ जनाः ॥ ५६ ।
धर्म्मराट् पक्षपातन्तु न करोति हि हे¶ जनाः ।
विचारयध्वं यूयं तद्युष्माभिश्चरितं पुरा‖ ॥ ५७ ।
दरिद्रेऽपि च मूर्खे च पण्डिते वा श्रियान्विते ।
आढ्ये वापि च धीरे वा** समवर्त्ती यमः स्मृतः ॥ ५८ ।

---

* लोभेनेति (क) ।
† विहितमिति (ख) ।
‡ भृत्यमित्रकलत्रार्थमिति (ग), (ङ) ।
§ हे इति (घ), (ङ) ।
¶ ते इति (क), (ग) ।
‖ यत्कृतं पुरेति (क) ।
** चापिच वीरे चेति (क), (ग), सुवीरे चेति (ङ) ।

चित्रगुप्तस्य तद्वाक्यं* श्रुत्वा ते पापिनस्तदा† ।
शोचन्तः स्वानि कर्म्माणि तूष्णीं तिष्ठन्ति निश्चलाः ॥ ५९ ।
यमाज्ञाकारिणः सर्व्वे चण्डाद्या अतिवेगिताः ।
नरकेषु च तान् सर्व्वान् प्रक्षिपन्त्यतिवेगिताः ॥ ६० ।
शुद्धकर्म्मफलन्ते तु भुक्तान्ते‡ पापशेषतः ।
महीतलञ्च सम्प्राप्य भवन्ति स्थावरादयः ॥ ६१ ।

ऋषय ऊचुः ।

भगवन् संशयो जातो मच्चेतसि दयार्णव§ ।
त्वं समर्थोऽसि तं छेत्तुं यतो व्यासेन बोधितः ॥ ६२ ।
धर्म्माश्च विविधाः प्रोक्ता पापानि सुबहूनि वै ।
चिरकालफलं प्रोक्तं भोगस्तेषां दयार्णव ॥ ६३ ।
दिनान्ते ब्रह्मणः प्रोक्तो नाशो लोकत्रयस्य वै ।
परार्द्धद्वितयान्तेऽपि ब्रह्माण्डस्यापि सत्तम ॥ ६४ ।
ग्रामदानादिपुण्यानां त्वयैव व्यासवल्लभ ।
कल्पकोटिसहस्रेषु महाभाग¶ उदाहृतः ॥ ६५ ।
तदन्त एव लोकानां विनाशः प्राकृते लये ।
एकः शिष्यत एवेति त्वया प्रोक्तं जनार्द्दनः ॥ ६६ ।

---

* चित्रगुप्तेरितं वाक्यमिति (ख), (ङ) ।

† तथेति (ङ) ।

‡ कर्म्मफलन्तु ते भुक्त्वा अन्ते चेति ।

§ त्वमेवास्मि दयार्णव इति (ख) ।

¶ महाभोग इति (ख) ।

एवं नः संशयं तात तत्सर्व्वं छेत्तुमर्हसि ।
पापादीनाञ्च भोगानां समाप्तिर्नैव जायते ॥ ६७ ।

सूत उवाच ।

साधु साधु महाभागा गुह्याद्गुह्यतमन्त्विदम् ।
पृष्टं तद्वो* वदिष्यामि शृणुध्वं नान्यमानसाः ॥ ६८ ।
नारायणोऽव्ययो†ऽनन्तः परं ज्योतिः सनातनः ।
विशुद्धो निर्गुणो नित्यो महामोहविवर्ज्जितः‡ ॥ ६९ ।
निर्गुणोऽपि परानन्दो गुणवानिति भाति यः ।
ब्रह्मविष्णुशिवाख्यैश्च भेदवानिति लक्ष्यते§ ॥ ७० ।
गुणोपाधिकभेदेषु त्रिष्वेतेषु सनातनः ।
संयोज्य मायामखिलं¶ जगत्कार्य्यं करोति यः ॥ ७१ ।
ब्रह्मरूपेण सृजति विष्णुरूपेण पाति च ।
अन्ते च रुद्ररूपेण सर्व्वमत्तीति निश्चितम् ॥ ७२ ।
प्रलयान्ते समुत्थाय ब्रह्मरूपी जनार्द्दनः ।
चराचरात्मकं‖ विश्वं यथापूर्व्वमकल्पयत् ॥ ७३ ।
स्थावराद्याश्च विप्रेन्द्रा यत्र यत्र व्यवस्थिताः ।

---

* पृष्टवत्त इति (ख) ।

† अचर इति (क), (ग), पर इति (ख) ।

‡ मायामोहविवर्ज्जित इति (ग) ।

§ (ख) पुस्तके ६९ श्लोकस्य परार्द्धं, ७० श्लोकश्च न स्तः ।

¶ संयोज्यमानमिति (क), (ध), (ङ) पुस्तकेषु पाठः ।

‖ चराचरार्थकमिति (ङ) ।

ब्रह्मा तत्र* जगत्सर्व्वं यः पूर्व्वञ्च करोति वै ॥ ७४ ।
तस्मात्कृतानां पापानां पुण्यानाञ्चैव सत्तमाः ।
अवश्यमनुभोक्तव्यं सर्व्वथा ह्यक्षयं फलम्† ॥ ७५ ।
माभुक्तं‡ चीयते कर्म्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म्म शुभाशुभम् ॥ ७६ ।
यो देवः सर्व्वभूतानामन्तरात्मा जगन्मयः ।
सर्व्वकर्म्मफलं भुङ्क्ते परिपूर्णः सनातनः ॥ ७७ ।
योऽसौ विश्वोद्भवो देवो गुणभेदव्यवस्थितः ।
सृजत्यत्ति च पात्येतत्सर्व्वं भुङ्क्ते वशोऽव्ययः ॥ ७८ ।

इति श्रीवृहन्नारदीयपुराणे यमपुरीवर्णनं नामैकोनत्रिंशोऽध्यायः ।



* यच्चेति (क), (ङ) ।

† कृतं कर्म्म शुभाशुभमिति (ख), तत्र परः श्लोको नास्ति ।

‡ नाभुक्तमिति (ग) ।

# त्रिंशोऽध्यायः ।

## संसारवर्णनम् ।

सूत उवाच ।

एवं कर्म्मपाशनियन्त्रिता जन्तवः स्वर्गादिपुण्यस्थानेषु पुण्यभोगमनुभूय, यातनासु च* अतीवदुःखतरं पापफलमनुभूय क्षीणकर्म्मावसाने इमं लोकमागत्य† सर्व्वभयविकलेषु‡ मृत्युबाधासंयुतेषु स्थावरादिषु च जायन्ते ।

वृक्षगुल्मलतावल्लीगिरयश्च तृणानि च§ ।
स्थावरा इति विख्याता महामोहसमावृताः ॥ १ ।

स्थावरत्वेऽपि पृथिव्यामुप्तबीजानि जलसेकानुपदं सुसंस्कारसामग्रीवशादन्तरुष्ण¶प्रपाटितान्युच्छूनत्वमासाद्य ततो मूलभावः‖ । तन्मूलादङ्कुरोत्पत्तिस्तस्मादपि पर्णकाण्डलतादिकं,** काण्डेषु च प्रसवमापद्यते†† । तेषु प्रसवेषु पुष्पसम्भवः, तानि

---

* यातनास्वतीवेति (ख) ।

† प्रतिक्षणं कर्म्मविशेषेण यमलोकमागत्येति (ख), कर्म्मावशेषेनेति (ग) ।

‡ सर्व्वभोगविह्वलेष्विति (ख), सर्व्वभयविह्वलेष्विति (ग) , (ङ) पुस्तके सर्व्वभयेत्यादितः स्थावरत्वेऽपीत्यन्तः सन्दर्भो नास्ति ।

§ (ग) पुस्तके एतदर्द्धं नास्ति ।

¶ अन्तःपुष्पप्रपाटितानीति (ग), (घ) ।

‖ स्थावरत्वेऽपि पृथिव्यामुप्तबीजानि जलसेकानुपद संस्कारमापद्यन्त इति (ख) ।

** वर्णकाण्डलतादिकमिति बहुषु पाठः ।

†† एष पाठः (ख) पुस्तके नास्ति । प्रसवाः प्रपद्यन्त इति (ङ) ।

पुष्पाणि कानिचित्सफलानि कानिचिदफलानि कानिचित् फलहेतुभूतानि,* तेषु पुष्पेषु वृक्षभावेषु† तन्मूलतस्तुषोत्पत्ति-र्जायते। तेषु तुषेषु भोक्तॄणां प्राणिनां भोगसंस्कारसामग्री-वशादधिकारि-रविरश्मिकिरणासन्नतया‡ तदोषधिरसस्तुषतः प्रविश्य क्षीरभावं समेत्य स्वकाले तण्डुलतामुपगम्य तण्डुले दृढ़त्वमागते, ह्योषधयो म्रियन्ते। वनस्पतयस्तु ओषधिवदुत्पत्ति-मागत्य वृक्षभावमुपागम्य प्राणिनां भोगसंस्कारवशात्संवत्सरे फलिनः स्युः। स्थावरत्वेऽपि बहुकालं वाय्वादिभिर्भञ्जन-च्छेदनदावाग्निदहनशीतातपादिदुःखमनुभूय म्रियन्ते।

ततश्च कृमयो भूत्वा सदा दुःखबहुलाः क्षणार्द्धं जीवन्तः, क्षणार्द्धं म्रियमाणाश्च बलवत्प्राणिपीड़ां निवारयितुमक्षमाः शीतवातादिक्लेशभूयिष्ठा नित्यं क्षुद्बाधिता मलमूत्रादिषु च संसरन्तो दुःखमनुभवन्ति।

ततस्त एव पशुयोनिमागत्य§ बलवद्बाधावेष्टिता वृथोद्वेग-भूयिष्ठाः क्षतजातादिनित्यमनाचारिणो¶ मातृष्वपि विषया-नुरागादिक्लेशबहुलाः।

कस्मिंश्चिज्जन्मनि मांसमेध्याशनाः कस्मिंश्चिज्जन्मनि

---

* तानि पुष्पाणि कानिचिद्बृहत्फलानि, कानिचित्फलहेतुभूतानीति (ख)।

† पुष्पेषु वृक्षभावेष्विति (ग), (ङ)।

‡ अतुहिनकिरणसङ्गादिति (ख), किरणासन्नतयेति (ग)।

§ आगत्येति (क), तत्रैतद्वाक्यसमाप्तिर्नास्ति।

¶ नित्यं वनचारिण इति (ख)।

कन्दमूलफलाशना दुर्बलप्राणिपीड़ानिरता दुःखमनुभवन्ति, ततोऽन्यजन्मन्यपि वाताशना मेधाद्यशनाश्च परपीड़ापरायणा नित्यं दुःखबहुलाः सन्तो ग्राम्यपशुयोनिमागता अपि स्वजातिवियोगभारोद्वहनपाशादिबन्धनताड़नदहनधावनादि* सर्व्वदुःखान्यनुभवन्ति। एवं बहुयोनिषु सङ्गताः क्रमेण मानुष्यं जन्म प्राप्नुवन्ति। क्वचित्पुण्यविशेषाच्च† क्रमेणापि मानुष्यं जन्म प्राप्नुवन्ति। मनुष्यजन्मनि चर्म्मकारचण्डालव्याधरजककुम्भकारलोहकारसुवर्णकारतन्तुवायवणिज्जटाशिखाः‡। क्रमेण धावकलेखकभृतकशासनहारिता§दरिद्रा हीनाङ्गाधिकाङ्गत्वादुःखबहुलाः। ज्वरतापशीतवातश्लेष्मगुल्मपादाक्षिशिरोरोगगर्भपार्श्ववेदनादिदुःखमनुभवन्ति। मनुष्यत्वेऽपि यदा स्त्रीपुरुषयोर्व्यवायं गतयोस्तत्समये रेतो यदा जरायुं प्रविशति तदैव कर्म्मवशाज्जन्तुः शुक्रेण सह जरायुं प्रविश्य शुक्रशोणितकलने प्रवर्त्तते, तदैव जीवः प्रविशति, जीवप्रवेशात्पञ्चाहात् कललं भवति, अर्द्धमासे कललभावमुत्पाद्य¶ मासे प्रादेशभावमापद्यते। ततः प्रभृति वायुवशाच्चैतन्यभावेऽपि मातुरुदरे दुःसहतापक्लेशतयैकत्र स्थातुमशक्यत्वाद्भ्रमति। मासद्वये

---

* धारणादीति (क), (ग), (ङ)।

† वा इति (क), पुण्यविशेषाद्वाऽक्रमेणापीति (ग), (ङ)।

‡ सौचिकजटाशिखा इति (ग), सौचिकवणिज्जटाशिखा इति (ङ)।

§ नीचशासनहारितेति (ग)।

¶ उपेत्येति (ङ)।

पूर्णपुरुषाकारमात्रतामुपगम्य, मासत्रितये पूर्णे करचरणाद्यवयवभावमुपगम्यते, चतुर्मासेषु* गतेषु सर्व्वावयवानां सन्धिभेदपरिज्ञानम्। पञ्चस्वतीतेषु नखानामभिव्यञ्जनं,† षट्स्वतीतेषु नखसन्धिपरिस्फुटता, सप्तस्वतीतेषु रोमादीनां परिस्फुटता, अष्टमे मासे प्रारब्धे तच्छरीरे चैतन्यस्फुटतामुपगम्य नाभिसूत्रेण पुष्यमाणममेध्यमूत्रसिक्ताङ्गं जरायुणा बन्धितं रक्तास्थिकृमिवसामज्जास्नायुकेशादिदूषितैः कुत्सितः शरीरमिति वदन् स्वयमप्येवं परिदूषितदेही मातुश्च कट्वम्ललवणाद्युष्णरुक्षभक्षणातिपीड़िताः। एतैर्दह्यमानमात्मानं दृष्ट्वा देही पूर्व्वजन्मस्मरणानुभूतभावानुभावात्, पूर्व्वानुभूतदुःखितानि च स्मृत्वाऽत्यन्तदुःखेन परिदह्यमानान्तःकरणो मा भूद्देही मातुर्देहासीनो मूत्रादिरूक्षेण दह्यमान एवं मनसि विलपति। अहो हाऽत्यन्तपापोऽहं पूर्व्वजन्मनि भृत्यापत्यमित्रयोषिद्गृहक्षेत्रधनधान्यादिष्वत्यन्तरागेण कलत्रादिपोषणार्थं परधनक्षेत्रादिकं पश्यतोहरणाद्युपायतोऽपहृत्य कामान्धतया परस्त्रीहरणादिकमनुभूय महापापञ्‡माचरम्। तैः पापैरहमेक एव विविधनरकमनुभूय पुनः स्थावरादिषु महादुःखान्यनुभूय सम्प्रति जरायुणा परिवेष्टितान्तर्दुःखेन वह्निस्तापेन दह्यामि, मया पोषिता दारादयः स्वकर्म्मवशादन्यतो गताश्च।

---

* चतुर्षु मासेष्विति (ग)।

† अभिव्यञ्जनतेति (ग), (ङ)।

‡ महापापानीति (ङ)।

अहो दुःखमहो दुःखमहो दुःखेति* देहिनाम् ।
देहस्तु पापात्सञ्जातस्तस्मात्पापं न कारयेत् ॥ १ ।
भृत्यमित्रकलत्रार्थमन्यद्रव्यं हृतं मया† ।
तेन पापेन दह्यामि‡ जरायुपरिवेष्टितः ॥ २ ।
दृष्ट्वा त्वन्यश्रियं पूर्व्वं सन्तप्तोऽहमसूयया ।
गर्भाग्निना हि§ दग्धोऽहमिदानीमतिपापकृत्¶ ॥ ३ ।
कायेन मनसा वाचा परपीड़ामकारिषम् ।
तेन पापेन दह्यामि अहमेकोऽतिदुःखितः ॥ ४ ।
एवं बहुविधं जन्तुर्विलप्य स्वयमेव च|| ।
आत्मानमात्मनाश्वास्योत्पत्तेः स्वयमनन्तरम्** ॥ ५ ।

सत्सङ्गेन विशुद्धमना भूत्वा सत्कर्म्माणि†† निर्वर्त्त्याखिलजगदाधारात्मनः‡‡सत्यज्ञानानन्दमयस्य शक्तिप्रभावानुष्ठितापवर्गस्य लक्ष्मीपतेर्नारायणस्य सकलसुरासुर§§गन्धर्व्वयक्षराक्षस-

---

* दुःखं ह्वीति (ग) ।

† अपाहृतमिति (ग) ।

‡ दह्यामीति आर्षं दहामि, दह्ये चेति साधु ।

§ तु इति (ग) ।

¶ अपीति (ग), (ङ) ।

|| एवं बहुविधं गर्भस्थोजन्तुर्विलप्येति (ङ) ।

** उत्पत्तेः समनन्तरमिति बहुषु पाठः ।

†† सकलकर्म्माणीति (ग) ।

‡‡ जगदन्तरात्मन इति (ग) ।

§§ सिद्धगन्धर्व्वेति (ग), (ङ) ।

पन्नगमुनिकिन्नर*समूहार्च्चितचरणकमलं भक्तितः समभ्यर्च्य दुःखसंसारच्छेदनकारणभूतं वेदरहस्योपनिषद्भिः परिस्फुटं सकललोकपरायणं हृदि निधाय दुःखसंसाराङ्गारमतिक्रमिष्यामीति मनसि भावयति। ततस्तु† मातुः प्रसूतिसमये सति गर्भस्थो देही वाह्येन‡ वायुना परिपीड़ितो मातुश्चापि दुःखं कुर्व्वन् कर्म्मपाशेन बद्धो योनिमार्गान्निष्क्रामन् सकलयातनाभोगमेककालमेवानुभवन्नतिक्लेशेन योनियन्त्रपीड़ितो गर्भान्निष्क्रान्तो निःसंज्ञतां याति, तन्तु वाह्यवायुः समुज्जीवयति। वाह्यवायुस्पर्शनानन्तरमेव नष्टस्मृतिः पूर्व्वानुभूताखिलदुःखानि वर्त्तमानस्यापि ज्ञानाद्यभावा§द्विज्ञायात्यन्तदुःखमनुभवति। एवं बालत्वभावमापद्य¶ जन्तुस्तत्रापि स्वमलमूत्रादिलिप्तदेह-आध्यात्मिकादिदुःखेन‖ पीड्यमानोऽपि किञ्चिदपि वक्तुं न शक्तः**। क्षुत्तृट्पीड़ितोऽनुदिने सति शिशोर्गर्भादिवेदना विद्यत इति मत्वानया††जनन्या औषधप्रयोगः क्रियते। गर्भा-

---

* मुनिनिकरेति (ग)।

† ततस्तस्या मातुरिति (क), ततस्तन्मातुरिति (ग), ततस्तस्याः प्रसूतिसमय इति(ङ)।

‡ वाह्येनेति (क), (ग), (ङ)।

§ ज्ञानाभावादिति (ग)।

¶ बालत्वमापन्न इति (ग), (ङ)।

‖ आध्यात्मिकदुःखपीड्यमान इति (ग), (ङ)।

** वक्तुमशक्त इति (ग), (ङ)।

†† मत्वेति (क), क्षुत्तृट्पीडिते रुदिते सति शिशोर्गर्भादिवेदना विद्यत इति मत्वा जनन्याद्या औषधप्रयोगं कुर्व्वत इति (ग)।

व्यङ्गवेदनापीड़ितोऽनुदिने स्तनादिकं* देयमिति मन्वानास्ताः प्रयतन्ते। एवमनेकभोगाद्यधीनतया अनुभूयमाना दंशादीनपि† निवारयितुमशक्ताः बालभावमासाद्य मातापित्रोरुपाध्यायस्य ताड़नं, सदा पर्य्यटनशीलत्वं, पांशुपङ्कभस्मादिषु क्रीड़नं, सदा कलहनिरतत्वमशुचित्वं बहुव्यापाराभासकार्य्यविनियतत्वात्सम्भवे आध्यात्मिकदुःखमेवञ्च बहुविधमनुभवन्ति। ततस्तरुणभावे धनार्जनस्वार्ज्जितरक्षणे तस्य नाशकरादिषु‡ अत्यन्तदुःखिता मायामोहिताः कामक्रोधादिदुष्टमानसाः सदासूयापरायणाः परस्वपरस्त्रीहरणोपायपरायणाः पुत्रमित्रकलत्रादिभरणोपायचिन्तापरायणाः वृथाऽहङ्कारदूषिताः पुत्रादिषु व्याधिपीड़ितेषु सत्सु सर्व्वव्याप्तिं§ परित्यज्य रोगादिभिः क्लेशितानां समीपे¶ स्वयमेवाध्यात्मिकादिदुःखेन परिप्लुता वक्ष्यमाणप्रकारेण चिन्तामुपाप्नुवन्ति‖।

गृहक्षेत्रादिकं कर्म्म किञ्चिन्नापि विचारितम्।
समृद्धस्य** कुटुम्बस्य कथं भवति वर्त्तनम्††॥ १॥

* गुणादिकमिति (घ)।

† दंशादिष्वपीति (ग), (ङ)।

‡ व्ययादिष्विति (क), (ग), (ङ)।

§ व्यावृत्तिमिति (घ)।

¶ रुदित इति (ङ)।

‖ उपाप्नुवत इति (ग)।

** समूहस्येति (क)।

†† कथमेवं प्रवर्त्तितमिति (क)।

मम मूलधनं नास्ति वृष्टिश्चापि न वर्षति।
अश्वः पलायितः कुत्र गावः किं नागता मम ॥ २ ।
बालापत्या च मे भार्य्या व्याधितोऽहञ्च निर्धनः ।
अनाचारात्कृषिर्नष्टा पुत्रा नित्यं रुदन्ति च ॥ ३ ।
भग्नं छिन्नञ्च मे सद्म बान्धवा अपि दूरगाः* ।
न लभ्यते वर्त्तनञ्च राजबाधातिदुःसहा ॥ ४ ।
रिपवो माञ्च बाधन्ते कथं जेष्याम्यहं† रिपून् ।
व्यवसायाक्षमश्चाहं प्राप्ताश्चातिथयः‡ अमी ॥ ५ ।

एवमत्यन्तचिन्ताकुलाः स्वदुःखं निवारयितुमक्षमाः धिग्धिगीदृग्विधं भाग्यहीनं मां किमर्थं विदधातीति दैवमाक्षिपन्ति। तथा वृद्धत्वमापन्नो क्षीयमानो जरापलितादिव्याप्तदेहो व्याध्यधैर्य्याम्ध्यादिकमापन्नो§ऽतिकम्पमानावयवः श्वासकाशादिपीड़ितोऽशातिश्लेष्मव्याप्तकण्ठः पुत्रदारादिभिर्भर्त्स्यमानः कदा मरणमुपयामीति चिन्ताकुलो मयि मृते सति मदर्ज्जितगृहक्षेत्रादिकं मत्पुत्रादयः कथं रक्षिष्यन्ति, कस्य वा भविष्यन्ति, मद्धने परैरपहृते पुत्रादीनां कथं जीवनं भविष्यतीति ममतादुःखपरिप्लुतो गाढ़ं निश्वस्य शेषे वयसि कर्म्माणि कृतानि पुनः

* दुर्भगा इति (ग) ।

† जेष्यामि वै इति (ग) ।

‡ प्राघुणिका अमी इति (क), (ग)। सन्ध्यभाव आर्षः ।

§ बधिरान्धादिकमापन्न इति (क), (ग)

¶ (ङ) पुस्तके नानाकीर्णलोचन इत्यधिकः पाठो वर्त्तते ।

पुनः स्मरन् क्षणे क्षणे विस्मरति च। तत्र त्वासन्नमरणे व्याधि-पीड़ितोऽन्तस्तापार्त्तिः क्षणं शय्यायां क्षणं मञ्चे इतस्ततः पर्य्य-टन् क्षुत्तृट्परिपीड़ितः किञ्चिन्मात्रमुदकं देहीत्यतिकार्पण्य-तया याचमानः, तत्रापि ज्वराविष्टानामुदकं न श्रेयस्करमिति ब्रुवतां मनसाऽतिद्वेषं कुर्व्वन्मन्दचैतन्यो भवति। ततश्च हस्तपादाकर्षणे न क्षमः रुदद्भिर्बन्धुभिर्जनैर्वेष्टितो वक्तुमक्षमः स्वार्ज्जितं धनादिकं कस्य भविष्यति इति चिन्तापरो वाष्प-विलोचनः। कण्ठे घुरघुरायिते सति शरीरान्निष्क्रान्तप्राणो यमदूतैर्भर्त्स्यमानः पाशयन्त्रितो नरकादीनि पूर्व्ववदेवाश्नुते।

तस्मात्संसारदावाग्नितापार्त्तो द्विजसत्तमाः।
अभ्यसेत्परमं ज्ञानं ज्ञानान्मुक्तो भविष्यति* ॥ १।
ज्ञानशून्या नरा ये तु पशवः परिकीर्त्तिताः।
तस्मात्संसारमोक्षाय परं ज्ञानं समभ्यसेत् ॥ २।
मानुष्यं जन्म सम्प्राप्य सर्व्वकर्म्मप्रसाधकम्।
हरिन्तु न भजेद्यस्तु कोऽन्यस्तस्मादचेतनः ॥ ३।
अहो चित्रमहो चित्रमहो चित्रं मुनीश्वराः।
संस्थिते कामदे विष्णौ नरो याति हि यातनाम् ॥ ४।
नारायणे जगन्नाथे सर्व्वकामफलप्रदे।
स्थितेऽपि ज्ञानशून्या वै पच्यन्ते नरके अहो ॥ ५।

---

* (ङ) पुस्तके आमलप्रचयाद्यद्वदग्नौ धाम्यन्ति धातवः।
तथैव जीविनः सर्व्वे आकर्म्मप्रचयात्क्रशः ॥

स्वविण्मूत्रपुरीषे तु शरीरेऽस्मिन्न शाश्वते ।
शाश्वतं भावयन्त्यज्ञा महामोहसमावृताः ॥ ६ ।
मूर्च्छितं मांसरक्ताद्यैर्देहं सम्प्राप्य यो नरः ।
संसारच्छेदकं विष्णुं न भजेद्यः स पातकी ॥ ७ ।
अहो कष्टमहो कष्टमहो कष्टन्तु मूर्खता ।
हरिध्यानपरो विप्रश्चण्डालोऽपि महासुखी ॥ ८ ।
स्वदेहान्निर्गतं दृष्ट्वा मलमूत्रादि किल्विषम् ।
उद्वेगं मानवा मूर्खाः किं नायान्ति हि पापिनः ॥ ९ ।
दुर्लभं जन्म मानुष्यं प्रार्थ्यते त्रिदशैरपि ।
तल्लब्ध्वा परलोकार्थं यत्नं कुर्य्याद्विचक्षणः ॥ १० ।
अध्यात्मध्यानसम्पन्ना* हरिपूजापरायणाः ।
लभन्ते परमं स्थानं पुनरावृत्तिदुर्लभम् ॥ ११ ।
यतो जातमिदं विश्वं यतश्चैतन्यमश्नुते ।
यस्मिंश्च विलयं याति संसारस्य विमोचकः ॥
निर्गुणोऽपि परानन्दो गुणवानिव भाति यः ।
तं समभ्यर्च्य देवेशं संसारात्परिमुच्यते ॥ १२।१३ ।

इति श्रीबृहन्नारदीयपुराणे संसारवर्णनं नाम त्रिंशोऽध्यायः ।



---

* ज्ञानसम्पन्ना इति (ङ) ।

# एकत्रिंशोऽध्यायः ।

ऋषय ऊचुः ।

भगवन् सर्व्वमाख्यातं यत्पृष्टं नो मुनीश्वर* ।
संसारपाशबद्धानां दुःखानि सुबहूनि च ॥ १ ॥
एतत्संसारपाशस्य छेदकः कतमः स्मृतः ।
केनोपायेन मोक्षः स्यात्तन्नो ब्रूहि महामुने ॥ २ ॥
प्राणिभिः कर्म्मजातानि क्रियन्ते प्रत्यहर्निशम् ।
भुज्यन्ते च मुनिश्रेष्ठा† तस्य नाशः कथं भवेत् ॥ ३ ॥
कर्म्मणा देहमाप्नोति देही कामेन वर्द्धते ।
कामाल्लोभाभिभूतस्य लोभात्क्रोधपरायणः ॥ ४ ॥
क्रोधाच्च धर्म्मनाशः स्याद्धर्म्मनाशान्मतिभ्रमः ।
प्रनष्टबुद्धिर्मनुजः पुनः पापं करोति च ॥ ५ ॥
तस्माद्देहः पापमूलः पाप्मकर्म्मरतस्तथा ।
देहजन्मवतां सिद्धिमोक्षोपायं वदस्व तत् ॥ ६ ॥

सूत उवाच ।

साधु साधु महाभागा मतिर्वो विमलोज्ज्वला ।
यस्मात्संसारदुःखानां नाशोपायमभीप्सवः ॥ ७ ॥
यस्याज्ञया जगत्सर्व्वं ब्रह्मा सृजति नित्यशः ।

---

* विदुषा त्वयेति (ङ) ।

† नरश्रेष्ठा इति (ङ) ।

हरिश्च पालको रुद्रो नाशकः स हि मोचकः* ॥ ८ ।
महदादिविशेषान्ता जाता यस्य प्रभावतः ।
तं विद्यान्मोचदं विष्णुं नारायणमनामयम्† ॥ ९ ।
यस्याभिन्नमिदं सर्व्वं यच्चेङ्गं यच्च नेङ्गते ।
तमीड्य‡मचरं देवं ध्यात्वा मोक्षेण युज्यते§ ॥ १० ।
अविकारमजं शुद्धं स्वप्रकाशं निरञ्जनम् ।
ज्ञानरूपं महानन्दं¶ प्राहुस्तं मोक्षसाधकम्‖ ॥ ११ ।
यस्यावताररूपाणि ब्रह्माद्या देवतागणाः ।
समर्च्चयन्ति तं विद्याच्छाश्वतस्थानदं** हरिम् ॥ १२ ।
जितप्राणा जिताहाराः सदा ध्यानपरायणाः ।
हृदि पश्यन्ति यं नित्यं तद्वि ज्ञेयं†† सुखावहम् ॥ १३ ।
निर्गुणोऽपि निराहारो लोकानुग्रहरूपधृक् ।
आकाशमध्यगः पूर्णस्तं‡‡ प्राहुर्मोक्षदायकम्§§ ॥ १४ ।

---

* मोक्षद इति (ङ)
† (ख) पुस्तके ९मश्लोकस्य परार्द्धं १०मश्लोकश्च न स्तः ।
‡ नित्यमिति (क), आद्यमिति (ङ) ।
§ दुःखेन मुच्यत इति (ग) ।
¶ सदानन्दमिति (ख) ।
‖ साधनमिति (ग), (ङ) ।
** ध्यानाध्यानगतमिति (ख) ।
†† तं विज्ञेयमिति (ख), तद्विज्ञेयं परम्पदमिति (ग) ।
‡‡ आकाशमध्य पूर्णस्त्विति (घ) ।
§§ साधनमिति (ख) ।

अध्यक्षः सर्व्वधर्म्माणां योगिनां* हृदये स्थितः।
अनुपमो†ऽखिलाधारस्तं‡ देवं शरणं व्रजेत्॥ १५।
सर्व्वं सङ्गृह्य कल्पान्ते शेते यस्तु जले स्वयम्।
तं प्राहुर्मोक्षदं विष्णुं मनुजा§स्तत्त्वदर्शिनः॥ १६।
वेदार्थविद्भिः कर्म्मज्ञै¶रिज्यते बहुभिर्मखैः‖।
कर्म्मणां फलदो विष्णुर्मोक्षदो भक्तवत्सलः॥ १७।
हव्यकव्यादिदानेषु पितृदेवादिरूपधृक्**।
भुङ्क्ते यद्दीश्वरोऽध्यक्षस्तं†† प्राहुर्मोक्षदं हरिम्॥ १८।
ध्यातो वा नमितो वाऽपि पूजितो वाऽपि भक्तितः।
ददाति शाश्वतं‡‡ स्थानं तं दयालुं समर्च्चयेत्॥ १९।
आधारः सर्व्वभूतानामेको यः पुरुषः स्मृतः§§।
जरामरणनिर्मुक्तो मोक्षदो हरिरव्ययः॥ २०।

---

* कर्म्मणा देहिनामिति (ख), कर्म्मणामिति (ग)।

† अरूपग इति (ख)।

‡ गुणाधार इति (ग)।

§ मुनय इति (ख), (ग)। (ख) पुस्तके अस्माच्छ्लोकादनन्तरं ५१ श्लोकावधिकः सन्दर्भो नास्ति।

¶ धर्म्मज्ञैरिति (ग), तत्त्वज्ञैरिति (ङ)।

‖ बहुदक्षिणैरिति (ङ)।

** हव्यकव्यादिनित्य येष्वपि देवादीति (क)।

†† अव्यक्त इति (ग)। श्लोकस्यास्य परार्द्धं (घ) पुस्तके नास्ति।

‡‡ स्वर्गतमिति (क)।

§§ पर इति (ङ)।

सम्पूज्य यस्य पादाब्जं देहिनोपि* मुनीश्वराः ।
अमर्त्यतां व्रजन्त्याशु तं विदुः पुरुषोत्तमम् ॥ २१ ।
आनन्दमक्षरं ब्रह्म परं ज्योतिः सनातनम् ।
परात्परतरं यत्तु तद्विष्णोः परमं पदम् ॥ २२ ।
अक्षरं निर्गुणं नित्यमद्वितीयमरूपकम् ।
परिपूर्णं ज्ञानमयं विदुर्मोक्षप्रदायकम् ॥ २३ ।
एवम्भूतं परं वस्तु योगमार्गविधानतः ।
य उपास्ते सदा योगी स याति परमं पदम्† ॥ २४ ।
सर्व्वसङ्गपरित्यागी शमादि‡गुणसंयुतः ।
कामाद्यैर्वर्ज्जितो§ योगी लभते परमं पदम् ॥ २५ ।

ऋषय ऊचुः ।

कर्म्मणा केन योगस्य सिद्धिर्भवति योगिनाम् ।
तदुपायं यथातत्त्वं¶ ब्रूहि नो वदतां वर ॥ २६ ।

सूत उवाच ।

ज्ञानलभ्यं परं मोक्षं प्राहुस्तत्त्वार्थचिन्तकाः ।
तज्ज्ञानं भक्तिमूलञ्च भक्तिः सत्कर्म्मजा‖ तथा** ॥ २७ ।

---

* देवा अपीति (घ) ।

† २३, २४ श्लोकौ (घ) पुस्तके नास्ति ।

‡ स्वर्गतमिति (क) ।

§ कामादिवर्ज्जित इति (घ) ।

¶ महाभाग इति (क) ।

‖ सत्सङ्गजेति (ग) ।

** स्मृता इति (ङ) ।

दानानि यज्ञा विविधास्तीर्थयात्रादयः कृताः* ।
येन† जन्मसहस्रेषु तस्य भक्तिर्भवेद्धरौ ॥ २८ ।
अक्षयः परमो धर्म्मो भक्तिलेशेन जायते ।
श्रद्धया परया चैव सर्व्वपापं प्रणश्यति ॥ २९ ।
सर्व्वपापेषु नष्टेषु बुद्धिर्भवति निर्म्मला ।
सैव बुद्धिः समाख्याता ज्ञानशब्देन सूरिभिः ॥ ३० ।
ज्ञानञ्च मोक्षदं प्राहुस्तज्ज्ञानं योगिनां भवेत् ।
योगस्तु द्विविधः‡ प्रोक्तः कर्म्मज्ञानप्रभेदतः ॥ ३१ ।
क्रियायोगं विना नृणां ज्ञानयोगो न सिध्यति ।
क्रियायोगरतः§स्तस्माच्छ्रद्धया हरिमर्च्चयेत् ॥ ३२ ।
प्रतिमाद्विजभूम्यग्निसूर्य्यचित्रादिषु¶ द्विजाः ।
अर्च्चयेद्धरिमेतेषु विष्णुः सर्व्वगतो यतः ॥ ३३ ।
कर्म्मणा मनसा वाचा परपीड़ापराङ्मुखः ।
परिपूर्णात्मकं विष्णुं पूजयेद्भक्तिसंयुतः ॥ ३४ ।
अहिंसा सत्यमक्रोधो ब्रह्मचर्य्यापरिग्रहौ|| ।
अनीर्षा च दया चैव योगयोरुभयोः समाः ॥ ३५ ।

---

* वेदेषु च निरूपिता इति (क) ।

† तेनेति (क) ।

‡ विविध इति (क), (घ) ।

§ क्रियायोगे मत इति (घ) ।

¶ चित्राम्बुष्विति (ग) ।

|| अपरग्रहैरिति (ग), (ङ) ।

चराचरात्मकं विश्वं विष्णुरेव सनातनः ।
इति निश्चित्य मनसा योगद्वितयमभ्यसेत् ॥ ३६ ।
आत्मवत्सर्व्वभूतानि मन्वाना ये मनीषिणः ।
ते जानन्ति परं भावं देवदेवस्य चक्रिणः ॥ ३७ ।
यदि क्रोधादिदुष्टात्मा पूजाध्यानपरो* भवेत् ।
न तदा तुष्यते विष्णुः प्रयतो धर्म्मतः स्मृतः ॥ ३८ ।
यदि कामादिदुष्टात्मा देवपूजापरो† भवेत् ।
दम्भाचारस्तु विज्ञेयः स वै पातकिनां‡ वरः ॥ ३९ ।
तपःपूजा§ध्यानरतो यस्त्वसूयापरो भवेत् ।
तत्तपः सा च पूजा च तद्ध्यानञ्च निरर्थकम् ॥ ४० ।
तस्मात्सर्व्वात्मकं विष्णुं शमादिगुणतत्परः ।
मुक्त्यर्थमर्च्चयेत्सम्यक्क्रियायोगपरो नरः ॥ ४१ ।
कर्म्मणा मनसा वाचा सर्वलोकहिते रतः ।
समर्च्चयति देवेशं क्रियायोगः स उच्यते ॥ ४२ ।
नारायणं जगद्योनिं सर्व्वान्तर्यामिनं हरिम् ।
स्तोत्राद्यैः पूजयेद्यस्तु क्रियायोगः स उच्यते¶ ॥ ४३ ।
उपवासादिभिश्चैव पुराणश्रवणादिभिः ।

---

* ध्यानपूजारत इति (ग) ।

† हरिपूजापर इति (ग) ।

‡ सर्व्वपातकिनामिति (घ) ।

§ तप.पूत इति (क), (ङ) । ३८।३९ श्लोकौ (घ) पुस्तके न स्तः ।

¶ क्रियागोग इति स्मृत इति (ङ) ।

पुष्पाद्यैः प्रार्चनं* विष्णोः क्रियायोग इति स्मृतः† ॥ ४४ ।
एवं भक्तिमतां विष्णौ क्रियायोगरतात्मनाम् ।
सर्व्वपापानि नश्यन्ति पूर्वजन्मार्ज्जितानि वै ॥ ४५ ।
पापक्षयाच्छुद्धमतिर्वाञ्छति ज्ञानमुत्तमम् ।
ज्ञानं हि मोक्षदं ज्ञेयं‡ तदुपायं वदामि तत् ॥ ४६ ।
चराचरात्मकं लोके नित्यञ्चानित्यमेव च ।
सम्यग्विधारयेद्धीमान् सद्भिः शास्त्रार्थकोविदैः ॥ ४७ ।
अनित्यांश्च पदार्था हि नित्य एको हरिः स्मृतः ।
अनित्यानि परित्यज्य नित्यमेव समाश्रयेत् ॥ ४८ ।
इहामुत्र च भोगेषु विमुक्तश्च तथा भवेत् ।
अविरक्तो भवेद्यस्तु संसारे वर्त्तते पुनः ॥ ४९ ।
अनित्येषु पदार्थेषु यस्तु रागी चरेन्नरः ।
तस्य संसारव्युच्छित्तिः कदाचिन्नैव जायते ॥ ५० ।
शमादिगुणसम्पन्नो मुमुक्षुर्ज्ञानमभ्यसेत् ।
शमादिगुणहीनस्य ज्ञानं नैव हि सिध्यति ॥ ५१ ।
रागद्वेषविहीनो यः शमादिगुणसंयुतः ।
हरिध्यानपरो नित्यं मुमुक्षुरभिधीयते ॥ ५२ ।
सर्वभूतदयायुक्तः कामक्रोधविवर्ज्जितः ।
हरिध्यानपरो नित्यं मुमुक्षुरभिधीयते ॥ ५३ ।

---

* चार्च्चनमिति (क), (ग) ।

† स उच्यते इति (ग) । (ङ) पुस्तके एष श्लोक, परश्लोकस्य पूर्व्वार्द्धञ्च न स्तः ।

‡ प्राहुरिति (ग) ।

चतुर्भिः साधनैरेभिर्विशुद्धमतिरच्युतम् ।
सर्व्वगं भावयेद्विप्राः सर्व्वभूतदयापरम् ॥ ५४ ।
पराचरात्मकं* विश्वं स्थितं व्याप्य सनातनम् ।
विष्णुं ज्ञानेन जानीयात्तज्ज्ञानं योगजं विदुः ॥ ५५ ।
योगोपायमतो वच्मे संसारपरिपन्थिनः ।
योगध्यानं विशुद्धं स्यात्तज्ज्ञानं मोक्षदं विदुः ॥ ५६ ।
आत्मनो द्विविधं प्राहुः परापरविभेदतः ।
द्वे ब्रह्मणी वेदितव्ये इति चाथर्व्वणी श्रुतिः ॥ ५७ ।
परस्तु निर्गुणः प्रोक्तः† अहङ्कारयुतोऽपरः ।
तयोरभेदविज्ञानं योग इत्यभिधीयते ॥ ५८ ।
एवं भूतात्मके देहे यः साक्षी हृदये स्थितः ॥
अपरः प्रोच्यते सद्भिः परमात्मा परः स्मृतः ॥ ५९ ।
शरीरं क्षेत्रमित्याहुस्तत्स्थः क्षेत्रज्ञ उच्यते ।
अव्यक्तः परमः शुद्धः परिपूर्ण उदाहृतः ॥ ६० ।
यदा त्व‡भेदविज्ञानं जीवात्मपरमात्मनोः ।
भवेत्तदा मुनिश्रेष्ठाः§ पाशच्छेदो भविष्यति ॥ ६१ ।
एकः शुद्धोऽक्षरो नित्यः परमात्मा जगन्मयः ।

---

* चराचरात्मकमिति (ग) ।

† अत्र सन्धिविच्छेद आर्षः ।

‡ यदात्मेति (घ) ।

§ भवेदात्मनि च श्रेष्ठा इति (च) ।

नृणां विज्ञानभेदेन* भेदवानिव लक्ष्यते ॥ ६२ ।
एकमेवाद्वितीयन्तु परं ब्रह्म सनातनम् ।
गीयमानञ्च वेदान्तै†स्तस्मान्नास्त्यपरो द्विजाः ॥ ६३ ।
न तस्य कर्म्म कार्य्यं वा रूपं वर्णमथापि वा ।
कर्त्तृत्वं‡ वापि भोक्तृत्वं निर्गुणस्य परात्मनः ॥ ६४ ।
निदानं सर्व्वहेतूनां§ तेजो यत्तेजसां परम्¶ ।
अन्यन्नास्ति किमस्मात्तु ज्ञेयं वै‖ मुक्तिहेतवे ॥ ६५ ।
शब्दं ब्रह्ममयं यत्तन्महदाद्यादिकं द्विजाः ।
तद्विचाराद्भवेज्ज्ञानं** परं मोक्षस्य साधनम् ॥ ६६ ।
यस्य ज्ञानविहीनैस्तु†† दृश्यते विविधं जगत् ।
परमज्ञानिनामेतत्तावद्ब्रह्मात्मकं‡‡ द्विजाः ॥ ६७ ।
एक एव परानन्दो निर्गुणः परमात्परः ।
स तु§§ विज्ञानभेदेन बहुरूपधरोऽव्ययः ॥ ६८ ।

---

* विज्ञानमात्रेणेति (ङ) ।
† वेदाद्यैरिति (क) ।
‡ कार्य्यत्वमिति (घ) ।
§ भूतानामिति (घ) ।
¶ प्रभुमिति (क), (ङ) ।
‖ अस्माद्वै तज्ज्ञेयमिति (क), अस्मात्तु तज्ज्ञेयमिति (ग), (ङ) ।
** ध्यानमिति (क), (ग), (ङ) ।
†† सम्यग्ध्यानविहीनानामिति (क), (ग), (ङ) ।
‡‡ परब्रह्मात्मकमिति (ख), (ग), भवेद्ब्रह्मात्मकमिति (ङ), इतीति (ख), (ग) ।
§§ स चेति (घ) ।

मायिनो मायया भेदं पश्यन्ति परमात्मनि ।
तस्मान्मायां त्यजे*द्योगान्मुमुक्षुर्विप्रसत्तमाः ॥ ६९ ॥
नासद्रूपा न सद्रूपा माया वै नोभयात्मिका† ।
अनिर्व्वाच्या स्थिता ज्ञेया भेदबुद्धिप्रदायिनी ॥ ७० ॥
मायैवाज्ञानशब्देन शब्द्यते मुनिसत्तमाः ।
तस्मादज्ञानविच्छेदो भवेद्विजितमायिनाम्‡ ॥ ७१ ॥
सनातनं परं ब्रह्म ज्ञानशब्देन कथ्यते ।
ज्ञानिनां परमात्मा वै हृदि भाति निरन्तरम् ॥ ७२ ॥
अज्ञानं नाशयेद्योगी योगेन बुधसत्तमाः ।
अष्टाङ्गैः सिध्यते योगस्तानि वक्ष्यामि तत्त्वतः ॥ ७३ ॥
यमाश्च नियमाश्चैव आसनानि च सत्तमाः ।
प्राणायामः प्रत्याहारो धारणा ध्यानमेव च ॥ ७४ ॥
समाधिश्च मुनिश्रेष्ठा योगाङ्गानि यथाक्रमम् ।
एवं संक्षेपतो वक्ष्ये विधानानि मुनीश्वराः ॥ ७५ ॥
अहिंसा सत्यमस्तेयं ब्रह्मचर्य्याऽपरिग्रहाः ।
अक्रोधश्चानसूया च प्रोक्ताः सङ्क्षेपतो यमः ॥ ७६ ॥
सर्व्वेषामेव भूतानामक्लेशजननं हि यत् ।
अहिंसा कथिता सद्भिर्योगसिद्धिप्रदायिनी ॥ ७७ ॥
यथार्थकथनं यत्तु धर्म्माधर्म्मविवेकतः ।

---

* जयेदिति (क), (ग), (ङ), त्यजेदिति (ख) ।

† नैवोभयात्मिकेति (ख), (ग), (ङ) ।

‡ भवेद्वै जितमायिनामिति (ख), (ग), (ङ) ।

सत्यं प्राहुर्मुनिश्रेष्ठा अस्तेयं शृणुताधुना ॥ ७८ ।
चौर्य्येण वा बलेनापि परस्वहरणं हि यत् ।
स्तेयमित्युच्यते सद्भिरस्तेयं तद्विपर्य्ययः ॥ ७९ ।
सर्व्वत्र मैथुनत्यागो ब्रह्मचर्य्यं प्रकीर्त्तितम् ।
ब्रह्मचर्य्यपरित्यागी ज्ञानवानपि पातकी ॥ ८० ।
सर्व्वसङ्गपरित्यागी मैथुने यस्तु वर्त्तते ।
स चाण्डालसमो ज्ञेयः सर्व्ववर्णवहिष्कृतः ॥ ८१ ।
यस्तु योगरतो विप्रो विषयेषु स्पृहान्वितः ।
तत्संभाषणमात्रेण ब्रह्महत्या भवेन्नृणाम् ॥ ८२ ।
सर्व्वसङ्गपरित्यागी पुनः सङ्गी भवेद्यदि ।
तत्सङ्गसङ्गिनां सङ्गान्महापातकदोषभाक् ॥ ८३ ।
अनादानं हि* द्रव्याणामापद्यपि मुनीश्वराः ।
अपरिग्रह इत्युक्तो योगसिद्धिप्रदायकः† ॥ ८४ ।
आत्मनस्तु समुत्कर्षं कुर्व्वन्निष्ठुरभाषणम् ।
क्रोधमाहुर्धर्म्मविदो ह्यक्रोधस्तद्विवर्ज्जनम्‡ ॥ ८५ ।
धनाद्यैरधिकं दृष्ट्वा भृशं मनसि तापनम् ।
असूया कीर्त्तिता सद्भिस्तदयोगोऽनसूयता§ ॥ ८६ ।

---

* त्विति (घ) ।

† संसिद्धिकारक इति (क), (ग), संसिद्धिकारणमिति (ख) ।

‡ विसर्ज्जनमिति (ख), तद्विपर्य्यय इति (ग), (ङ) ।

§ तत्त्यागो ह्यनसूयतेति (क), (ख), (ग), (ङ) ।

एवं सङ्क्षेपतः प्रोक्ता यमाश्च* बुधसत्तमाः ।
नियमानथ† वक्ष्यामि शृणुध्वं सुसमाहिताः ॥ ८७ ।
तपः स्वाध्यायसन्तोषः शौचञ्च हरिपूजनम् ।
सन्ध्योपासनयुक्ताश्च‡ नियमाः परिकीर्त्तिताः ॥ ८८ ।
चान्द्रायणादिभिर्यत्तु शरीरस्य विशोषणम् ।
तपस्तु गदितं सद्भिर्योगसाधनमुत्तमम् ॥ ८९ ।
प्रणवञ्चोपनिषदं द्वादशाक्षरपञ्च च§ ।
अष्टाक्षरमहावाक्यमित्यादीनाञ्च यो जपः¶ ॥ ९० ।
स्वाध्यायश्च समाख्यातो योगसाधनमुत्तमम् ।
स्वाध्यायं यस्त्यजेन्मूढ़स्तस्य योगो न सिध्यति ॥ ९१ ।
योगं विनापि स्वाध्यायैः पापनाशो भवेद्ध्रुवम् ।
स्वाध्यायैः स्तूयमानास्तु सुप्रसीदन्ति देवताः ॥ ९२ ।
जपस्तु त्रिविधः प्रोक्तो वाचिकोपांशुमानसैः‖ ।
जपेष्वेतेषु विप्रेन्द्राः पूर्व्वात्पूर्व्वात्परो वरः ॥ ९३ ।
मन्त्रस्योच्चारणं सम्यक् स्फुटाक्षरपदं यथा ।
जपस्तु वाचिकः प्रोक्तः सर्वयज्ञफलप्रदः** ॥ ९४ ।

---

* यमा अपीति (ग) ।

† नियमांश्च प्रवक्ष्यामीति (ख) ।

‡ मुख्याश्चेति (ख) ।

§ द्वादशाक्षरमेव चेति (ख), (ग), (घ) ।

¶ यीजपेदिति (क) ।

‖ मानसा इति बहुषु पाठः ।

** योगसिद्धिप्रदायक इति (ख), (ङ) ।

मन्त्रस्योच्चारणं किञ्चित्पदात्पदविवेचनम्* ।
जपस्तु कथितोपांशुः पूर्व्वस्माद्†  द्विगुणाधिकः ॥ ६५ ।
धिया यदक्षरश्रेण्यां यत्तदर्थविचारणम् ।
मानसस्तु जपः प्रोक्तो योगसिद्धिप्रदायकः‡ ॥ ६६ ।
जपेन देवता नित्यं स्तूयमाना प्रसीदति ।
तस्मात्स्वाध्यायसम्पन्नो लभेत्§ सर्व्वमनोरथान् ॥ ६७ ।
यदृच्छालाभसन्तुष्टिः सन्तोष इति गीयते¶ ।
सन्तोषहीनः पुरुषो न लभेद्धर्म्मसम्पदः‖ ॥ ६८ ।
न जातु कामः कामानामुपभोगेन शाम्यति ।
इत्यधिकं** कदा लाभ इति कामः प्रवर्द्धते†† ॥ ६६ ।
तस्मात्कामं परित्यज्य देहसंशोषकारणम्‡‡ ।
यदृच्छालाभसन्तोषी भवेद्धर्म्मपरायणः ॥ १०० ।
वाह्याभ्यन्तरभेदेन शौचं तद्द्विविधं स्मृतम् ।

---

* विरेचनमिति (ख) ।

† पूर्व्वस्येति (क), (घ) ।

‡ ६५।६६ श्लोकौ (ङ) पुस्तके न स्तः ।

§ लभेतेति साधु ।

¶ कथ्यते रति (ख) ।

‖ धर्म्मं सर्व्वदेति (क), (ग) । कर्म्म सर्व्वदेति (ङ) ।

** इतोऽधिकमिति (क), (ख), (ङ) । ततोऽधिकमिति (ग) ।

†† कामस्तु लभ्यते इति (ख) । प्रवर्त्तते इति (ङ) ।

‡‡ संशयकारणमिति (क)।

मृज्जलाभ्यां बहिःशुद्धिर्भावशुद्धिरथान्तरम्* ॥ १०१ ।
अन्तःशुद्धिविहीनैस्तु याः क्रियाः† विविधाः कृताः ।
न फलन्ति मुनिश्रेष्ठा भस्मनि न्यस्तहव्यवत् ॥ १०२ ।
भावशुद्धिविहीनानां समस्तं कर्म्म निष्फलम् ।
तस्माद्रागादिकं सर्व्वं परित्यज्य सुखी भवेत् ॥ १०३ ।
मृदां भारसहस्रैस्तु कोटिकुम्भजलैस्तथा ।
कृतशौचोऽविशुद्धात्मा‡ स चाण्डाल इति स्मृतः§ ॥ १०४ ।
अन्तःशुद्धिविहीनस्तु देवपूजापरो यदि ।
तद्दैवमेव तं हन्ति नरकञ्च प्रपद्यते¶ ॥ १०५ ।
अन्तःशुद्धिविहीनस्य बहिःशुद्धिं करोति यः ।
अलङ्कृतः सुराभाण्डमिवाभाति द्विजोत्तमाः‖ ॥ १०६ ।
मनःशुद्धिविहीना ये** तीर्थयात्रां प्रकुर्व्वते ।
न तान् पुनन्ति विप्रेन्द्राः सुराभाण्डमिवापगाः ॥ १०७ ।
वाचा धर्म्मान् प्रवदति मनसा पापमृच्छति†† ।

---

* तथान्तरमिति (क), (ग), (ङ) । तथापरेति (ख) ।
† येऽध्वरा इति (ख) (ग) ।
‡ दुष्टात्मेति इति (ख), (ग) ।
§ चाण्डालसदृशो हि सः इति (ख) ।
¶ चोपपद्यत इति (ग) ।
‖ चाण्डालसदृशो हि स इति (ख), इति भाति द्विजोत्तमा इति (ङ) ।
** विहीनास्त्विति (ग) ।
†† इच्छतीति (ख), (ग) ।

जानीयात्तं मुनिश्रेष्ठा महापातकिनां वरम् ॥ १०८ ।
विशुद्धमानसा ये तु धर्म्ममात्रमनुत्तमम्* ।
कुर्व्वन्ति तत्फलं विद्यादक्षय्यसुखदायकम् ॥ १०९ ।
कर्म्मणा मनसा वाचा स्तुतिस्मरणपूजनैः ।
हरिभक्तिर्दृढ़ा यस्य हरिपूजेति गीयते ॥ ११० ।
एवं यमाश्च नियमाः संक्षेपाद्वः प्रचोदिताः ।
एभिर्विशुद्धमनसां मोक्षं हस्तगतं विदुः ॥ १११ ।
यमैश्च नियमैश्चैव स्थिरबुद्धिर्जितेन्द्रियः ।
अभ्यसेदासनं सम्यग्योगसाधनमुत्तमम् ॥ ११२ ।
पद्मकं स्वस्तिकं पीठं सौरञ्चैव च† कौञ्जरम् ।
कौर्म्मं वज्रासनञ्चैव‡ वाराहं मृगचैलिकम् ॥ ११३ ।
क्रौञ्चञ्च नालिकञ्चैव सर्व्वतोभद्रमेव वा ।
वार्षभं नागमात्स्यञ्च वैयाघ्रञ्चार्द्धचन्द्रकम् ॥ ११४ ।
दण्डं तार्क्षासनं§ शैलं खड्गं मुद्गरमेव वा¶ ।
माकरं त्रैपथं काष्ठं स्थाणु वै हास्तिकर्णिकम् ॥ ११५ ।
भौमं वीरासनञ्चैव योगसाधनकारणम् ।
त्रिंशत्संख्यान्यासनानि मुनीन्द्राः कथितानि वः ॥ ११६ ।

---

* अनुपममिति (ग), (घ), (ङ) ।

† सौवर्णञ्चैवेति (क), (ङ) । सद्यं कौकुटकौञ्जराविति (ख), (ग) ।

‡ भद्रासनञ्चैवेति (ङ) ।

§ चण्डं चापासनमिति (ख) ।

¶ एव चेति (क) ।

एषामेकतमं* बद्धा गुरुभक्तिपरायणः ।
अभ्यासेन जयेत्प्राणान्रागातीतो† विमत्सरः ॥ ११७ ।
प्राङ्मुखोदङ्मुखो वापि तथा प्रत्यङ्मुखोऽपि वा ।
अभ्यासेन जयेत्प्राणान्निःशब्दे जनवर्ज्जिते‡ ॥ ११८ ।
प्राणो वायुः शरीरस्थ आयामस्तस्य निग्रहः ।
प्राणायाम इति प्रोक्तो द्विविधः कथितो हि सः ॥ ११९ ।
अगर्भश्च सगर्भश्च द्वितीयस्तु तयोर्व्वरः ।§
जपध्यानं विनाऽगर्भः सगर्भस्तत्समन्वितः ॥ १२० ।
रेचकः पूरकश्चैव कुम्भकः शून्यकस्तथा ।
एवं चतुर्व्विधः प्रोक्तः प्राणायामो मनीषिभिः ॥ १२१ ।
जन्तूनां दक्षिणा नाड़ी पिङ्गला परिकीर्त्तिता ।
सूर्य्यदैवतका चैव पितृयोनिरिति स्मृता ॥ १२२ ।¶
देवयोनिरिति ख्याता इड़ा नाड़ी त्वदक्षिणा ॥ १२३ ।
तत्राधिदैवतं चन्द्रः शृणुध्वं गदतो मम ।
एतयोरुभयोर्मध्ये सुषुम्ना नाड़िका स्मृता ।
अतिसूक्ष्मा गुह्यतमा ज्ञेया सा ब्रह्मदेवता ॥ १२४ ।
वामेन रेचयेद्वायुं रेचनाद्रेचकः स्मृतः ।

---

* एवमेकासनमिति (क) ।

† निशान्ते जनवर्ज्जिते इति (ख), तत्र परश्लोकोनास्ति । द्वन्द्वातीत इति (ग) ।

‡ (ग) पुस्तके श्लोकस्यैतस्य पूर्व्वार्द्धं नास्ति ।

§ एतदर्द्धं (घ) पुस्तके नास्ति । अगर्भश्च द्वितीयस्तु सगर्भश्च तयोर्व्वर इति (ख) ।

¶ एतौ श्लोकौ (घ) पुस्तके न स्तः । कुम्भकश्च पृथक् पृथगिति (क), (ग) ।

पूरयेद्दक्षिणेनैव पूरणात्पूरक: स्मृत: ॥ १२५ ।
स्वदेहपूरितं वायुं निगृह्य न विमुञ्चति ।
सम्पूर्णकुम्भवत्तिष्ठेत्कुम्भक: स हि विश्रुत: ॥ १२६ ।
न गृह्णाति न त्यजति वायुमन्तर्बहि:स्थितम् ।
ज्ञेयं तच्छून्यकं नाम प्राणायामं यथास्थितम्* ॥ १२७ ।
शनै: शनैर्विजेतव्या: प्राणा मत्तगजेन्द्रवत्† ।
अन्यथा खलु जायन्ते महारोगभयङ्करा: ॥ १२८ ।
क्रमेण योजयेद्वायुं योगी विगतकल्मष: ।
सर्व्वपापविनिर्मुक्तो ब्रह्मण: पदमश्नुते ॥ १२९ ।
विषयेषु प्रसक्तानि इन्द्रियाणि मुनीश्वरा: ।
समाहृत्य निगृह्णाति प्रत्याहारस्तु स स्मृत:‡ ॥ १३० ।
जितेन्द्रिया महात्मानो ध्यानशून्या अपि द्विजा: ।
प्रयान्ति परमं स्थानं पुनरावृत्तिदुर्लभम् ॥ १३१ ।
अनिर्ज्जित्येन्द्रियग्रामं यस्तु ध्यानपरो भवेत् ।
मूढात्मानञ्च तं विद्याद्ध्यानञ्चास्य§ न सिध्यति ॥१३२ ।
यद्यत्पश्यति तत्सर्व्वं पश्येदात्मवदात्मनि¶ ।

---

* प्राणायामस्य नपुंसकत्वमार्षम् ।

† मत्तगजेन्द्रवदिति (क) ।

‡ संस्मृत इति (ख) । तत्स्मृत इति (क), (ग) ।

§ चास्मै इति (क), (ग) ।

¶ पश्येदात्मानमात्मनेति (ग) ।

प्रत्याहृतानीन्द्रियाणि धारयेत्सा तु धारणा* ॥ १३३ ।
योगी जितेन्द्रियग्रामस्तानि धृत्वा दृढं हृदि† ।
आत्मानं परमं ध्यायेत्सर्व्वधातारमच्युतम् ॥ १३४ ।
ध्यायेद्विश्वात्मकं विष्णुं सर्व्वलोकैककारणम् ।
विकसत्पद्मपत्राक्षं चारुकुण्डलभूषितम्‡ ॥ १३५ ।
श्रीवत्सवक्षसन्देवं सुरासुरनमस्कृतम् ।
अष्टारे हृत्सरोजेऽन्तर्द्वादशाङ्गुलविश्रुतम्§ ॥ १३६ ।
ध्यायेदात्मानमध्यक्षं¶ परात्परतरं विभुम् ।
ध्यानं सद्भिर्निगदितं प्रयतस्यैकतानता‖ ॥ १३७ ।
ध्यानङ्कृत्वा मुहूर्त्तं वा परं मोक्षं लभेन्नरः ।
ध्यानात्पापानि नश्यन्ति ध्यानान्मोक्षञ्च विन्दति** ।

---

* साधुधारणेति (ग) ।

† दृढं यदीति (ग) ।

‡ चारुमण्डलभूषितमिति (ग) ।

§ अन्तरे हृत्सरोजे त्विति (क), अधिष्ठाने हृत्सरोजे इति (ख), (ख), (ग) पुस्तकयोरस्माच्छ्लोकात् पूर्व्वं—

दीर्घबाहुं सुन्दराङ्गं सर्व्वालङ्कारभूषितम् ।
पीताम्बरधरं देवं हेमयज्ञोपवीतिनम् ॥
बिभ्रतं तुलसीमालां कौस्तुभेन विराजितम् ।

इत्यधिकः पाठो वर्त्तते । (ङ) पुस्तके एष श्लोक एव नास्ति ।

¶ अव्ययमिति (ख), अव्यक्तमिति (ग) ।

‖ प्रत्ययस्थैर्य्यकात्मभिरिति (ख) ।

** स विन्दतीति (ग) ।

ध्यानात्प्रसीदति हरि*र्ध्यानात्सर्व्वार्थसाधनम्† ॥ १३८ ।
यद्यद्रूपं महाविष्णोस्तत्तद्ध्यायेन्महात्मनः ।
तेन ध्यानेन तुष्टात्मा हरिर्मोक्षं ददाति वै ॥ १३९ ।
अचलञ्च मनः कुर्य्याद्ध्येयवस्तुनि‡ सत्तमाः ।
ध्यानध्येयध्यातृभावो यथा नश्यति निर्भरम् ॥ १४० ।
अतोऽमृतत्वं§ भवति ज्ञानामृतनिषेवणात् ।
भवेन्निरन्तरं ध्यानादभेदप्रतिपादनम् ॥ १४१ ।
सुषुप्तिवत्परानन्दयुक्तश्चोपरतेन्द्रियः ।
निर्व्वातदीपवत्संस्थः समाधिरभिधीयते ॥ १४२ ।
सर्व्वोपाधिविनिर्म्मुक्तः सदानन्दैकविग्रहः ।
निश्चलः परिपूर्णश्च समाधिरभिधीयते¶ ॥ १४३ ।
योगी समाध्यवस्थायां न शृणोति न पश्यति ।
न घ्राति नैव स्पृशति न किञ्चिद्वक्ति सत्तमाः ॥ १४४ ।
आत्मा तु निर्म्मलः शुद्धः सच्चिदानन्दविग्रहः ।
सर्व्वोपाधिविनिर्म्मुक्तो योगिनां भात्यचञ्चलः‖ ॥ १४५ ।
निर्गुणोऽपि परो देवो ह्यज्ञानाद्गुणवानिव ।

---

* ध्यात्मेति (ङ) ।

† ध्यानं सर्व्वार्थसाधनमिति (ख) ।

‡ विष्णुश्चेति (ग) ।

§ ततोऽमृतत्वमिति (ख), (ग), (ङ) ।

¶ एष श्लोकः (ख) पुस्तके नास्ति ।

‖ भात्यचञ्चल इति (क), (घ) ।

विभात्यज्ञाननाशे तु यथापूर्व्वं व्यवस्थितः ॥ १४६ ।
परज्योतिरमेयात्मा मायावानिव मायिनाम् ।
तन्नाशे निर्म्मलं ब्रह्म प्रकाशयति पण्डिताः* ॥ १४७ ।
एकमेवाद्वितीयं तत्परं ज्योतिर्निरञ्जनम् ।
सर्व्वेषामेव भूतानामन्तर्यामितया स्थितम् ॥ १४८ ।

अणोरणीयान्महतो महीयान्
सनातनात्माखिलविश्वहेतुः ।
पश्यन्ति यं ज्ञानविदां वरिष्ठाः
परात्परस्मात्†परमं पवित्रम् ॥ १४९ ।

अकारादि-क्षकारान्त-वर्णभेद-व्यवस्थितः ।
पुराणपुरुषोऽनादिः शब्दब्रह्मेति‡ गीयते ॥ १५० ।
पञ्चभूतात्मके देहे ह्यन्तःकरणसंयुतः ।
पुराणपुरुषोदेवः अपरात्मेति कीर्त्यते ॥ १५१ ।
विशुद्धमजरं नित्यं पूर्णमाकाशमव्ययम्§ ।
आनन्दं निर्म्मलं शान्तं परं ब्रह्मेति गीयते ॥ १५२ ।
यतोवाचो निवर्त्तन्ते अप्राप्य मनसा सह ।
परं ज्योतिः परं धाम परं ब्रह्मेति गीयते¶ ॥ १५३ ।

---

* सत्तमा इति (ख) ।
† ध्यानात्परस्मादिति (ख) ।
‡ स च ब्रह्मेतीति (ख) ।
§ आकाशमध्यगमिति (ख) ।
¶ १५१—१५३ श्लोकाः (घ) पुस्तके न सन्ति ।

सृष्टिस्थित्यन्तकरणे ब्रह्मविष्णुमहेश्वराः ।
यस्यायुतायुतांशांशास्तद्ब्रह्मेत्यभिधीयते ॥ १५४ ।
योगिनो हृदि पश्यन्ति परात्मानं सनातनम् ।
अविकारात्मजं* शुद्धं परब्रह्मेति† गीयते ॥ १५५ ।
ध्यानमन्यत्प्रवक्ष्यामि शृणुध्वमृषिसत्तमाः ।
संसारतापतप्तानां सुधावृष्टिसमं नृणाम् ॥ १५६ ।
नारायणं परानन्दं स्मरेत्प्रणवसंस्थितम् ।
नादरूप‡मनौपम्यमर्द्धमात्रापरिस्थितम्§ ॥ १५७ ।
अकारं ब्रह्मणोरूपमुकारं विष्णुरूपवत् ।
मकारं रुद्ररूपं स्यादर्द्धमात्रा परात्मकम् ॥ १५८ ।
मात्रा तत्र समाख्याता ब्रह्मविष्णुशिवदैवता ।
तेषां समुच्चयं विप्राः परं ब्रह्मप्रबोधकम् ॥ १५९ ।
वाच्यन्तु परमं ब्रह्म वाचकः प्रणवः स्मृतः ।
वाच्यवाचकसम्बन्धो ह्युपचारस्तयोर्द्विजाः ॥ १६० ।
जपन्तः परमं नित्यं मुच्यन्ते सर्व्वपातकैः ।
तदभ्यासेन संयुक्ताः परं मोक्षं लभन्ति¶ च ॥ १६१ ।
जपश्च परमं नित्यं ब्रह्मविष्णुशिवात्मकम् ।

---

* अविकारमजमिति (ख) पाठः ।

† परब्रह्मेति (घ) पुस्तकस्य पाठः ।

‡ मन्त्ररूपमिति (क) पाठः ।

§ अर्द्धमात्रात्परिस्थितमिति (क), (ङ) पुस्तकयोः पाठः ।

¶ लभन्ते इति साधु ।

कोटिसूर्य्यसमं तेजो ध्यायेदात्मनि निर्म्मलम् ।
शालग्रामशिलारूपं प्रतिमारूपमेव वा ॥ १६२ ।
यद्यत्पापहरं वस्तु तत्तद्वा चिन्तयेद्धृदि ।
यदेतद्वैष्णवं ध्यानं कथितं वो मुनीश्वराः ।
एतद्विदित्वा योगीन्द्रो लभेन्मोक्षमनुत्तमम् ॥ १६३ ।
यश्चैतत्पुण्यमाख्यातं शृणुयाद्वा समाहितः ।
सर्व्वपापविनिर्म्मुक्तो हरिसारूप्यमश्नुते ॥ १६४ ।

इति श्रीबृहन्नारदीयपुराणे एकत्रिंशोऽध्यायः ।

---

## द्वात्रिंशोऽध्यायः ।

ऋषय ऊचुः ।

समाख्यातानि सर्व्वाणि योगाङ्गानि महामुने* ।
इदानीमपि सर्व्वज्ञ यत्पृच्छामस्तदुच्यताम् ॥ १ ।
योगो भक्तिमतामेव सिध्यतीति त्वयोदितम्† ।
यथा तुष्यति सर्व्वेशो‡ देवदेवो जनार्द्दनः ।
तन्नो वदस्व धर्म्मज्ञ सूत कारुण्यवारिधे ॥ २ ।

---

* मुनीश्वर इति (ख) पुस्तके दृश्यते ।

† यथोदितमिति (क), अनुमोदितमिति (ख), (ग) । तत्र (ग) पुस्तके च यस्य तुष्यति देवेशस्तस्य भक्तिश्च शाश्वतीत्यधिकः पाठो वर्त्तते ।

‡ देवेश इति (ग) पाठः ।

सूत उवाच ।

पुरा सनत्कुमारेण एवं पृष्टः स नारदः ।
यदुवाच मुनिश्रेष्ठाः पिबध्वं तत्कथामृतम् ॥ ३ ।
नारायणं परं देवं सच्चिदानन्दविग्रहम् ।
यजध्वमृषयः सर्व्वे विमुक्तिं यद्यपीप्सवः* ॥ ४ ।
रिपवस्तं न बाधन्ते न बाधन्ते ग्रहाश्च तम्† ।
राक्षसाश्च न खादन्ति‡ नरं विष्णुपरायणम् ॥ ५ ।
भक्तिर्दृढ़ा भवेद्यस्य देवदेवे जनार्द्दने ।
श्रेयांसि तस्य सिध्यन्ति भक्तिमन्तोऽधिकास्ततः§ ॥ ६ ।
तौ पादौ सफलौ पुंसां कृष्णायतनगामिनौ¶ ।
तौ करौ भाग्यनिलयौ हरिपूजापरायणौ ॥ ७ ।
ते च नेत्रे महाभागे पश्येते‖ ये जनार्द्दनम् ।
सा जिह्वा प्रोच्यते सद्भिर्हरिनामपरायणा ॥ ८ ।
सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
वेदशास्त्रात्परं नास्ति** न देवः केशवात्परः ॥ ९ ।

---

* यद्यभीप्सथ इति (क), विमुक्तिमभिलिप्सव इति (ङ) पाठः ।

† पावकास्तं न बाधन्ते न बाधन्ते ग्रहाश्च तमिति (ख) पाठः ।

‡ न बाधन्त इति (क) पुस्तकपाठः ।

§ ततोऽधिका इति (ग) पुस्तकस्य पाठः ।

¶ सफलौ पुण्यौ विष्णुायतनगामिनाविति (ख), (ग) पुस्तकेऽपि विष्णायतन गामिनामिति पाठः ।

‖ दृश्येते इति (ख), (ग), (ङ) पुस्तकपाठः ।

** नास्ति वेदात्परं शास्त्रमिति (ग) पाठ. ।

सत्यं वच्मि हितं वच्मि सारं वच्मि पुनः पुनः ।
असारे दग्धसंसारे* सारं† यद्विष्णुपूजनम् ॥ १० ।
संसारपाशं सुदृढ़ं महामोहप्रदायकम् ।
हरिभक्तिकुठारेण‡ छित्त्वात्यन्तसुखी भवेत् ॥ ११ ।
तन्मनः संयुतं विष्णौ सा वाणी तत्परायणा ।
ते श्रोत्रे तत्कथासारपूरिते§ लोकवन्दिते ॥ १२ ।
आनन्दमक्षरं शुद्धं पूज्यञ्च त्रिदशैरपि¶ ।
आकाशमध्यगं देवं यजध्वमृषिसत्तमाः ॥ १३ ।
ध्यानं वा शक्यते वक्तुं स्वरूपं वा कदाचन ।
निर्द्देष्टुं मुनिशार्दूल द्रष्टुं वाप्यकृतात्मभिः‖ ॥ १४ ।
समस्तकरणैर्युक्तो न च तैः करणैस्तथा** ।
अस्वरूपो यदात्मा च पुण्यापुण्यविवर्ज्जितः ॥ १५ ।
सर्व्वोपाधिविनिर्मुक्तो ह्यनिन्द्यो निर्गुणो विभुः ।
परं ब्रह्ममयो देवः सुसुप्त इति गीयते ॥ १६ ।
भावनामयमेतद्वै जगत्स्थावरजङ्गमम्†† ।

---

* खलु संसारे इति (क) पुस्तके पाठो दृश्यते ।

† सार इति पुंस्त्वं न्याय्यम् ।

‡ हरिभक्तिविचारेणेति (क) पाठः ।

§ तत्कथासारपूजिते इति (ग) पाठो न समीचीनः ।

¶ अत्र (ग) पुस्तके त्रयः श्लोका न सन्ति ।

‖ द्रष्टुं वाप्यकृतात्मभिरिति (ग) पुस्तकपाठः ।

** न चान्तःकरणैस्तथेति (ग) पाठः ।

†† (क), (ग), (ङ) पुस्तकेष्वतः परं सार्द्धत्रिश्लोका न सन्ति ।

विद्युद्विलोलं विप्रेन्द्रा यजध्वं तं जनार्द्दनम् ॥ १७ ।
अहिंसा सत्यमस्तेयब्रह्मचर्य्यापरिग्रहाः ।
वर्त्तन्ते यस्य तस्यैव तुष्यते* जगतां पति ॥ १८ ।
सर्व्वभूतदयायुक्तो विष्णुपूजापरायणः ।
मातापित्रोश्च शुश्रूषुस्तस्य तुष्टो जनार्द्दनः ॥ १९ ।
सत्कथायाञ्च रमते सत्कथाञ्च करोति च ।
सत्यवान्निरहङ्कारस्तस्य प्रीत उमापतिः ॥ २० ।
नामसङ्कीर्त्तनं विष्णोः क्षुत्तृट्प्रस्खलितादिषु ।
करोति सततं विप्रास्तस्य प्रीतो ह्यधोऽक्षजः ॥ २१ ।
या तु नारी पतिप्राणा पतिपूजापरायणा ।
तस्यास्तुष्टो जगन्नाथो मधुकैटभमर्द्दनः ॥ २२ ।
निरसूयापरो यस्तु अहङ्कारविवर्ज्जितः ।
देवपूजापरश्चैव तस्य तुष्यति केशव' ॥ २३ ।
तस्माच्छृणुध्वमृषयो यजध्वं सततं हरिम् ।
आवृणुध्वमहङ्कारं विद्युल्लोलश्रिया वृतम्† ॥ २४ ।
शरीरं मृत्युसंयुक्तं जीवितञ्चापि चञ्चलम् ।
राजादिभिर्धनं ग्राह्यं‡ सम्पदः क्षणभङ्गुराः ॥ २५ ।
हे जनाः किं न पश्यध्वमायुषोऽर्द्धन्तु निद्रया ।
हृतञ्च भोजनाद्यैश्च कियदायुः समाहृतम् ॥ २६ ।

---

* तुष्यतीति साधु ।

† वृथेति (ख), वृता इति (ङ) पाठः ।

‡ चलमिति (क), (घ) पुस्तकयोः पाठः ।

कियदायुर्बालभावाद्वृद्धभावात्कियद्धृतम् ।
कियद्विषयभोगेश्च कदा धर्म्मान् करिष्यथ ॥ २७ ।
बालभावे च वार्द्धक्ये न घटेताच्युतार्च्चनम्* ।
वयस्येव च धर्म्मान्वै कुरुध्वमनहङ्कृताः ॥ २८ ।
मा विनाशयत† संसारगर्त्ते मग्ना वृथा जनाः ।
वपुर्विनाशनिलयमापदां परमं पदम् ॥ २९ ।
शरीरं रोगनिलयं मलाद्यैः परिदूषितम् ।
किमर्थं शाश्वतधिया पापं कुरुथ सर्व्वदा‡ ॥ ३० ।
असारभूते संसारे नानादुःखसमन्विते ।
विश्वासो नात्र§ कर्त्तव्यो निश्चितं नाशमेष्यति ॥ ३१ ।
शृणुध्वमृषयः¶ सर्व्वं सत्यमेतन्मयोच्यते ।
कायः सन्निहितापायः पूज्य एव जनार्द्दनः ॥ ३२ ।
मानन्त्यजत हन्तारं‖ कामक्रोधादिवर्ज्जिताः** ।
यजध्वं सततं कृष्णं†† मानुष्यमतिदुर्ल्लभम् ॥ ३३ ।
कोटिजन्मसहस्रेषु स्थावरादिषु सत्तमाः ।

---

* न लभेताच्युतार्च्चनमिति (ख) पुस्तकस्य पाठः ।

† विनश्यत इति (ख), अत्रात्मनेपदमार्षम्, सर्व्वत्र क्रियागतमेकवचनञ्चार्षम् ।

‡ सर्व्वथेति (क), (घ) पुस्तकयोः पाठः ।

§ न चेति (ख) पुस्तके दृश्यते ।

¶ शृणुध्वं मुनय इति (ग) पाठः ।

‖ मानं त्यज्य अहङ्कारमिति (ग) । अत्र त्यक्तेति साधु ।

** कामक्रोधादिभिर्द्विजा इति (ङ) पाठो न मनोरमः ।

†† सततं विप्रा इति (ग) पाठः ।

सम्भ्रान्तस्य तु* मानुष्यं कथञ्चित्परिलभ्यते ॥ ३४ ।
तत्रापि देवताबुद्धिर्ज्ञानबुद्धिश्च† सत्तमाः ।
भोगबुद्धिस्तथा नृणां जन्मान्तरतपःफलम् ॥ ३५ ।
मानुष्यं दुर्लभम्प्राप्य यो हरिं नार्च्चयेत्सकृत्‡ ।
मूर्खः परतरस्तस्मात्कोऽन्यस्तस्मादचेतनः ॥ ३६ ।
दुर्लभम्प्राप्य मानुष्यं नार्च्चयन्ति च ये हरिम् ।
तेषामतीव मूर्खाणां विवेकः कुत्र तिष्ठति ॥ ३७ ।
आराधितो जगन्नाथो ददात्यभिमतं फलम् ।
कस्तं न पूजयेद्विप्राः संसाराग्निप्रदीपितः§ ॥ ३८ ।
चाण्डालोऽपि मुनिश्रेष्ठो विष्णुभक्तो द्विजाधिकः¶ ।
विष्णुभक्तिविहीनश्च द्विजोऽपि श्वपचाधिकः ॥ ३९ ।
रागद्वेषपरित्यक्तश्चण्डालोऽपि‖ द्विजाधिकः ।
तस्मात्कामादिकं त्यक्त्वा यजध्वं हरिमव्ययम् ।
तस्मिंस्तुष्टे जगत्तुष्टं** यतः सर्व्वगतो हरिः ॥ ४० ।
यथा हस्तिपदे सर्व्वं पदमात्रं विलीयते ।

---

* सम्भवस्य त्विति (ग), सम्भवेष्विति (ङ) पाठः ।

† दानबुद्धिश्चेति (ख), (ग) ; ज्ञानबुद्धिश्च शाश्वतीति (ङ) पाठः ।

‡ नार्चयन्ति च ये हरिमिति (ख) । तत्रातःपरं चत्वारः पादा न सन्ति ।

§ प्रपीडित इति (घ) पुस्तके दृश्यते ।

¶ अतःपरं (ग) पुस्तके चत्वारः पादा न सन्ति ।

‖ श्वपचोऽपि द्विजाधिक इति (ख) पाठः ।

** तस्मिंस्तुष्टेऽखिलं तुष्टमिति (ग) पाठः ।

तथा चराचरं विश्वं कृष्ण एव प्रलीयते* ॥ ४१ ।
आकाशेन यथा व्याप्तं जगत्स्थावरजङ्गमम् ।
तथैव हरिणा व्याप्तं विश्वमेतच्चराचरम् ॥ ४२ ।
जन्मनि मरणं नृणां मरणं जन्मसाधनम्† ।
उभे ते सङ्कटे‡ नृणां तन्नाशो हरिसेवया ॥ ४३ ।
ध्यातः स्मृतः स्तुतो वापि नमितो वा जनार्द्दनः ।
संसारपाशविच्छेदी कस्तन्न प्रतिपूजयेत् ॥ ४४ ।
यन्नामोच्चारणादेव महापातकनाशनम् ।
यं समभ्यर्च्य विप्रेन्द्राः परं मोक्षं लभेद्‌ध्रुवम्§ ॥ ४५ ।
अहो चित्रमहो चित्रमहो चित्रमिदं द्विजाः ।
हरिनाम्नि स्थिते लोकः संसारे वर्त्तते पुनः ॥ ४६ ।
भूयो भूयोऽपि वक्ष्यामि सत्यमेतत्तपोधनाः ।
नीयमानो यमभटैरशक्तो धर्म्मसाधने ।
यावन्नेन्द्रियवैकल्यं यावद्व्याधिर्न्न बाधते¶ ।
तावदेवार्च्चयेद्विष्णुं यदि मुक्तिपरो|| नरः ॥ ४७।४८ ।

---

* विश्वावेवेति (ख) । (ग) पुस्तके एष श्लोको नास्ति । (क), (ङ) पुस्तकयोः श्लोकस्यास्य केवलं पूर्व्वार्द्धमस्ति ।

† (ग) पुस्तके श्लोकस्यास्य परार्द्धं नास्ति ।

‡ निकटे इति बहुषु पुस्तकेषु पाठः ।

§ लभेदिति आर्षं, लभेतेति साधु ।

¶ न जायते इति (ख) पुस्तकस्य पाठः ।

|| मुक्तिरत इति (ख), भक्तिपर इति (क) पाठः ।

मातुर्गर्भाद्विनिष्क्रान्तो यदा जन्तुस्तदैव हि ।
मृत्योर्वक्त्रगतं वाढं* तस्माद्धर्म्मरतो† भवेत् ॥ ४९ ।
अहो कष्टमहो कष्टमहो कष्टमिदं वपुः ।
विनाशधर्म्मं विप्रेन्द्रा यजध्वं शाश्वतं प्रभुम् ॥ ५० ।
सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
दम्भाचारं परित्यज्य यजध्वं चक्रपाणिनम् ॥ ५१ ।
भूयो भूयो हितं वच्मि भुजमुद्धृत्य पण्डिताः ।
विष्णुः सर्व्वात्मना पूज्यस्त्याज्याऽसूया तथाऽधृतिः‡ ॥ ५२ ।
क्रोधमूलो मनस्तापः क्रोधः संसारसाधनम् ।
धर्म्मक्षयकरः§ क्रोधस्तस्मात्तं परिवर्ज्जयेत् ॥ ५३ ।
काममूलमिदं¶ जन्म कामः पापस्य कारणम् ।
यशःक्षयकरः कामस्तस्मात्तं परिवर्ज्जयेत्‖ ॥ ५४ ।
समस्तदुःखजालानां मात्सर्य्यं कारणं स्मृतम् ।
नरकाणां साधनञ्च मात्सर्य्यं तत्परित्यजेत्** ॥ ५५ ।
मम†† एव मनुष्याणां कारणं बन्धमोक्षयोः ।
तस्मात्तदेव संयोज्य परात्मनि सुखी भवेत् ॥ ५६ ।
अहो धैर्य्यमहो धैर्य्यमहो धैर्य्यमहो नृणाम् ।
विष्णौ स्थिते जगन्नाथे न भजन्ते मदोद्धताः ॥ ५७ ।

---

* गाढमिति (ख) । † धर्म्मपर इति (ख) । ‡ (ख) पुस्तकेऽतः परं सार्द्धैकः श्लोको-नास्ति । तथा वृभिगिति (ग), (घ) । § कर्म्मक्षयकर इति (ग) । ¶ काममूलादिद-मिति (घ) । ‖ तस्मात्कामं विवर्ज्जयेदिति (ङ) । ** एषश्लोकः (घ) पुस्तके नास्ति, समस्तपापजालमिति (ग) । †† मन एवेति सर्व्वत्र पाठः ।

अनाराध्य जगन्नाथं सर्व्वधातारमच्युतम्* ।
संसारसागरे मग्नाः कथं पारं गमिष्यथ ॥ ५८ ।
अच्युतानन्तगोविन्दनामोच्चारणभीषिताः ।
नश्यन्ति सकला रोगाः सत्यं सत्य वदाम्यहम् ॥ ५९ ।
नारायण जगन्नाथ वासुदेव जनार्द्दन ।
इतीरयन्ति ये नित्यं ते वै सर्व्वत्र वन्दिताः ॥ ६० ।
अद्यापि च मुनिश्रेष्ठा ब्रह्माद्या अपि देवताः ।
प्रभावं न विजानन्ति विष्णुभक्तिरतात्मनाम्† ६१ ।
अहो मौर्ख्यमहो मौर्ख्यमहो मौर्ख्यं दुरात्मनाम् ।
हृत्पद्मसंस्थितं विष्णुं न विजानन्ति सर्व्वदा ॥ ६२ ।
शृणुध्वमृषयः सर्व्वे भूयो भूयो वदाम्यहम् ।
हरिः श्रद्धावतां तुष्टो न धनैर्न च बान्धवैः ॥ ६३ ।
बन्धुमत्त्वं धनाढ्यत्वं पुत्त्रवत्त्वञ्च सत्तमाः ।
विष्णुभक्तिमतां नृणां भवेद्वै जन्मजन्मनि ॥ ६४ ।
पापमूलमयं देहः पापकर्म्मरतस्तथा ।
एतद्विदित्वा सततं पूजयध्वं जनार्द्दनम् ॥ ६५ ।
पुत्त्रमित्त्रकलत्त्राद्या बहवः सत्यसम्पदः‡ ।
हरिपूजारतानाञ्च भवन्त्येव न संशयः ॥ ६६ ।
इहाऽमुत्र फलं प्रेप्सुः पूजयेत्सततं हरिम् ।

---

* सर्व्वमाधारमच्युतमिति (ग) । † मतिमता नृणामिति (ग) । ‡ बहवः स्युः ससम्पद इति (ग), (ङ) ।

इहामुत्र सुखं प्रेप्सुः परनिन्दाम्परित्यजेत्* ॥ ६७ ।
धिग्जन्म भक्तिहीनानां देवदेवे जनार्द्दने† ।
सत्पात्रदानशून्यञ्च तद्धनं धिक् पुनः पुनः ॥ ६८ ।
न नमेद्विष्णवे यस्य शरीरं जन्मभेदिने ।
पापानामाकरं तद्वै ज्ञेयं विबुधसत्तमाः ॥ ६९ ।
सत्पात्रदानरहितं यद्द्रव्यं येन रक्षितम् ।
सर्पेण रक्षितमिव इति लोकेषु निश्चितम्‡ ॥ ७० ।
तड़िल्लोलश्रिया मत्ता क्षणभङ्गुरशालिनः ।
नाराधयन्ति विश्वेशं पशुपाशविमोचकम् ॥ ७१ ।
सृष्टिस्तु द्विविधा ज्ञेया देवासुरविभेदतः ।
हरिभक्तियुता दैवी तद्धीना ह्यासुरी स्मृता§ ॥ ७२ ।
तस्माच्छृणुत विप्रेन्द्रा हरिभक्तिपरायणाः ।
श्रेष्ठाः सर्व्वत्र विख्याता यतो भक्तिः सुदुर्ल्लभा ॥ ७३ ।
असूयारहिता ये तु विप्रत्राणपरायणाः¶ ।
कामादिरहिता ये तु‖ तेषां तुष्यति केशवः ॥ ७४ ।
सम्मार्ज्जनादिभिर्ये तु हरिशुश्रूषणे रताः** ।
सत्पात्रदाननिरताः प्रयान्ति पदमुत्तमम्†† ॥ ७५ ।

---

* परनिन्दाञ्च वर्ज्जयेदिति (ग)। † अतः परं (ख) पुस्तके सार्द्धैकः श्लोको नास्ति। ‡ गीयत इति (ग), (घ)। § मतेति (ग)। ¶ परित्राणपरायणा इति (ग)। ‖ कामादिदोषरहिता इति (ग)। ** परशुश्रूषणे रता इति (ख)। †† परमं पदमिति (ग)।

तस्मात्संसारतप्तानां हरिरेव परा गतिः ।
यन्नामश्रवणादेव* प्रयान्ति पदमुत्तमम् ॥ ७६ ।

इति श्रीबृहन्नारदीयपुराणे हरिभक्तिकथनी नाम
द्वात्रिंशोऽध्यायः ।

---

## अथ त्रयस्त्रिंशोऽध्यायः ।

सूत उवाच ।

पुनर्वक्ष्यामि माहात्म्यं देवदेवस्य चक्रिणः ।
पठतां शृण्वतां सद्यः पापराशिः प्रणश्यति* ॥ १ ।
शान्ता जितारिषड्वर्गा योगेनाप्यनहङ्कृताः ।
यजन्ति ज्ञानरूपेण ज्ञानरूपिणमव्ययम् ॥ २ ।
तीर्थस्नानविशुद्धा ये व्रतदानतपोमखैः ।
यजन्ति कर्म्मयोगेन† सर्व्वधातारमच्युतम् ॥ ३ ।
लुब्धा व्यसनिनोऽज्ञाश्च न यजन्ति जगत्पतिम् ।
अजरामरवन्मूढास्तिष्ठन्ति नरकीटकाः ॥ ४ ।

---

* स्मरणादेवेति (क), (ख) ।

---

* विनश्यतीति (ग) ।  † ज्ञानयोगेनेति (ख) ।

तड़िल्लोलश्रिया मत्ता* वृथाऽहङ्कारदूषिताः† ।
न यजन्ति जगन्नाथं सर्व्वश्रेयोविधायकम् ॥ ५ ।
हरिधर्म्मरताः‡ शान्ता हरिपादाब्जसेवकाः ।
दैवात्केऽपीह§ जायन्ते लोकानुग्रहतत्पराः ॥ ६ ।
कर्म्मणा मनसा वाचा यो यजेद्भक्तितो¶ हरिम् ।
स याति परमस्थानं‖ सर्व्वलोकोत्तमोत्तमम्** ॥ ७ ।
अत्रैवो††दाहरन्तीममितिहासं पुरातनम् ।
पठतां शृखतांश्चैव सर्व्वपापप्रणाशनम्‡‡ ॥ ८ ।
विप्राः शृणुध्वं चरितं यज्ञमालिसुमालिनोः ।
यस्य श्रवणमात्रेण वाजिमेधफलं लभेत्§§ ॥ ९ ।
कश्चिदासीत्पुरा विप्रा ब्राह्मणो रैवतेऽन्तरे¶¶ ।
देवमालिरिति‖‖ ख्यातो वेदवेदाङ्गपारगः ॥ १० ।
सर्व्वभूतदयायुक्तो हरिपूजापरायणः ।
पुत्त्रमित्रकलत्रार्थं धनार्ज्जनपरोऽभवत् ॥ ११ ।
अपण्यविक्रयञ्चक्रे तथा च रसविक्रयम् ।
चाण्डालाद्यैरपि तथा प्रतिग्रहपरोऽभवत् ॥ १२ ।

---

* तडिल्लोपेक्षया मत्ता इति (ग) । † भूषिता इति (क) ; दुःखिता इति (ख) । ‡ हरिकर्म्मरता इति (क), (घ) । § केऽप्यत्रेति (च) । ¶ योऽर्च्चयेद्भक्तित इति (ख) । ‖ परमानन्दमिति (घ) । ** सर्व्वपापप्रणाशनमिति (घ) । †† तत्रैवेति (घ) । ‡‡ एष श्लोकः (ख) पुस्तके नास्ति । §§ लभेतेति साधु । ¶¶ रैवते गिराविति (घ) । ‖‖ वेद-मालिरिति (ख), (ग) । एवं परत्रापि ।

तपसां* विक्रयञ्चक्रे व्रतानां विक्रयन्तथा ।
परार्थं तीर्थगमनं कलत्रार्थमकारयत् ॥ १३ ।
कालेन गच्छता विप्रा जातौ तस्य सुतावुभौ† ।
यज्ञमाली सुमाली च‡ समानावतिशोभिनौ ॥ १४ ।
ततः पिता कुमारौ तावतिस्नेहसमन्वितः§ ।
योजयामास¶ वात्सल्याद्बहुभिः साधनैस्तथा ॥ १५ ।
देवमालिर्बहूपायैर्धनं सम्पाद्य यत्नतः ।
स्वधनं गणयामास कियत्स्यादिति वेदितुम् ॥ १६ ।
निष्ककोटिसहस्राणां कोटिकोटिगुणान्वितम्‖ ।
विगणय्य स्वयं हृष्टो विस्मितश्चा**प्यचिन्तयत् ॥ १७ ।
असत्प्रतिग्रहैश्चैवमपण्यानाञ्च विक्रयैः ।
महातपोविक्रयाद्यैरेतत्तु समुपार्ज्जितम्†† ॥ १८ ।
अद्यापि शान्तिं नापन्ना मम तृष्णातिदुःसहा ।
मेरुतुल्यसुवर्णानि चासंख्यातानि‡‡ वाञ्छति ॥ १९ ।
अहोमन्ये महाकष्टं समस्तक्लेशसाधनम्§§ ।
सर्व्वान् कामानवाप्याशु पुनरन्यच्च काङ्क्षति¶¶ ॥ २० ।
जीर्य्यन्ति जीर्य्यतः केशा दन्ता जीर्य्यन्ति जीर्य्यतः ।

---

* तपस इति बहुषु पाठः । † कालेन विप्रा जज्ञेतां च्यान्तौ तस्य सुतावुभाविति (ख) । ‡ यज्ञमालिः सुमालिश्चेति (क), (ख), यज्ञमालिः सुमाली चेति (ग) । § समन्वितौ इति (ङ) । ¶ पोषयामासेति (ग) । ‖ समन्वितमिति (ङ) । ** विस्मयश्चेति (क), (घ) । †† एतद्धनमुपार्ज्जितमिति (ख), (ग) । ‡‡ असंख्येयानीति (ख) । §§ साधकमिति (ङ) । ¶¶ (ख) पुस्तकेऽत्र अष्टौ श्लोका न सन्ति ।

चक्षुःश्रोत्रे च जीर्य्येते तृष्णैका तरुणायते ॥ २१ ।
ममेन्द्रियाणि सर्व्वाणि मन्दभावं व्रजन्ति च ।
बलं हृतञ्च जरसा सा तृष्णा तारुणं गता* ॥ २२ ।
कष्टा सा वर्त्तते यस्य स विद्वानप्यपण्डितः ।
स शान्तोऽपि प्रमन्युः स्याद्धीमानप्यतिमूढ़धीः ॥ २३ ।
आशा भङ्गकरी पुंसामजेयाऽरातिसन्निभा ।
तस्मादाशान्त्यजेत्प्राज्ञो यदीच्छेच्छाश्वतं सुखम् ॥ २४ ।
बलन्तेजो यशश्चैव विद्यां शौर्य्यञ्च वृद्धताम्† ।
तथैव सुकुले जन्म आशा हन्त्यतिवेगतः ॥ २५ ।
नृणामाशाभिभूतानामाश्चर्य्यमिदमुच्यते ।
किञ्चिद्दत्वाऽपि चाण्डाल‡स्तस्मादधिकतां गतः ॥ २६ ।
आशाभिभूता ये मर्त्त्या महामोहाः शुचोद्धताः§ ।
अवमानादिकं दुःखं न जानन्ति यदप्यहो ॥ २७ ।
तथाप्येवं बहुक्लेशैरेतद्धनमुपार्ज्जितम्¶ ।
शरीरमपि जीर्णञ्च जरसाऽपहृतं बलम् ॥ २८ ।
इतःपरं‖ यतिष्यामि परलोकार्थमादरात् ।
एवं निश्चित्य विप्रेन्द्रा धर्म्ममार्गरतोऽभवत् ॥ २९ ।

---

* तृष्णैका तरुणायते इति (ग)। † विद्यां मानञ्चेति (क), (ग), (ङ)। ‡ किञ्चिद्दत्त्वा स चाण्डाल इति (घ)। § महामोहेन चोद्धता इति (ग)। ¶ यत्तद्धनमुपार्ज्जितमिति (क)। ‖ अतः परमिति (ख)।

सद्यएव धनं* सर्व्वं चतुर्द्धा व्यभजत्ततः† ।
स्वयन्तु भागद्वितयमर्ज्जकत्वादपाहरत् ॥ ३० ।
शेषन्तु‡ भागद्वितयं पुत्त्रयोरुभयोर्ददौ§ ।
स्वेनार्ज्जितानां पापानां नाशं कर्त्तुमनास्तदा ॥ ३१ ।
प्रपातड़ागारामांश्च तथा देवगृहान् बहून् ।
अन्नादीनाञ्च¶ दानानि गङ्गातीरे चकार सः ॥ ३२ ।
एवं धनविशेषञ्च विश्राण्य हरिभक्तिमान् ।
नरनारायणस्थानं जगाम तपसे वनम् ॥ ३३ ।
तत्रापश्यन्महारण्ये आश्रमं मुनिसेवितम् ।
फलितैः पुष्पितैश्चैव शोभितं वृक्षसङ्कुलैः ।
गृणद्भिः परमं ब्रह्म शास्त्रचिन्तापरैस्तथा ।
परिचर्य्यापरैर्वृद्धै‖र्मुनिभिः परिशोभितम् ॥ ३४ ।
गृणन्तं परमं ब्रह्म तेजोराशिं ददर्श ह ।
शमादिगुणसंयुक्तं रागादिरहितं मुनिम् ॥ ३५ ।
शीर्णपर्णाशनं दृष्ट्वा देवमालिर्न्नाम तम् ।
तस्य जानन्तिरागन्तोः कल्पयामास चार्हणाम् ॥ ३६ ।
कन्दमूलफलाद्यैस्तु नारायणधिया तदा ।
कृतातिथ्यक्रियस्तेन देवमालिः कृताञ्जलिः ।

---

* सत्येन तद्धनमिति (क), (घ) ; सद्य एतद्धनमिति (ख), (ग) । † तदेति (ख), (ग) । ‡ शेषञ्चेति बहुषु पुस्तकेषु पाठः । § उभयोरपीति (क), (ख), (ङ) । ¶ अर्थादीनाञ्चेति (क), दीनान्धानाञ्चेवि (ख) । ‖ वर्य्यैरिति (क), (ङ) ; चापीति (ख) ।

विनयावनतो भूत्वा प्रोवाच वदतां वरम्* ॥ ३७ ।
भगवन् कृतकृत्योऽस्मि विगतं कल्मषं मम ।
मामुद्धर महाभाग ज्ञानदानेन पण्डित ॥ ३८ ।
एवमुक्तस्ततस्तेन जानन्तिर्मुनिसत्तमः ।
उवाच प्रहसन्† वाणीं देवमालिं गुणान्वितम् ॥ ३९ ।

जानन्तिरुवाच ।

शृणुष्व विप्रशार्दूल संसारच्छेदकारणम् ।
प्रवक्ष्यामि समासेन दुर्लभं दुष्कृतात्मनाम् ॥ ४० ।
भज विष्णुं परं नित्यं‡ स्मर नारायणं प्रभुम् ।
परापवादं पैशुन्यं कदाचिदपि मा कृथाः ॥ ४१ ।
परोपकारनिरतः§ सदा भव महामते ।
हरिपूजापरश्चैव त्यज मूर्खसमागमम्¶ ॥ ४२ ।
कामं क्रोधञ्च लोभञ्च मोहञ्च मदमत्सरौ ।
परित्यज्यात्मवल्लोकं मत्वा‖ शान्तिं गमिष्यसि ॥ ४३ ।
असूयां परनिन्दाञ्च कदाचिदपि मा कृथाः ।
दम्भाचारमहङ्कारं नैष्ठुर्य्यञ्च** परित्यज ॥ ४४ ।
दयां कुरुष्व भूतेषु शुश्रूषाञ्च तथा सताम् ।

---

* अतः परं (ख) पुस्तके देवमालिरुवाचेत्यधिकः पाठो वर्त्तते । † बहुमन्वान-इति (घ) । ‡ परानन्दमिति (ङ) । § परापवादविरत इति (ख) । ¶ (ग) पुस्तकेऽतः परं श्लोकद्वयं नास्ति । ‖ गत्वेति (क), (ख), (घ), दृष्ट्वेति (ग) । ** निष्ठुरञ्च परित्यजेति (क), (ख), (ग), (ङ) ।

त्वया कृतांश्च* धर्म्मान्वै† यथार्थं वद पृच्छताम्‡ ॥ ४५ ।
अनाचारपरान्दृष्ट्वा नोपेक्षां कुरु शक्तितः§ ।
पूजयस्वातिथीन्नित्यं स्वयमेवाऽविरोधतः ॥ ४६ ।
पत्रैः पुष्पैः फलैर्व्वापि दूर्व्वाभिः पल्लवैस्तथा ।
पूजयस्व¶ जगन्नाथं नारायणमकामतः‖ ॥ ४७ ।
देवानृषीन् पितॄंश्चैव तर्पयस्व** यथाविधि ।
अग्नेश्च विधिवद्विप्र परिचर्य्यापरोभव ॥ ४८ ।
देवतायतने नित्यं सम्मार्ज्जनपरोभव†† ।
तथोपलेपनञ्चैव‡‡ कुरुष्व सुसमाहितः ॥ ४९ ।
शीर्णस्फुटितसन्धानं कुरु देवगृहे सदा ।
मार्गशोभाञ्च§§ दीपञ्च विष्णोरायतने कुरु ॥ ५० ।
कन्दमूलफलैर्वापि सदा पूजय माधवम्¶¶ ।
प्रदक्षिण‖‖नमस्कारैस्तोत्राणां पठनैस्तथा ॥ ५१ ।
पुराणश्रवणञ्चैव पुराणपठनन्तथा ।
वेदान्तपठनञ्चैव कुरुष्व प्रत्यहं द्विज ॥ ५२ ।
एवं स्थिते तव ज्ञानं भविष्यत्युत्तमोत्तमम् ।
ज्ञानात्समस्तपापानां*** मोक्षमाहुर्विपश्चितः ॥ ५३ ।

---

* ज्ञाताश्चेति (ग) । † धर्म्मार्थमिति (व) । ‡ एष. श्लोकः परश्लोकस्य पूर्व्वार्द्धञ्च (क) पुस्तके नास्ति । § पक्षिन्त इति (घ) । ¶ पूजयध्वमिति (क), (ङ) । ‖ मन्नामयमिति (ख) । ** तर्पयध्वमिति (क) । †† एतदर्द्धं (ख) पुस्तके नास्ति । ‡‡ चापीति (ङ) । §§ मार्गशोभानीति (घ) । ¶¶ केशवमिति (ग) । ‖‖ प्रदक्षिणैरिति (ख) । *** पापस्येति (क), (ख), (ग), (ङ) ।

सूत उवाच ।

एवं प्रबोधितस्तेन देवमालिर्महामतिः ।
तदा ज्ञानरतोनित्यं ज्ञानलेशमवाप्तवान् ॥ ५४ ।
देवमालिः कदाचित्तु ज्ञानलेश*प्रचोदितः ।
कोऽहं मम क्रिया केति स्वयमेव विचारयन्† ॥
मम जन्म कथं जातं रूपङ्कीदृग्विधं मम‡ ।
एवं विचारयामास अहमेकोऽथवा बहु§ ॥ ५५।५६ ।
अनिश्चितमतिः सद्योदेवमालिर्द्विजोत्तमः ।
पुनर्जानन्तिमागत्य¶ प्रणम्य समुवाच ह‖ ॥ ५७ ।

देवमालिरुवाच ।

मम चित्तमतिभ्रान्तं** गुरो ब्रह्मविदां वर ।
कोऽहं मम क्रिया का वा†† मम जन्म कथं वद ॥ ५८ ।

जानन्तिरुवाच ।

सत्यमाह महाभाग चित्तभ्रान्तं सुनिश्चितम् ।
अविद्यानिलयं चित्तं कथं सद्भावमेष्यति ॥ ५९ ।
ममेति गदितं‡‡ यत्तु तदपि भ्रान्तिरिष्यते§§ ।
अहङ्कारोमनोधर्म्म आत्मनो न हि पण्डित ॥ ६० ।
पुनश्चैकोऽहमित्युक्तं देवमाले त्वया मुने ।

---

* ब्राह्मणेनेति (ख) । † स्वयमेवाविचारयदिति (ग), (ङ) । ‡ कीदृग्विधिर्ममेति (ङ) । § चिन्ताकुलितमानस इति (ख) । ¶ आगम्येति बहुषु पाठः । ‖ प्रणम्यैतदुवाच हेति (क), (ख) ; प्रणम्येदमुवाच हेति (ग), (ङ) । ** अतिक्रान्तमिति (क) । †† क्रिया का चेति बहुषु पाठः । ‡‡ गणितमिति (क) । §§ भ्रान्तमिष्यते इति (घ) ।

नामजात्यादिशून्यस्य कथं नाम करोम्यहम् ॥ ६१ ॥
अपरिच्छिन्नभावस्य* निर्गुणस्य परात्मनः ।
नीरूपस्याप्रमेयस्य कथं रूपादि† कथ्यते ॥ ६२ ॥
परं ज्योतिःस्वरूपस्य‡ कथं नाम करोम्यहम्§ ।
अपरिच्छिन्नभावस्य¶ कथ्यते‖ वा** कथं क्रिया ॥ ६३ ॥
स्वप्रकाशात्मनो विप्र नित्यस्य परमात्मनः ।
अनन्तस्याक्रियाख्यस्य†† कथं जन्म च कथ्यते ॥ ६४ ॥
ज्ञानस्य वेद्यमजरं परं ब्रह्म सनातनम् ।
परिपूर्णंसदानन्दं तस्मात्तं यज हे द्विज‡‡ ॥ ६५ ॥
तत्त्वमस्यादिवाक्यार्थ§§ज्ञानं मोक्षस्य साधनम् ।
ज्ञाने चानाहते¶¶ सिद्धे सर्व्वं ब्रह्ममयम्भवेत्‖‖ ॥ ६६ ॥
एवम्प्रबोधितस्तेन देवमालिर्मुनीश्वरः*** ।
मुमोच††† पश्य‡‡‡न्नात्मानमात्मन्येवाच्युतम्प्रभुम् ॥ ६७ ॥
उपाधिवर्ज्जितं ब्रह्म स्वप्रकाशं§§§ निरञ्जनम् ।

---

* अरूपस्य स्वभावस्येति (क), (ख), (ग), (ङ) । † रूपाणीति (घ) । ‡ स्वभावस्येति (घ) । § परिपूर्णाव्ययात्मन इति (ग) । ¶ अविच्छिन्नस्वभावस्येति (ग) । ‖ कथ्यन्ते इति (ङ) । ** चेति बहुषु पाठः । †† अक्षिपापस्येति (ख), अक्रियस्यैवेति (ग) । ‡‡ यजत द्विजेति (क), तुष्यदिह द्विज इति (ख), (ङ), तस्मान्नान्यदिह द्विजेति (ग) । §§ तत्त्वमस्यादिवाक्याच्चिति (ख) । ¶¶ ज्ञाने त्वनाहते इति (ग) । ‖‖ ब्रह्मसमं भवेदिति (क), (ख), (ङ) । अतःपरं (ख) पुस्तके सूत उवाचेति पाठो दृश्यते । *** मुनीश्वर इति (क), (ख) । ††† मुमोदेति (क), (ख), (ग), (ङ) । ‡‡‡ जानन्निति (ख) । §§§ स्वेहाशंसमिति (ख) ।

अहमेवेति निश्चित्य परां शान्तिमवाप्तवान् ॥६८।
ततश्च व्यवहारार्थं देवमालिर्मुनीश्वरम्।
गुरुं प्रणम्य जानन्तिं सदा ध्यानपरोऽभवत् ॥ ६९।
गते बहुतिथे काले देवमालिर्महामतिः।
वाराणसीम्पुरीम्प्राप्य परं मोक्षमवाप्तवान् ॥ ७०।
य इमं पठतेऽध्यायं शृणुयाद्वा समाहितः।
स्वकर्म्मपाशविच्छेदं सम्प्राप्य सुखमश्नुते ॥ ७१।

इति श्रीवृहन्नारदीयपुराणे विष्णुमाहात्म्यवर्णने त्रयस्त्रिंशोऽध्याय.।

---

## अथ चतुस्त्रिंशोऽध्यायः।

सूत उवाच।

देवमालेः सुतौ प्रोक्तौ यावुभौ मुनिसत्तमाः।
यज्ञमालिः सुमालीति* तयोः कर्म्माधुनोच्यते॥ १।
तयोराद्यो यज्ञमालिर्बिभेद पितृसञ्चितम्।
धनं द्विधा कनिष्ठस्य भागमेकन्ददौ तदा ॥ २।
सुमाली तद्धनं सर्व्वं व्यसनाभिरतस्तदा।
असज्जनादिभिश्चैव† नाशयामास भोः‡ द्विजाः ॥ ३।

---

* सुमाली चेति (ग)। † असद्दानादिभिरिति (क), (ग)। ‡ हि द्विजा इति (ख)।

गीतवाद्यरतो नित्यं मद्यपानरतोऽभवत् ।
वेश्याविभ्रमलुब्धो*ऽसौ परदाररतोऽभवत् ॥ ४ ॥
तस्मिन्नाशे समायाते हिरण्ये पितृसञ्चिते ।
अपहृत्य परद्रव्यं वारस्त्रीनिरतोऽभवत् ॥ ५ ॥
दृष्ट्वा सुमालिनः शीलं यज्ञमालिर्महामतिः ।
बभूव दुःखितो गाढं† मनुजञ्चेदमब्रवीत्‡ ॥ ६ ॥
अलमत्यन्तकष्टेन वृत्तेनानुज मत्कुले§ ।
त्वमेक एव दुष्टात्मा महापापरतोऽभवः ॥ ७ ॥
एवन्निवारयन्तञ्च बहुशो¶ भ्रातरन्ततः ।
हनिष्यामीति निश्चित्य खड्गहस्तः‖ कचेऽग्रहीत् ॥ ८ ॥
ततो हाहारवो जज्ञे** नगरे मुनिसत्तमाः ।
बबन्धुर्नागराश्चैनं कुपितास्ते सुमालिनम् ॥ ९ ॥
यज्ञमालिरमेयात्मा पौरान् सम्प्रार्थ्य दुःखितः ।
बन्धनान्मोचयामास भ्रातृस्नेहविमोहितः†† ॥ १० ॥
यज्ञमालिः पुनश्चापि बिभिदे‡‡ स्वधनं द्विधा ।
आददे स्वयमर्द्धञ्च ददावर्द्धं कनीयसे§§ ॥ ११ ॥
सुमाली त्वतिमूढात्मा तद्धनेनापि सत्तमाः ।

---

* तुष्ट इति (ख) । † वाढमिति (ग) । ‡ (ख) पुस्तकेऽत्र यज्ञमालिरुवाचेत्यधिकः पाठो वर्त्तते । § यत्कुले इति (घ) । ¶ स रुष्ट इति (ख) । ‖ खड्गभृत् इति (क) ; खड्गधृत् तं करे इति (ख) ; खड्ग तूर्णमिति (ग) । ** रवोमहानिति (घ) । †† भ्रातुः स्नेहविमोहित इति (ख) ; भ्रातृस्नेहेन मोहित इति (ग) । ‡‡ बिभेद इति (ख) । §§ कनीयस इति (ग), (घ) ।

पूर्व्वैः* पाषण्डचाण्डालैर्बुभुजे च मदोद्धतः॥ १२ ।
असतामुपभोगाय दुर्ज्जनानां विभूतयः।
पिचुमर्द्दः फलाढ्योऽपि काकैरेवेह भुज्यते† ॥ १३ ।
भ्रात्रा दत्तं धनम्प्राप्य सुमाली मत्ततां गतः।
शर्क्करासहितं दुग्धं पीत्वेव पवनाशनः॥ १४ ।
सुमाली ह्यतिमूढ़ात्मा चाण्डालत्वमुपागतः‡।
मद्यमानप्रमत्तश्च गोमांसादीन्यभक्षयत्॥ १५ ।
त्यक्तोबन्धुजनैः सर्व्वैश्चाण्डालस्त्रीसमन्वितः।
राज्ञाऽपि बाधितश्चाऽपि प्रपेदे निर्ज्जनं वनम्॥ १६ ।
यज्ञमालिः सुधीर्विप्रः सदा धर्म्मरतोऽभवत्।
अवारितं ददावन्नं सत्सङ्गतकल्मषः॥ १७ ।
पित्रा कृतानि सर्व्वाणि तड़ागादीनि सत्तमाः।
अपालयद्यज्ञमालिः सत्यधर्म्मपरायणः॥ १८ ।
विश्राणितं धनं सर्व्वं यज्ञमालेर्म्महात्मनः।
सत्याचदाननिष्ठस्य धर्म्ममार्गप्रवर्त्तिनः॥ १९ ।
अहो सदुपभोगाय§ सज्जनानां विभूतयः।
कल्पवृक्षफलं सर्व्वममरैरेव भुज्यते¶ ॥ २० ।
धनं विश्राण्य धर्म्मार्थं यज्ञमालिर्म्महामतिः।
नित्यं विष्णुगृहे सम्यक् परिचर्य्यापरोऽभवत्॥ २१ ।

---

* मूर्खैरिति (ख), (ग)। † विभुज्यते इति (क) ; हि भुज्यते इति (ख)। ‡ एतदर्द्धं (ख) पुस्तके नास्ति। § समुपभोगायेति (ख)। ¶ अव भुज्यते इति (ख)।

कालेन गच्छता तौ तु वृद्धभावमुपागतौ ।
यज्ञमालिः सुमाली च एककालमृतौ द्विजाः* ॥ २२ ॥
हरिपूजारतस्यास्य यज्ञमालेर्महात्मनः ।
हरिः सम्प्रेषयामास विमानशतमुत्तमम् ॥ २३ ॥
दिव्यं विमानमारुह्य यज्ञमालिर्महामतिः ।
पूज्यमानः सुरगणैस्तूयमानोमुनीश्वरैः ॥
गन्धर्व्वैर्गीयमानश्च अप्सरोभिश्च सेवितः ।
कामधेन्वाकृष्यमाणश्चित्राभरणभूषितः ॥
कोमलैस्तुलसीमाल्यैर्भूषितस्तेजसां निधिः ।
गच्छन्विष्णुपुरन्तूर्णमनुजं पथि दृष्टवान्† ॥ २४-२६ ॥
ताड्यमानं यमभटैः क्षुत्तृष्णापरिपीड़ितम् ।
प्रेतभूतं विवस्त्रञ्च दृष्टवान्पाशवेष्टितम् ॥ २७ ॥
इतस्ततः प्रधावन्तं विलपन्तं स्वकर्म्म च ।
क्रोशन्तञ्च रुदन्तञ्च व्रजन्तं पथि दृष्टवान्‡ ॥ २८ ॥
यज्ञमालिर्दयायुक्तो हरिदूतान् समागतान्§ ।
कोऽयं भटैर्बाध्यमान इत्यपृच्छत्कृताञ्जलिः ॥ २९ ॥
अथ ते हरिदूतास्तं यज्ञमालिं महौजसम् ।
असौ सुमाली भ्राता ते पापात्मा इत्यबोधयन्¶ ॥ ३० ॥
यज्ञमालिः समाकर्ण्य आख्यातं विष्णुकिङ्करैः ।

---

* मृतावुभाविति (ख) । † दृष्टवान् पथीति (ग) । ‡ २७।२८ श्लोकौ (ख) पुस्तके न स्त । § समीपगानिति (ग) । ¶ अचोदयन्निति (क) , अवोचतेति (ग) ।

मनसा दुःखमापन्नः पुनः पप्रच्छ चापि तान्* ॥ ३१ ।
कथमस्य भवेन्मोक्षो ह्यर्ज्जितैः† पापसञ्चितैः ।
तदुपायं वदध्वं मे शीघ्रं यूयं हि बान्धवाः‡ ॥ ३२ ।
सख्यं साप्तपदीनं स्यादित्याहुर्धर्म्मकोविदाः ।
तस्मान्मे बान्धवा यूयमप्रार्थितसमागताः§ ॥ ३३ ।
यज्ञमालेर्वचः श्रुत्वा विष्णुदूतो¶ दयापरः ।
पुनः स्मितमुखो भूत्वा यज्ञमालिं हरिप्रियम्‖ ॥ ३४ ।

विष्णुदूत उवाच ।

यज्ञमाले महाभाग नारायणपरायण ।
उपायं तव वक्ष्यामि शृणुष्व वदतो मम** ॥ ३५ ।
कृतन्तु सुमहत्कर्म्म त्वया प्राक्तनजन्मनि ।
प्रवक्ष्यामि समासेन शृणुष्व सुसमाहितः ॥ ३६ ।
पुरा त्वं वैश्यजातीयो नाम्ना विश्वम्भरः स्मृतः ।
त्वया कृतानि पापानि महान्त्यगणितानि वै ॥ ३७ ।
स्वकर्म्मकामनाहीनो मातापित्रोस्तथोज्झकः ।
एकदा बन्धुभिस्त्यक्तः शोकसन्तापपीड़ितः†† ।
क्षुधाग्निनाऽपि सन्तप्तः प्राप्तवान्हरिमन्दिरम् ॥ ३८ ।

---

* रेजित इति (क), (ख) ; वेदितुं इति (ग)। † स्वार्ज्जितैरिति (ख)। ‡ सीदतीव हि बान्धव इति (ख)। § तदुपायं वदस्व मे इति (क), (ख) ; वदाशु मे इति (ग)। अतः परं (ख) पुस्तके सूत उवाच इत्यधिकः पाठोऽस्ति। ¶ हरिदूत इति बहुषु पाठः। ‖ उवाचेति क्रियापदमूह्यम्। ** गदतो ममेति (क), (ख), (ग)। †† शोकताप-प्रपीडित इति (ख)।

तत्र वृष्टिसमुद्भूतं कर्द्दमं ह्रातुमिच्छता* ।
निवारितस्त्वया सोऽपि उपलेपनतां गतः ॥ ३९ ।
उपोषितश्च तद्रात्रौ तस्मिन्देवालये द्विजाः ।
सर्पेण दंशितं†स्तत्र प्रातः पञ्चत्वमागतः ॥ ४० ।
तेन पुण्यप्रभावेण उपलेपनजेन ते ।
विप्रजन्म च तत्रापि हरिभक्तिरचञ्चला ॥ ४१ ।
कल्पकोटिशतं साग्रं निर्व्विश्य‡ हरिसन्निधौ ।
तत्रैव ज्ञान§मासाद्य परं मोक्षं गमिष्यसि ॥ ४२ ।
अनुजं पातकिश्रेष्ठं यत्तु मोक्तुमिहेच्छसि¶ ।
उपायं तत्र वक्ष्यामि|| तच्छृणुष्व महामते** ॥ ४३ ।
गोचर्म्ममात्रभूमेस्तु उपलेपनजं फलम् ।
दत्त्वोद्धर महाभाग तस्माच्छ्रेयो भविष्यति ॥ ४४ ।
एवमुक्तस्ततस्तेन यज्ञमालिर्महामतिः ।
देवदूतोक्तमाचन्तु†† ददौ तस्मै फलन्तदा ॥ ४५ ।
विनष्टमभवत्तस्य पापजालं मुनीश्वराः ।
यमाज्ञाकारिणः सर्व्वे तं विमुच्य प्रदुद्रुवुः ॥ ४६ ।
विमानमागतं सद्यः सर्व्वभोगसमन्वितम् ।
समारुह्य‡‡ सुमाली च§§ मुमुदे देववत्तदा ॥ ४७ ।

---

* ह्रातुमिच्छयेति (ग) । † दष्ट इति साधु । ‡ निर्व्वर्त्येति (घ) । § मोक्षमासाद्येति (ग) । ¶ यत्त्वं मोचितुमिच्छसीति (ख) । || उपायन्तु प्रवक्ष्यामीति (ख) । ** एष श्लोकः (ग) पुस्तके नास्ति । †† देवदूतोक्तमाचक्ष्विति (ग) । ‡‡ समारुह्येति (क), (ग) । §§ तु इति (क) ।

तावुभौ भ्रातरौ विप्रा देववृन्दनमस्कृतौ* ।
अवापतुर्महाप्रीतिं समालिङ्ग्य परस्परम् ॥ ४८ ।
यज्ञमालिः सुमाली च स्तूयमानौ महर्षिभिः ।
गीयमानौ च गन्धर्व्वैर्विष्णुलोकमुपागतौ† ॥ ४९ ।
अवाप हरिसारूप्यं सुमाली द्विजसत्तमाः ।
यज्ञमालिश्च धर्म्मात्मा हरिसारूप्यतामगात् ॥ ५० ।
भुक्त्वा भोगांश्चिरं तत्र यज्ञमालिर्महामतिः ।
तत्रैव ज्ञानसम्पन्नः परं मोक्षमुपागतः ॥ ५१ ।
सुमाली च महाभागो विष्णुलोके युगायुतम्‡ ।
स्थित्वा भूमिं पुनः प्राप्य भूयोविप्रत्वमागतः ॥ ५२ ।
यज्ञानियाज§ तत्रैव मोक्षार्थं विष्णुतत्परः ।
समस्तव्रतदानानि धर्म्मांश्च कृतवांस्तथा ॥ ५३ ।
हरिपूजापरो नित्यं हरिनामपरायणः¶ ।
व्याहरन् हरिनामानि प्रपेदे जाह्नवीतटम् ॥ ५४ ।
तत्र स्नातश्च‖ गङ्गायामिष्ट्वा** विश्वेश्वरं प्रभुम् ।
अवाप परमं स्थानं योगिनामपि दुर्लभम् ॥ ५५ ।
अतिशुद्धकुले जातो गुणवान्वेदपारगः ।
सर्व्वसम्पत्समायुक्तो हरिपूजापरायणः ॥ ५६ ।††

---

* अतः परं (ख) पुस्तके सार्द्धश्लोकद्वयं नास्ति । † विष्णुलोकं समागताविति (क) । ‡ विष्णुलोके च शाश्वते इति (ख) । विष्णुलोकमुपागत इति (ङ) । § यज्ञानियाज सुबह्ननिति (ग) । ¶ हरिपूजापरायण इति (घ) । ‖ तत्र स्थितश्चेति (ख) । ** दृष्ट्वेति (क), (ख), (ग), (ङ) । †† एष श्लोकः (क), (ग), (घ) पुस्तकेषु नास्ति ।

उपलेपनमाहात्म्यं कथितं वो मुनीश्वराः ।
तस्मात्सर्व्वप्रयत्नेन पूजयध्वं जनार्द्दनम् ॥ ५७ ।
न तेषां नरकं विप्रा* ये प्रपन्ना जनार्द्दनम्† ।
तस्मात्सर्व्वप्रयत्नेन सम्पूज्यो जगतां पतिः ॥ ५८ ।
अकामादपि‡ ये विष्णोः सकृत्पूजां प्रकुर्व्वते ।
न तेषां भवबन्धस्तु कदाचिदपि जायते ॥ ५९ ।
हरिपूजारतान्§ यस्तु हरिबुद्ध्या प्रपूजयेत् ।
तं पूजयन्ति¶ विप्रेन्द्रा ब्रह्मविष्णुमहेश्वराः ॥ ६० ।
हरिभक्तिपराणान्तु सङ्गिनां‖ सङ्गमात्रतः ।
मुच्यते सर्व्वपापेभ्यो महापातकवानपि ॥ ६१ ।
हरिपूजापराणान्तु हरिनामरतात्मनाम्** ।
शुश्रूषानिरता यान्ति पापिनोऽपि परां गतिम् ॥ ६२ ।

इति श्रीबृहन्नारदीयपुराणे हरिभक्तिमाहात्म्ये चतुस्त्रिंशोऽध्यायः ।

---

* न तेषाञ्च रजो विप्रा इति (क), (ङ) । † एतदर्द्धं (ख) पुस्तके नास्ति । ‡ कदाचिदपीति (ग) । § हरिपूजापरानिति (ख); हरिभक्तिरतानिति (ग) । ¶ तस्य तुष्यन्तीति (क) ; तस्मात् पृच्छन्तीति (ख) ; तस्य पूज्यन्तीति (ग), (घ), एतत्तु आर्षं, तेन पूज्यन्ते इति साधु । ‖ योगिनामिति (ङ) । ** हरिभक्तिपरा ये च हरिनामरतास्तथेति (ख) ।

## अथ पञ्चत्रिंशोऽध्यायः ।

सूत उवाच ।

भूयः शृणुत* विप्रेन्द्रा माहात्म्यं कमलापतेः ।
कस्य नो जायते प्रीतिः श्रोतुं हरिकथामृतम् ॥ १ ।
नराणां विषयार्त्तानां† ममताकुलचेतसाम्‡ ।
एकमेव हरेर्नाम सर्व्वपापप्रणाशनम्§ ॥ २ ।
सकृद्वा न नमेद्यस्तु विष्णवे कर्म्महारिणे ।
शवोपमं तं जानीयात्कदाचिदपि नालपेत् ॥ ३ ।
हरिपूजाविहीनस्तु यस्य वेश्म द्विजोत्तमाः ।
श्मशानसदृशं विद्यान्न कदाचिद्विशेच्च तत् ॥ ४ ।
हरिपूजाविहीनाश्च वेदविद्वेषिणस्तथा ।
द्विजगोद्वेषिणश्चैव¶ राक्षसाः परिकीर्त्तिताः ॥ ५ ।
यो वा को वापि विप्रेन्द्राः विप्रद्वेषपरायणः‖ ।
यद्यर्च्चयति** गोविन्दं सा पूजा विफला भवेत् ॥ ६ ।
अन्यश्रेयोविघातार्थं†† येऽर्च्चयन्ति जनार्द्दनम् ।
सा पूजा‡‡ सुमहाभागाः पूजकानाशु हन्ति वै ॥ ७ ।

---

* शृणुध्वमिति (ख), (ग) । † विषयार्थानामिति (क) ; विषयाधीनामिति (ख) ; विषयान्धानामिति (ग) , विषयोक्तानामिति (ङ) । ‡ ममतां गतचेतसामिति (ख) । § सर्व्वपातकनाशनमिति (ङ) । ¶ चापीति बहुषु पाठः । ‖ विष्णुद्वेषपरायण-इति (ङ) । ** अभ्यर्च्चयतीति (घ) । †† विनाशार्थमिति (ग) । ‡‡ सा पूजाऽपीति (ख) , सा तु पूजेति (ग) ।

हरिपूजापरो यस्तु यदि पापं करोति वै ।
तमेव विष्णुद्वेष्टारं प्राहुस्तत्त्वार्थकोविदाः ॥ ८ ।
ये विष्णुनिरताः शान्ता लोकानुग्रहतत्पराः ।
सर्व्वभूतदयायुक्ता विष्णुरूपाः प्रकीर्त्तिताः ॥ ९ ।
कोटिजन्मार्ज्जितैः पुण्यैर्विष्णुभक्तिः प्रजायते ।
दृढ़भक्तिमतां* विष्णौ† पापबुद्धिः कथं भवेत् ॥ १० ।
जन्मकोट्यर्ज्जितं‡ पापं हरिपूजारतात्मनाम् ।
क्षीणं याति क्षणादेव तेषां स्यात्पापधीः कथम् ॥ ११ ।
विष्णुभक्तिविहीना ये चाण्डालाः परिकीर्त्तिताः ।
चाण्डाला अपि वै पूज्या§ हरिभक्तिपरायणाः ॥ १२ ।
नराणां विषयान्धानां¶ सर्व्वदुःखविनाशिनी ।
हरिसेवेति विख्याता भक्तिमुक्तिप्रदायिनी|| ॥ १३ ।
सङ्गान्मोहात्तथा** लोभादज्ञानाद्वापि यो नरः ।
विष्णोरुपासनं कुर्य्यात्सोऽक्षयं स्वर्गमश्नुते ॥ १४ ।
हरिपादोदकं यस्तु कणमात्रन्तु धारयेत् ।
स स्नातः सर्व्वतीर्थेषु विष्णोः प्रियतरोभवेत्†† ॥ १५ ।
अकालमृत्युशमनं सर्व्वव्याधिविनाशनम्‡‡ ।

---

* दृढबुद्धिमतामिति (क), (ख), (ग), (ङ) । † तेषामिति (ङ) । ‡ कोटि-जन्मार्ज्जितमिति (ग) । § अपि वै म्लेच्छा इति (क), (ग) । ¶ विषयार्त्तानामिति (क), (ङ), अपि वै शुद्धा इति (ग) ; विषयाधीनामिति (ख) । || (ख) पुस्तके एतदर्द्धं नास्ति । ** जानन्नपि भयादिति (क), (ख), (ङ) ; जातु स्नेहाद्भयादिति (ग) । †† प्रियतरस्तथेति बहुषु पाठः । ‡‡ सर्व्वव्याधिविवर्ज्जितमिति (ग) ।

सर्व्वदुःखोपशमनं हरिपादोदकं शुभम्॥ १६।
नारायणपरं धाम ज्योतिषां ज्योतिरुत्तमम्।
ये प्रपन्ना महात्मानस्तेषां मुक्तिर्हि शाश्वती॥ १७।

सूत उवाच।

आसीत्पुरा कृतयुगे कणिको* नाम लुब्धकः।
परदारपरस्वापहरणे सततोद्यतः†॥ १८।
परनिन्दापरो नित्यं जन्तुपीड़ारतः सदा‡।
हतवान्ब्राह्मणान् गाश्च शतशोऽथ सहस्रशः॥ १९।
देवस्वहरणे नित्यं परस्वहरणे तथा।
उद्युक्तो वर्व्वरो§ विप्राः कीणाशानामधीश्वरः॥ २०।
तेन पापान्यनेकानि कृतानि सुमहान्ति च।
न तेषां शक्यते वक्तुं संख्या वत्सरकोटिभिः॥ २१।
स कदाचिन्महापापो¶ जनानामन्तकोपमः‖।
सौवीरराज्ञां** नगरं सर्व्वैश्वर्य्यसमन्वितम्॥
योषिद्भिर्भूषिताभिश्च†† सरोभिर्निर्म्मलोदकैः।
अलङ्कृतं विपणिभिर्ययौ देवपुरोपमम्॥ २२।२३।
तस्योपवनमध्यस्थं रम्यं केशवमन्दिरम्।

---

* कालकी नामेति (ग)। † परद्रव्यहरणे सततोद्यत इति बहुषु पाठः। ‡ तथेति (ख), (ग)। § सर्व्वदेति (क),(ख), (ङ); सततमिति (ग)। ¶ महापापीति (क), (ङ)। ‖ अन्तिके श्रुतमिति (क),(ख),(ङ)। ** सौवीरं नामेति (ख), सौवीरराज्ञ इति (ग)। †† भूषितश्चैवेति (घ)।

छादितं हेमकलसैर्दृष्ट्वा व्याधो मुदं ययौ ॥ २४ ।
हराम्यत्र सुवर्णानि बहूनि च विनिश्चितः* ।
जगाम विष्णुभवनं कीनाशश्चार्थलोलुपः† ॥ २५ ।
तत्रापश्यद्द्विजवरं शान्तं तत्त्वार्थकोविदम् ।
परिचर्य्यापरं विष्णोरुतङ्कं तपसां निधिम् ॥ २६ ।
एकाकिनं दयायुक्तं‡ निष्पृहन्ध्यानलोलुपम् ।
दृष्ट्वाऽसौ लुब्धको मेने तं चौर्य्यस्यान्तरायिकम्§ ॥ २७ ।
देवस्य द्रव्यजातन्तु समादातुमना निशि ।
उतङ्कं हन्तुमारेभे विधृतासि¶र्मदोद्धतः ॥ २८ ।
पादेनाक्रम्य तद्वक्षो निगृह्य पाणिना कचम्‖ ।
एवङ्कृतमतिं** तन्तु उतङ्कः प्रेक्ष्य चाब्रवीत् ॥ २९ ।
भो भोः साधो वृथा मान्त्वं हनिष्यसि निरागसम् ।
मया किमपराधन्ते†† कृतं तद्वद लुब्धक‡‡ ॥ ३० ।
कृतापराधिनो लोके§§ शिक्षां कुर्व्वन्ति यत्नतः ।
न हिंसन्ति वृथा सौम्य सज्जना अपि पापिनम् ॥ ३१ ।
विरोधिष्वपि मूर्खेषु निरीक्ष्यावस्थितान् गुणान् ।

---

* विनिश्चितमिति (घ)। † चौर्य्यलोलुप इति (ख), (ग)। ‡ दयालुं तमिति (ख); दयालुञ्चेति (ग)। § तच्चौरं स्वर्णहारकमिति (ख), चौरस्यान्तरायिणमिति (ग)। ¶ विवृतासिरिति (ख)। ‖ कचं निगृह्य पाणिनेति (ख), जटां संगृह्य पाणिनेति (ग)। ** हन्तुं कृतमतिमिति (ग)। †† अपराधशब्दस्य क्लीवत्वमार्षम्, किमपराद्धं ते इति (ख), (ङ) पुस्तकयोः पाठः। ‡‡ लुब्धक तद्वदेति (ङ)। §§ लोका इति (ख), (ग)।

विरोधं नापि गच्छन्ति* सज्जनाः शान्तचेतसः ॥ ३२ ।
बहुधा बाध्यमानोऽपि यो नरः क्षमयान्वितः ।
तमुत्तमं नरं प्राहुर्विष्णोः प्रियतरं तथा ॥ ३३ ।
सुजनो न याति वैरं परहितबुद्धिर्विनाशकालेऽपि† ।
छेदेऽपि चन्दनतरुर्वासयति मुखं कुठारस्य‡ ॥ ३४ ।
अहो विधिर्वै बलवान् बाधते बहुधा जनान् ।
सर्व्वसङ्गविहीनोऽपि बाध्यते च दुरात्मना§ ॥ ३५ ।
अहो निष्कारणं लोके बाधन्ते पिशुना जनान् ।
तत्रापि साधून् बाधन्ते न समानान्कथञ्चन¶ ॥ ३६ ।
मृगमीनसज्जनानां तृणजलसन्तोषविहितवृत्तीनाम् ।
लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति‖ ॥ ३७ ।
अहो बलवती माया मोहयत्यखिलं जगत् ।
पुत्त्रमित्रकलत्रार्थं सर्व्वदुःखे** नियोजति†† ॥ ३८ ।
परद्रव्यापहारेण कलत्रं पोषितं तु यैः ।
अन्ते तत्सर्व्वमुत्सृज्य एक एव प्रयाति वै ॥ ३९ ।
मम माता मम पिता मम भार्य्या ममात्मजः‡‡ ।

---

* गच्छन्तीति (क) ; नाधिगच्छन्तीति (ग) । † विनाशनेऽपीति (घ), तत्र छन्दोदोषः : ‡ एष श्लोको (ङ) पुस्तके नास्ति । श्लोक एषः प्रक्षिप्त इत्यनुमीयते । § बाध्यते न दुरात्मनेति (ग), (ङ) । (ख) पुस्तके एतदर्द्धं नास्ति । ¶ तत्रापि साधु जायन्ते न समानं कथञ्चनेति (क), (ङ) पुस्तकयोः पाठः । ‖ एष श्लोकः (ङ) पुस्तके नास्ति । प्रक्षिप्तश्चायमित्यनुमीयते । ** सर्व्वं दुःखमिति (ङ) । †† नियुङ्क्ते इति साधु । नियोजितमिति (ख), (ग) । ‡‡ ममानुज इति (क) ।

ममेदमिति जन्तूनां ममता बाधते वृथा ॥ ४० ।
धर्म्माधर्म्मौ सहैवास्तामिहाऽमुत्र न चापरः ।
यावदर्ज्जयति द्रव्यं तावदेव हि बान्धवाः ॥ ४१ ।
धर्म्माधर्म्मार्ज्जितैर्द्रव्यैः पोषिता येन ये नराः ।
मृतमग्निमुखे हुत्वा घृतान्नं* भुञ्जते हि ते ॥ ४२ ।
गच्छन्तं परलोकञ्च नरं तं ह्यनुतिष्ठतः ।
धर्म्माधर्म्मौ न च धनं न पुत्रा न च बान्धवाः ॥ ४३ ।
कामः समृद्धिमायाति नराणां पापकर्म्मणाम् ।
वृथाऽयं बाधते लोको धनादीनामुपार्ज्जने† ।
यद्भावि तद्भवत्येव नैतज्जानन्त्यबुद्धयः‡ ॥ ४४ ।
पादेनैकेन वक्ष्यामि यदुक्तं ग्रन्थकोटिभिः§ ।
भवितव्यं भवत्येव तच्च लोको न बुध्यते¶ ॥ ४५ ।
यद्भाव्यं तद्भवत्येव यदभाव्यं न तद्भवेत् ।
इति निश्चितबुद्धीनां न चिन्ता बाधते क्वचित् ॥ ४६ ।
दैवाधीनमिदं सर्व्वं‖ जगत्स्थावरजङ्गमम् ।
तस्माज्जन्म च मृत्युञ्च दैवं जानाति नाऽपरः** ॥ ४७ ।

---

* घृतमग्निमुखे हुत्वा मृतार्थं भुञ्जते इति (ग) ; (क) पुस्तके घृतमग्निमुखे हुत्वा घृतान्नमिति पाठो वर्त्तते । † सदार्ज्जने इति (क), (ख) ; तथार्ज्जने इति (ग), (ङ) । ‡ न जानन्त्यवबुद्धय इति (ङ) । § ब्रह्मकोटिभिरिति (ग) । ¶ (क) पुस्तकेऽतः परं यद्भाव्यं तद्भवत्येव तच्च लोको न बुध्यते इत्याधिकाद्धं वर्त्तते । ‖ जगत्सर्व्वमिति (ङ) । ** नैकं जानाति नापरमिति (घ) ।

यत्र कुत्र स्थितस्यापि* यद्भाव्यं तद्भवेद्ध्रुवम् ।
लोकस्तु तद्विज्ञाय† ह्यथायाससमाकुलः‡ ॥ ४८ ।
अहो दुःखं मनुष्याणां ममताकुलचेतसाम् ।
महापापानि कृत्वाऽपि परान् पुष्यन्ति§ यत्नतः ॥ ४९ ।
अर्ज्जितन्तु धनं सर्व्वं भुञ्जते बान्धवाः समम् ।
स्वयमेको नाम¶ मूढ़स्तत्पापफलमश्नुते|| ॥ ५० ।
इति ब्रुवाणन्तमृषिं विमुच्य भयविह्वलः ।
कनिकः प्राञ्जलिः प्राह क्षमस्वेति पुनः पुनः ॥ ५१ ।
तत्संसर्गप्रभावेण** हरिसन्निधिमात्रतः ।
गतपापोलुब्धकश्च†† अनुतापीदमब्रवीत्‡‡ ॥ ५२ ।
मया कृतानि पापानि महान्ति सुबहूनि च§§ ।
तानि सर्व्वाणि नष्टानि विप्रेन्द्र तव दर्शनात् ॥ ५३ ।
अहोऽहं¶¶ पापधीर्नित्यं महापापं समाचरम् ।
कथं मे निष्कृतिर्भूयात्कं यामि शरणं विभो ॥ ५४ ।
पूर्व्वजन्मार्ज्जितैः पापैर्लुब्धकत्वमवाप्नवान्|||| ।

---

* अतः परं (ख) पुस्तके चरणचतुष्टयं नास्ति । तत्र यत्र कुत्र स्थितस्यापि नरस्याकुल-चेतस इत्येवं पाठो वर्त्तते । † तन्न विज्ञायेति (ग), (ङ) । ‡ ह्यथापापसमाकुल-इति (घ) । § परानश्नन्तीति (क) ; परान् तुष्यन्तीति (ग), (ङ) । ¶ स्वयमेकोमूढ़तम-इति (ग) । || (ख) पुस्तकेऽतः परं सूत उवाचेति पाठो वर्त्तते । ** तत्सङ्गस्य प्रभावेणेति (ग) । †† स तु पापी लुब्धकश्चेति (ख) ; गतपापो लुब्धकः स इति (ग) । ‡‡ अतः परं (ख) पुस्तके कनिक उवाचेत्यधिकः पाठो वर्त्तते । §§ सुदृढानिवेति (ख) । ¶¶ अहोऽहमिति (घ) । |||| अवाप्नुयामिति बहुषु पाठः ।

तत्रापि पापजालानि कृत्वा कां गतिमाप्नुयाम् ॥ ५५ ।

अहो ममायुः क्षयमेति शीघ्रं
पापान्यनेकानि समार्ज्जितानि ।
प्रतिक्रिया नैव कृता मयैषां
गतिश्च का स्यान्मम जन्म किं वा ॥ ५६ ।
अहो विधिः पापशताकुलं मां
किं सृष्टवान् भारकरञ्च मह्याः ।
कथं नु तत्पापफलानि भोक्ष्ये
कियत्सु जन्मस्वहमुग्रकर्म्मा ॥ ५७ ।

एवं विनिन्द्य* चात्मानमात्मना लुब्धकस्तदा ।
अन्तस्तापातिसन्तप्तः† सद्यः पञ्चत्वमागतः ॥ ५८ ।
उतङ्कः पतितं प्रेक्ष्य‡ लुब्धकन्तं दयापरः ।
विष्णुपादोदकेनै§न¶मभ्यसिञ्चन्महामतिः ॥ ५९ ।
हरिपादोदकस्पर्शाल्लुब्धको वीतकल्मषः ।
दिव्यं विमानमारुह्य मुनिमेनमथाब्रवीत् ॥ ६० ।

कनिक उवाच ।‖

उतङ्क मुनिशार्द्दूल गुरुस्त्वं मम सुव्रत ।
विमुक्तस्त्वत्प्रसादेन महापातकबन्धनात् ॥ ६१ ।

---

* विनिन्दितात्मानमिति (क), (ख) ; निन्दन्तमात्मानमिति (ग) ; मिनिन्द चात्मानमिति (ङ) । † अन्तस्तापाभिसन्तप्त इति (क), अन्तस्तापाग्निसन्तप्त इति (ङ) । ‡ वीक्ष्येति (ग) । § हरिपादोदकेनेति (ग) । ¶ एवेति बहुषु पाठः । ‖ दिव्यदेह उवाचेति (ख) ।

जातस्तदुपदेशान्मे सन्तापो* मुनिपुङ्गव ।
तेन मे पापजालानि विनष्टानि महामते ॥ ६२ ।
हरिपादोदकं यस्मान्मयि त्वं सिक्तवानसि ।
प्रापितोऽस्मि ततस्तस्मात्तद्विष्णोः परमम्पदम् ॥ ६३ ।
त्वयाऽहङ्कृतकृत्योऽस्मि गुरुस्त्वं मम सुव्रत ।
तस्मान्नतोऽस्मि ते विद्वन्यत्कृतं तत्चमस्व मे† ॥ ६४ ।
इत्युक्त्वा देवकुसुमैर्मुनिश्रेष्ठमवाकिरत् ।
प्रदक्षिणत्रयङ्कृत्वा नमस्कारञ्चकार सः ॥ ६५ ।
ततो विमानमारुह्य सर्व्वकामसमन्वितम ।
अप्सरोगणसङ्कीर्णं प्रपेदे हरिमन्दिरम्‡ ॥ ६६ ।
एतद्दृष्ट्वा विस्मितोऽसावुतङ्कस्तपसां निधिः ।
शिरस्यञ्जलिमाधाय अस्तौषीत्कमलापतिम् ॥ ६७ ।
तेन स्तुतो महाविष्णुर्दत्तवान्वरमुत्तमम् ।
वरैश्च तेनोतङ्कोऽपि प्रपेदे परमम्पदम् ॥ ६८ ।

इति श्रीबृहन्नारदीयपुराणे हरिमाहात्म्यप्रवर्णने पञ्चत्रिंशोऽध्यायः ।

---

* संयत इति (क), (ङ) ; विवेक इति (म) । † अतः परं (ख) पुस्तके सूत उवाचेत्यधिकः पाठो वर्त्तते । ‡ प्रपेदे परमं पदमिति (क), तत्र श्लोकद्वयं नास्ति, (ख) पुस्तके चैकः श्लोकः ।

# षट्त्रिंशोऽध्यायः ।

ऋषय ऊचुः ।

किं तत्स्तोत्रं महाभाग कथन्तुष्टो जनार्द्दनः ।
उतङ्कः पुण्यः पुरुषः कीदृशं लब्धवान्वरम् ॥ १ ।

सूत उवाच ।

उतङ्को नाम विप्रेन्द्रो हरिध्यानपरायणः ।
हरिपूजनसामर्थ्यं* दृष्ट्वा तुष्टाव भक्तितः ॥ २ ।

नमामि† नारायणमादिदेवं
जगन्निवासं जगदन्तहेतुम् ।
चक्रासिशार्ङ्गाब्जधरं महान्तं‡
स्मृतार्त्तिविच्छेदकरं प्रसन्नम् ॥ ३ ।

यन्नाभिजाब्जप्रभवो§ विधाता
सृजत्यमुं¶ लोकसमुच्चयं यः ।
यत्क्रोधजो रुद्र इमं‖ समत्ति
तमादिनाथं** प्रणतोऽस्मि विष्णुम्†† ॥ ४ ।

---

* हरेर्याजनसामर्थ्यमिति (क) ; हरिं जज्वाल्य सामान्यदृष्ट्वेति (ख) ; हरिपूजन-माहात्म्यमिति (ग) ; हरियाजनसामर्थ्यमिति (ङ) । † नतोऽस्मि नारायणमिति (ग) । ‡ चक्रासिशार्ङ्गायुधधृङ्महान्तमिति (ख) । § यन्नाभिभावप्रसव इति (ख) ; यन्नाभि-रूपाब्जभव इति (ङ) । ¶ सृजत्ययमिति (ख), (घ) । ‖ इदमिति (क), (ख), (घ), (ङ) । ** आदिदेवमिति (क) । †† विष्णुमिति (ग) ।

पद्मापतिं पद्मदलायताक्षं*
विचित्रवीर्य्यं निखिलैकहेतुम्।
वेदान्तवेद्यं पुरुषं पुराणम्
तेजोनिधिं विष्णुपदं प्रपद्ये† ॥ ५ ।
आत्मा श्रुतः‡ सर्व्वगतोऽच्युताख्यो
ज्ञानात्मको ज्ञानविदां वरिष्ठः§ ।
नित्यं प्रपन्नार्त्तिहरः परात्मा
दयाम्बुधिर्मे वरदः स्वरूपः¶ ॥ ६ ।
यत्‖ स्थूलसूक्ष्मादिविशेषभेदै-
र्जगत्तु विस्तारित**मेतदीश ।
त्वमेव तत्सर्व्वमनन्तसार
त्वत्तः परं नास्ति परापरात्मन् ॥ ७ ।
अगोचरं यत्तव सूक्ष्मरूपं
मायाविहीनं†† गुणजातिहीनम् ।
निरञ्जनं निर्म्मलमप्रमेयं
पश्यन्ति सन्तः परमात्मसंज्ञम् ॥ ८ ।

---

* पद्मदलामलाक्षमिति (ख)। † प्रपन्न इति (ख), (ग), (ङ)। ‡ अनादित- इति (ख); आत्माच्युत इति (ग)। § प्रपन्न इति (ग), अतः परं (ग) (ङ), पुस्तकयोः ज्ञानैकवेद्यो भगवाननादिः प्रसीदतु व्यष्टिसमष्टिरूपः। अनन्तवीर्य्यो गुणजातिहीनो गुणात्मको ज्ञानविदां वरिष्ठ. इत्यधिकः पाठो दृश्यते। ¶ स भूयादिति (ग), (ङ)। ‖ य इति बहुषु पाठः। ** सविस्तारितमिति (ख), (ङ), प्रविस्तारितमिति (ग)। †† भासा विहीनमिति (ख)।

एकेन हेम्नैव विभूषणानि
जातानि भिन्नत्वमुपाधिभेदात् ।
तथैव सर्व्वेश्वर एक एव
प्रदृश्यते भिन्न इवाखिलात्मा ॥ ९ ।
यन्मायया मोहितमानसा ये
पश्यन्ति नात्मानमपि प्रपन्नम्* ।
त एव मायाविगतास्तदैव
पश्यन्ति सर्व्वात्मकमात्मरूपम् ॥ १० ।
निर्गुणम्परमानन्दममायमजरं ध्रुवम्† ।
परं ज्योतिरनौपम्यं विष्णुसंज्ञं नमाम्यहम् ॥ ११
समस्तमेतदुद्भूतं यतोयत्र प्रतिष्ठितम् ।
यतश्चैतन्यमायाति यद्रूपं‡ तस्य वै नमः ॥ १२ ।
अप्रमेयमनाधारमाधार§ञ्जगतामपि ।
परमानन्दचिन्मात्रं वासुदेवन्नमाम्यहम् ॥ १३ ।
हृद्गुहानिलयन्देवं योगिभिः परिसेवितम् ।
योगानामादिभूतन्तं नमामि प्रणवस्थितम् ॥ १४ ।
नादात्मकं नादवीजं प्रयतं¶ प्रणवात्मकम् ।
सम्भवं|| सच्चिदानन्दं वन्दे तं तिग्म**चक्रिणम् ॥ १५ ।
अक्षरं जगतां†† साक्षि न वाङ्मनसगोचरम् ।

---

* प्रसिद्धमिति (ग) ; प्रसन्नमिति (ङ) । † विभुमिति (ग) । ‡ तद्रूपमिति (ङ) । § माधानं जगतामिति (ख) । ¶ प्रयत इति (क), (ख), (ङ) । || सद्भावमिति (ग) । ** तीक्ष्णचक्रिणमिति (ग) । †† जगत इति इहत्र पाठः ।

निरञ्जनमनन्ताख्यं विश्वरूपं* नतोऽस्म्यहम् ॥ १६ ।
इन्द्रियाणि मनोबुद्धिः सत्त्वं तेजोबलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रक्षेत्रज्ञमेव च ॥ १७ ।
विद्याविद्यात्मकं प्राहुर्यमीशं जगतां पतिम् ।
परात्परात्मकं प्राहुः परात्परतरं तथा ॥ १८ ।
अनादिनिधनं शान्तं सर्व्वधातारमच्युतम् ।
ये प्रपन्ना महात्मानस्तेषां मुक्तिर्हि शाश्वती† ॥ १९ ।

वरं वरेण्यं वरदं पुराणं
सनातन सर्व्वगतं प्रसन्नम् ।
नतोऽस्मि भूयोऽपि नतोऽस्मि भूयो
नतोऽस्मि भूयोऽपि नतोऽस्मि भूयः‡ ॥ २० ।
यत्पादतोयं भवरोगवैद्यं
यत्पादपांशुर्विमलत्वसिद्धै ।
यन्नाम दुष्कर्म्मनिवारणीयं
तमप्रमेयं पुरुषं भजामि ॥ २१ ।

सद्रूपं तमसद्रूपं सदसद्रूपमव्ययम् ।
तत्तद्विलक्षणं श्रेष्ठं श्रेष्ठाच्छ्रेष्ठतरम्भजे ॥ २२ ।
निरञ्जनं निराकारं पूर्णमाकाशमध्यगम् ।
परञ्च विद्याऽविद्याभ्यां हृदम्बुजनिवासिनम् ॥ २३ ।
अप्रकाशमनिर्द्देश्यं महतां वा महत्तरम् ।

---

* विष्णुरूपमिति (ग)।  † एतौ (१८।१८) श्लोकौ (ख) (घ) पुस्तकयोः न स्तः।
‡ नतोऽस्मि रूपीऽपि नतोऽस्मि रूप इति (क) (ख) पुस्तकयोः पाठः।

अणोरणीयांसमजं सर्व्वोपाधिविवर्ज्जितम् ॥ २४ ।
यन्नित्यं परमानन्दम्पूर्णं ब्रह्म सनातनम्* ।
विष्णुसंज्ञं जगद्धाम तमस्मि शरणङ्गतः ॥ २५ ।
यं भजन्ति क्रियानिष्ठाः† यं पश्यन्ति च योगिनः ।
पूज्यात्पूज्यतरं शान्तं नतोऽस्मि शरणं प्रभुम् ॥ २६ ।
यन्न पश्यन्ति विद्वांसो यच्च तद्व्याप्य तिष्ठति ।
सर्व्वस्मादधिकन्नित्यं नतोऽस्मि विभुमव्ययम् ॥ २७ ।
अन्तःकरणयोगाद्धि‡ जीव इत्युच्यते च यः ।
अविद्याकार्य्यरहितः परमात्मेति गीयते ॥ २८ ।
सर्व्वात्मकं सर्व्वहेतुं सर्व्वकर्म्मफलप्रदम् ।
वरं वरेण्यमजरं प्रणतोऽस्मि परात्परम् ॥ २९ ।

सर्व्वज्ञातं§ सर्व्वगतं महान्तं
वेदान्तगं वेदविदां वरिष्ठम्¶ ।
तं वाङ्मनोऽचिन्त्य‖मनन्तशक्तिम्
ज्ञानैकवेद्यं** पुरुषम्भजामि ॥ ३० ।
इन्द्राग्निकालासुरपाशिवायु-
सोमेशमार्त्तण्ड††पुरन्दराद्यैः ।

---

* पूर्णञ्चैव सनातनमिति (ख) । † क्रियानित्या इति (क) । ‡ अन्तःकरणसङ्गात्तु इति (ख) ; अन्तःकरणसंयोगादिति (ग), (ङ) । § सर्व्वज्ञकमिति (ख), (ग), (ङ) । ¶ वेदान्तसंवेदविदार्थविद्यमिति (क) ; वेदात्मकं वेदविदां वरिष्ठमिति (ख) ; वेदान्तकं वेदविदां वरेण्यमिति (ग) ; वेदान्तसंवेदविदां वरिष्ठमिति (ङ) । ‖ तन्त्वां मनोऽचिन्त्यमिति (घ) । ** ध्यानैकवेद्यमिति (ख) । †† सोमयमश्चैवेति (क), (ख), (ङ) ।

य: पाति लोकान् परिपूर्णभावः
तमप्रमेयं शरणं प्रपद्ये ॥ ३१ ।
सहस्रशीर्षञ्च सहस्रपादं
सहस्रबाहुञ्च सहस्रनेत्रम् ।
समस्तयज्ञं* परिपूर्णमाद्य
नतोऽस्म्यभीष्टप्रद†मुग्रवीर्य्यम् ॥ ३२ ।
कालात्मकं कालविभागहेतुं
गुणत्रयातीतमजं गुणेशम् ।
गुणप्रियं कामद‡मस्तसंज्ञ-
मतीन्द्रिय§ विश्वभुजं वितृष्णम्¶ ॥ ३३ ।
निरीहमग्र्यं मनसाऽप्यगम्य
मनोमयञ्चात्ममयं‖ स्वरूपम्** ।
अवाङ्मयं†† प्राणमय‡‡भजामि
विज्ञानभेदप्रतिपन्नकल्पम् ॥ ३४ ।
न यस्य रूपं न बलं प्रभावो§§
न यस्य कर्म्माणि न यत्प्रमाणम् ।

---

* सहस्रयागमिति (ख) ; समस्तयज्ञैः परिजुष्टमिति (ग)। † अतीतप्रदमिति (क), (ङ)। ‡ गुणत्रयीकामदमिति (ग)। § अन्तर्हितमिति (क) ; अन्तर्ह्रिममिति (ङ)। ¶ विदृष्टमिति (क) ; भजामीति (ग) ; विसृष्टमिति (ङ)। ‖ चान्तमयमिति (क), (ङ), चान्नमयमिति (ख), (ग)। ** स्वरूढ़मिति (ङ)। †† स वाङ्मयमिति (क), (ग)। ‡‡ प्राणमयमिति (ग)। §§ न बलप्रभावौ (क), (ङ)।

जानन्ति देवाः कमलोद्भवाद्याः
स्तोष्यामि नित्यं* कथमात्मरूपम् ॥ ३५ ।
संसारसिन्धौ पतितञ्जड़ं मां†
मोहाकुलं कामशतेन बद्धम्‡ ।
विज्ञानभेदभ्रमितात्मबुद्धिम्§
त्रायस्व विष्णो सततं नमस्ते¶ ॥ ३६ ।
लज्जाविहीनञ्च दयाविहीनं
तुच्छं|| परद्रव्यपरायणं माम् ।
ममत्वपाशान्तरवस्थितञ्च**
त्रायस्व विष्णो सततं नमोऽस्तु ॥ ३७ ।
अकीर्त्तिभाजं पिशुनङ्कृतघ्नं
सदाऽशुचिं पापरतं प्रमन्युम्†† ।
दयाम्बुधे त्राहि भयाकुलं मां
पुनः पुनस्त्वां शरणं प्रपद्ये ॥ ३८ ।
इति प्रसादितस्तेन दयालुः कमलापतिः ।
प्रत्यक्षतामगात्तस्य भगवांस्तेजसान्निधिः ॥ ३९ ।

---

* स्तोष्याम्यहं त्वामिति (क) । † य एनमिति (क), (ख), (ड), जनं मामिति (ग) । ‡ बाध्यमिति (क), (ख), (ग), (ङ) । § विज्ञानमेव भ्रमितात्मबुद्धिमिति (क), (ख), (ङ) ; विज्ञानभेदप्रमितात्मबुद्धिमिति (घ) । ¶ तुभ्यं सततं नमोऽस्त्विति (क) ; तुभ्यं सततं नतोऽस्मीति (ग) , तुभ्यं सकलं नमोऽस्त्विति (ड) । || तुभ्यमिति (क), (ख), (ङ) । ** पाशाशतवाधितञ्चेति (क), (ख), (ङ) , पाशायुतबाधितञ्चेति (ग) । †† प्रमत्तेति बहुषु पाठः ।

अतसीपुष्पसङ्काशं फुल्लपङ्कजलोचनम् ।
किरीटिनङ्कुण्डलिनं हारकेयूरभूषितम् ॥
श्रीवत्सकौस्तुभधरं हेमयज्ञोपवीतिनम् ।
नासाग्रन्यस्तमुक्ताभावर्द्धमानतनुच्छविम् ॥
पीताम्बरधरं देवं* वनमालाविभूषितम् ।
तुलसीकोमलदलैरर्च्चिताङ्घ्रिं महाद्युतिम्† ॥
किङ्किनीनूपुराद्यैश्च शोभितं गरुड़ध्वजम् ।
दृष्ट्वा ननाम विप्रेन्द्रो दण्डवत्क्षितिमण्डले ॥ ४०—४३ ।
क्षालयन् चरणौ विष्णोः‡रुतङ्को हर्षवारिभिः ।
मुरारे रक्ष रक्षेति व्याहरन्नान्यधीस्तदा§ ॥ ४४ ।
तमुत्थाप्य महाविष्णुरालिलिङ्गे दयापरः ।
वरं वृणीष्व वत्सेति प्रोवाच मुनिपुङ्गवम्¶ ॥ ४५ ।
असाध्यं नास्ति किञ्चित्ते प्रसन्ने मयि सत्तम ।
वरं वरय तस्मात्त्वमित्याह भगवान्हरिः ॥ ४६ ।
इतीरितं समाकर्ण्य उतङ्कश्चक्रपाणिना ।
पुनः प्रणम्य तम्प्राह देवदेवं जनार्द्दनम्‖ ॥ ४७ ।
किं मां मोहयसीश त्वं** किमन्यैर्देव मे वरैः ।
त्वयि भक्तिर्दृढ़ा मेऽस्तु जन्मजन्मान्तरेष्वपि ॥ ४८ ।

---

* विष्णुमिति (ग) । † महीपतिमिति (क), (ख), (ग), (ङ) । ‡ अभ्यसिञ्चद्धरेः पादाविति (ग) । § व्याजहारेति धीस्तदेति (ख) ; व्याजहारातिदुःखित इति (ङ) । ¶ अतः परं (ख) पुस्तके श्रीभगवानुवाचेत्यधिकः पाठोऽस्ति । ‖ एष श्लोकः (ख) पुस्तके नास्ति । ** मोहयसे मत्तिमति (क), (ख), (ग), (ङ) ।

कीटेषु पक्षिषु मृगेषु सरीसृपेषु
रक्षःपिशाचमनुजेष्वपि यत्र तत्र* ।
जातस्य मे भवतु केशव ते† प्रसादा-
त्त्वय्येव‡ भक्तिरचलाऽव्यभिचारिणी च§ ॥ ४९ ।
एवमस्त्विति देवेशः शङ्खप्रान्तेन तं स्पृशन् ।
दिव्यज्ञानन्ददौ तस्मै योगिनामपि दुर्लभम् ॥ ५० ।
पुनस्तुवन्तं विप्रेन्द्रं देवदेवो जनार्द्दनः ।
इदमाह स्मितमुखो हस्तं तच्छिरसि क्षिपन्¶ ॥ ५१ ।
श्रीभगवानुवाच ।
आराधय क्रियायोगैर्मां सदा विप्रसत्तम‖ ।
नरनारायणस्थानं व्रज मोक्षो भविष्यति ॥ ५२ ।
त्वयाकृतमिदं स्तोत्रं यः पठेत्सततं नरः ।
सर्व्वान् कामानवाप्नोति ततोमोक्षमवाप्नुयात् ॥ ५३ ।
इत्युक्त्वा माधवोदेवस्तत्रैवान्तरधीयत** ।
नरनारायणस्थानमुतङ्कोऽपि समाययौ ॥ ५४ ।
तस्माद्भक्तिः सदा कार्य्या देवदेवे जनार्द्दने ।
हरिभक्तिः परा प्रोक्ता†† सर्व्वकामफलप्रदा ॥ ५५ ।

---

* यत्र यत्रेति (ग) । † भवतु नाम तवेति (ङ) । ‡ प्रसादस्त्वय्येवेति (घ) । § अतः परं (ख) पुस्तके सूत उवाचेत्यधिकः पाठो वर्त्तते । ¶ हस्तं शिरसि संक्षिपन्निति (ग), (ङ) ; (ख) पुस्तके एष श्लोकः पूर्व्वस्य परार्द्धञ्च न स्तः । ‖ ऋषिसत्तम इति (ग) । ** तत्रैवान्तर्दधे तदेति (ग) । †† सदा कार्य्येति (घ) ।

पूजयध्वं महादेवं* विप्रेन्द्रा गरुड़ध्वजम् ।
पूजितो नमितो वापि संस्मृतो वापि मोक्षदः ॥ ५६ ।
तस्मान्नारायणन्देवमनन्तमपराजितम् ।
इहामुत्र फलप्रेप्सुः† पूजयेद्भक्तिसंयुतः ॥ ५७ ।
यः पठेदिममध्यायं शृणुयाद्वा समाहितः ।
सर्व्वपापविनिर्मुक्तः प्रयाति परमम्पदम् ॥ ५८ ।

इति श्रीबृहन्नारदीयपुराणे हरिभक्तिमाहात्म्ये षट्त्रिंशोऽध्यायः ।

---

## सप्तत्रिंशोऽध्यायः ।

सूत उवाच ।
भूयः शृणुत* विप्रेन्द्रा माहात्म्यं परमेष्ठिनः ।
सर्व्वपापहरं पुण्यं नारदेन प्रभाषितम् ॥ १ ।
अहो हरिकथा लोके पापघ्नी पुण्यदायिनी† ।
शृण्वतां ब्रुवताञ्चैव तद्भक्तानां विशेषतः ॥ २ ।

---

* सदा देवमिति (ग) । † फलं लिप्सुरिति (ग) ।

---

* शृणुध्वमिति (ग), (ङ) । † हरिकथालापः पापघ्नः पुण्यदायक इति (क) ।

हरिभक्तिरसास्वादमुदिता ये नरोत्तमाः ।
नमस्करोम्यहं तेषां तत्सङ्गी मुक्तिभाग्यतः ॥ ३ ।
हरिभक्तिपरा ये तु हरिनामपरायणाः* ।
दुर्वृत्ता वा सुवृत्ता वा तेषां नित्यं नमोनमः ॥ ४ ।
संसारसागरन्तर्त्तुं य इच्छेन्मुनिपुङ्गवाः ।
स भजेत्परमात्मानं भक्तास्ते† पापहारिणः‡ ॥ ५ ।
दृष्टः§ स्मृतः पूजितो वा ध्यातो वा नमितोऽपि वा ।
समुद्धरति गोविन्दो दुस्तराद्भवसागरात् ॥ ६ ।
स्वपन् भुञ्जञ्जपं¶स्तिष्ठन्नुत्तिष्ठंश्च चरंस्तथा|| ।
वदन्ति ये हरेर्नाम तेषान्नित्यं नमोनमः ॥ ७ ।
अहो भाग्यमहो भाग्यं विष्णुभक्तिरतात्मनाम् ।
यस्मान्मुक्तिः करस्थैव** योगिनामपि दुर्लभा†† ॥ ८ ।
आसीत्पुरा महीपालः सोमवंशसमुद्भवः ।
यज्ञध्वज इति ख्यातो नारायणपरायणः ॥
विष्णोर्देवालये नित्यं सम्मार्ज्जनपरायणः ।
दीपदानरतश्चैव सर्व्वभूतदयापरः ॥ ९—१० ।
स कदाचिन्महीपालो रेवातीरे मनोरमे ।
विचित्रं कुम्भलोपेतङ्कृतवान्हरिमन्दिरम् ॥ ११ ।

---

* हरिपूजापरायणा इति (ग)। † भजेत हरिभक्तानां भक्तास्ते इति (ग)। ‡ पापतारिण इति (घ)। § तुष्ट इति (क)। ¶ व्रजन्निति (ग)। || स्तुवंस्तथेति (क), (ख), वदंस्तथेति (ग); व्रजंस्तथेति (ङ)। ** भक्तिः करस्थैवेति (ग)। †† तस्माद्भक्तिः करस्थैव सर्व्वभूतदयापर इति (ङ)।

सोऽपि तत्राभवद्राजा* सदा सम्मार्ज्जने रतः ।
दीपदाने च विप्रेन्द्रा विशेषेण हरिप्रियः ॥ १२ ।
हरिनामपरो नित्यं हरिसंसक्तमानसः ।
हरिप्रणामनिरतो हरिभक्तजनप्रियः ॥ १३ ।
वीतहोत्र इति ख्यात आसीत्तस्य पुरोहितः ।
यज्ञध्वजस्य चरितन्दृष्ट्वा विस्मयमागतः ॥ १४ ।
कदाचिदुपविष्टन्तं राजानं विष्णुतत्परम् ।
अपृच्छद्वीतहोत्रस्तं वेदवेदाङ्गपारगः ॥ १५ ।

वीतहोत्र उवाच ।

राजन्परमधर्म्मज्ञ हरिभक्तिपरायण ।
विष्णुभक्तिमतां पुंसां श्रेष्ठोऽसि भरतर्षभ† ॥ १६ ।
सम्मार्ज्जनपरोनित्यं दीपदानरतस्तथा‡ ।
तन्मे वद महाभाग त्वया किं विदितम्फलम्§ ॥ १७ ।
सम्पादने तु वर्त्तीनां तैलसम्पादने तथा¶ ।
उद्युक्तोऽसि‖ महाभाग सदा सम्मार्ज्जने रतः ॥ १८ ।
कर्म्माण्यन्यानि सन्त्येव विष्णोः प्रियतराणि वै ।
तथापि त्वं** महाभाग एतयोः सततोद्यतः ॥ १९ ।
सर्व्वात्मना महापुण्यं जनेश विदितं त्वया†† ।

---

* सोऽपि तत्र नृशार्दूल इति (ग) । † राजसत्तम इति (क), (ङ) । ‡ दीपदानपरस्तथेति (क) । § किञ्चिदिदं फलमिति (क), (ख), (ङ) । ¶ सम्मार्ज्जने तु वर्त्तीनां तैलसम्मार्ज्जने तथेति (ग) । ‖ तन्मुक्तोऽसीति (क) । ** तन्मे वदेति (घ) । †† न तेष्वविदितं त्वयेति (क), (ख), (ङ) ।

तद्ब्रूहि मे यद्यगुह्यं प्रीतिर्मयि तवास्ति चेत्* ॥ २० ।
पुरोधसैवमुक्तस्तु† सततं‡ राजसत्तमः ।
विनयावनतो§ भूत्वा प्रोवाचेदं कृताञ्जलिः¶ ॥ २१ ।

यज्ञध्वज उवाच ।

शृणुष्व विप्रशार्दूल|| ममैव चरितम्पुरा** ।
जातिस्मरत्वाज्जानामि श्रोतॄणां†† विस्मयप्रदम् ॥ २२ ।
आसीत्पुरा कृतयुगे ब्रह्मन् स्वारोचिषेऽन्तरे ।
रैवतोनाम‡‡ विप्रेन्द्रो वेदवेदाङ्गपारगः ॥ २३ ।
अयाज्ययाजकश्चैव सदैव ग्रामयाजकः ।
पिशुनोनिष्ठुरश्चैव§§ अपण्यानाञ्च विक्रयी¶¶ ॥ २४ ।
निषिद्धकर्म्माचरणः|||| परित्यक्तः स्वबन्धुभिः ।
दरिद्रोदुःखितश्चैव दुःशीलोव्याधितोऽभवत्*** ॥ २५ ।
स कदाचिद्धनार्थन्तु पृथिव्यां पर्य्यटन्द्विजः ।
ममार नर्म्मदातीरे कासश्वासप्रपीड़ितः††† ॥ २६ ।
तस्मिन्मृते‡‡‡ तस्य भार्य्या नाम्ना वसुमती तदा§§§ ।

---

* प्रीतिर्मेऽपि तवास्ति चेदिति (क), (ख)। † उक्तश्चेति (क), (ख), (घ)। ‡ प्रहसन्निति (ख)। § प्रणयावनत इति (ख)। ¶ प्रोवाच तं कृताञ्जलिरिति (ङ)। || द्विजशार्दूल इति (ग)। ** ममैवाचरितं पुरेति (घ)। †† यन्नृणां विस्मयप्रदमिति (ख)। ‡‡ च्यवनोनामेति (ख)। §§ निपुणश्चैवेति (क), (ख), (ङ)। ¶¶ पण्यानाञ्चैव विक्रयीति (क)। |||| निषिद्धकर्म्माचरणादिति (ग)। *** अशीलोव्याधितोऽभवदिति (ख), शीर्णाङ्गोव्याधितोऽभवदिति (ग)। ††† समाकुल इति (ग)। ‡‡‡ तस्मिन् गते इति (क), (ख), (ङ)। §§§ तथेति (ग)।

कामाचाररता नित्यं* परित्यक्ता स्वबन्धुभिः ॥ २७ ।
तस्यां जातोऽस्मि चाण्डालो दण्डकेतुरिति स्मृतः ।
महापापरतोनित्यं निन्दकः पिशुनस्तथा† ॥ २८ ।
परदारपरद्रव्यलोलुपो जन्तुहिंसकः ।
गावश्च विप्रा बहवो निहता मृगपक्षिणः ॥ २९ ।
मेरुतुल्यसुवर्णानि बह्वन्यपहृतानि च ।
मद्यपानरतोनित्यं निन्दकः पिशुनस्तथा‡ ॥ ३० ।
एवम्पापरतो नित्यम्बहुशोमार्गरोधकृत्§ ।
पशुपक्षिमृगादीनां जन्तूनामन्तकोपमः ॥ ३१ ।
स कदाचित्कामतप्तोरन्तुकामः परस्त्रियम् ।
शून्यं पूजादिभिर्विष्णो¶र्मन्दिरं प्राप्तवान्निशि ॥ ३२ ।
तत्रैवात्मोपभोगार्थं‖ शयितुं तेन कामिना ।
स्ववस्त्रप्रान्ततो ब्रह्मन् कियद्देशः प्रमार्ज्जितः ॥ ३३ ।
यावन्त्यः पांशुकणिकास्तेन सम्मार्ज्जितास्तदा ।
तावज्जन्मकृतम्पापं तदैव क्षयमागतम् ॥ ३४ ।
प्रदीपः स्थापितस्तत्र रमणार्थन्द्विजोत्तम ।
तेनापि मम दुष्कर्म्म निःशेषक्षयमागतम् ॥ ३५ ।
एवं स्थिते विष्णुगृहे आगताः पुरपालकाः ।

---

* भूत्वेति (ग)। † ब्रह्मद्वेषरतस्तथेति (ग)। ‡ प्राणिहिंसक इति (ङ)। § बहुवेदविरोधकृदिति (क)। ¶ स्वयं पूजादिभिर्विष्णोरिति (ख), (घ), (ङ)। ‖ तत्र कामोपभोगार्थमिति (ग), (घ)।

चौरोऽयमिति तत्रैव जघ्नुरावां* द्विजोत्तम ॥ ३६ ।
दिव्यं विमानमारुह्य सर्व्वभोगसमन्वितम् ।
सद्य एव तया सार्द्धं विष्णुलोकमुपागतः ॥ ३७ ।
तत्र स्थित्वा ब्रह्मकल्पशतं साग्रन्द्विजोत्तम ।
ततश्च ब्रह्मणा सार्द्धं तावत्कालं व्यवस्थितः† ॥ ३८ ।
दिव्यभोगसमायुक्तस्तावत्कालन्दिवि स्थितः‡ ।
ततश्च भूमिभागेषु देवयोग्येषु§ वै क्रमात् ॥
तेन पुण्यप्रभावेण यदूनां वंशसम्भवः¶ ।
तेनैव भुज्यते सम्पत्तथा‖ राज्यमकण्टकम् ॥ ३९।४० ।
ब्रह्मन्कृत्वाऽनुरागार्थमेवं श्रेयः समाप्तवान् ।
भक्त्या कृतवतां पुंसां किम्भवेदिति वेद्र न** ॥ ४१ ।
तस्मात्सम्मार्ज्जने नित्यन्दीयमाने तु†† सत्तम ।
यतिष्ये परया भक्त्या ह्यहं जातिस्मरो यतः ॥ ४२ ।
यः पूजयेज्जगन्नाथमेकाकी विगतस्पृहः ।
सर्व्वपापविनिर्म्मुक्तः प्रयाति परमम्पदम् ॥ ४३ ।
अवशेनापि यत्कर्म्म कृत्वेमां श्रियमागतः ।

---

* जारोऽयमिति तत्रैव हतवन्त इति (क), (ग), (ङ) । चौरोऽयमिति तत्रैव हतवन्त-इति (ख)। † तावत्कालञ्च संस्थित इति (क), (ङ) । कालेन संस्थित इति (ख)। ‡ एतदर्द्धं (क), (ख) (ग) पुस्तकेषु नास्ति। § दैवयोगेष्विति (क), (ख), (ङ) ; दैव-योगेनेति (ग)। ¶ यदुवंशसमुद्भव इति (क)। ‖ अच्युता सम्पदिति (ख), (ङ) ; न च्युता सम्पदिति (ग)। ** वेद्मि नेति (ख), (ग), (ङ)। †† दीपदानेनेति बहुषु पाठः।

भक्तिमद्भिः प्रशान्तैश्च किम्फलं* सम्यगर्च्चनात्† ॥ ४४ ।
इति भूपवचः श्रुत्वा वीतहोत्रोद्विजोत्तमः ।
अत्यन्ततुष्टिमापन्नो हरिपूजापरोऽभवत् ॥ ४५ ।
तस्माच्छृणुत विप्रेन्द्रा देवोनारायणोऽव्ययः ।
ज्ञानतोऽज्ञानतो वापि पूजकानां विमुक्तिदः ॥ ४६ ।
अनित्यानि शरीराणि विभवोनैव शाश्वतः ।
नित्यं सन्निहितोमृत्युः कर्त्तव्योधर्म्मसङ्ग्रहः ॥ ४७ ।
अनित्या बान्धवाः सर्व्वे सम्पदत्यन्तचञ्चला ।
शरीराणां ध्रुवोमृत्युस्तस्माद्यजत केशवम् ॥ ४८ ।
हे जना किं वृथा गर्व्वं करिष्यथ मदोद्धताः‡ ।
कायः सन्निहितापायोधनादीनां किमुच्यते ॥ ४९ ।
जन्मकोटिसहस्रेषु पुण्यं यैः समुपार्ज्जितम् ।
तेषां भक्तिर्भवेच्छुद्धा देवदेवे जनार्द्दने ॥ ५० ।
सुलभं जाह्नवीस्नानं तथाचातिथिपूजनम् ।
सुलभाः सर्व्वयज्ञाश्च विष्णुभक्तिः सुदुर्लभा ॥ ५१ ।
दुर्लभा तुलसीसेवा दुर्लभा सङ्गतिः सताम् ।
दुर्लभा हरिभक्तिश्च संसारार्णवपातिनाम् ॥ ५२ ।
सर्व्वभूतदया वापि दुर्लभा यस्य कस्यचित् ।
सत्सङ्गतुलसीसेवा§ हरिभक्तिश्च दुर्लभा ॥ ५३ ।

---

* किं पुनरिति बहुषु पाठः। † अस्माच्छ्लोकादनन्तरं (ख) पुस्तके सूत उवाचेति पाठो वर्त्तते। ‡ नित्यमित्यारभ्य मदोद्धता इत्यन्त' पाठः (क) (घ) पुस्तकयोर्नास्ति § दुर्लभा इत्यारभ्य तुलसीसेवा इत्यन्तः पाठः (घ) पुस्तके नास्ति।

दुर्लभञ्चापि* मानुष्यं मा वृथा नाशयिष्यथ† ।
अर्च्चयध्वं महात्मानं भूयोभूयोवदामि वः ॥ ५४ ।
तर्त्तुं यदीच्छथ जना दुस्तरं भवसागरम् ।
हरिभक्तिविधानञ्च आश्रयध्वं‡ सुदुर्लभम् ॥ ५५ ।
यजध्वमाशु गोविन्दं विलम्बं किङ्करिष्यथ ।
आसन्नमेव नगरं कृतान्तस्य ह§ दृश्यते ॥ ५६ ।
नारायणं जगद्योनिं सर्व्वकारणकारणम् ।
समर्च्चयध्वं विप्रेन्द्रा यदि मुक्तिमभीप्सथ ॥ ५७ ।
सर्व्वाधारं सर्व्वयोनिं सर्व्वान्तर्यामिनम्प्रभुम्¶ ।
ये प्रपन्ना महात्मानं‖ ते कृतार्था न संशयः ॥ ५८ ।
ते बान्धवास्ते पूज्याश्च** नमस्कार्य्या विशेषतः ।
येऽर्च्चयन्ति महाविष्णुं प्रणतार्त्तिप्रणाशनम ॥ ५९ ।
यो विष्णुभक्तान्निष्कामान् भोजयेच्छ्रद्धयान्वितः†† ।
त्रिःसप्तकुलसंयुक्तः स याति हरिमन्दिरम् ॥ ६० ।
विष्णुभक्ताय यो दद्यान्निष्कामाय महात्मने‡‡ ।
पानीयं वा फलं वापि स एव भगवान् हरिः ॥ ६१ ।
विष्णुपूजापराणाञ्च शुश्रूषां कुर्व्वते तु ये§§ ।

---

* दुर्लभं प्राप्येति (ग) । † नाशमेष्यथ इति (ङ) । ‡ हरिभक्तिविधानानामाश्रयध्व-मिति (क), (ग) ; हरिभक्तिविधाने तमिति (घ) । § कृतान्तस्येहेति (घ) । ¶ विभु-मिति (ग), (ङ) । ‖ महात्मान इति (ग), (ङ) । ** ते वन्द्यास्ते प्रपूज्याश्चेति (ग), (ङ) । †† यो विष्णुभक्तोनिष्काम. पूजयेच्छ्रद्धयान्वित इति (ङ) । ‡‡ कुटुम्बिने इति (ग) । §§ ये तु कुर्व्वते इति (ग) ; कुर्व्वते हि ये इति (ङ) ।

ते यान्ति विष्णुभवनन्त्रिसप्तपुरुषान्विताः ॥ ६२ ।
ये यजन्ति स्पृहाशून्या हरिं वा हरमेव वा ।
त एव भुवनं सर्व्वं पुनन्ति* विबुधर्षभाः ॥ ६३ ।
देवपूजापरो यश्च† गृहे वसति सर्व्वदा ।
तत्रैव सर्व्वदेवाश्च हरिश्चैव श्रियान्वितः ॥ ६४ ।
पुण्यमाला च‡ तुलसी यस्य वेश्मनि§ तिष्ठति ।
तस्य श्रेयांसि सर्व्वाणि सिध्यन्त्यत्र¶ हेरहद्विजाः ॥ ६५ ।
शालग्रामशिलारूपी यत्र तिष्ठति केशवः ।
न बाधन्ते ग्रहास्तत्र‖ भूतवेतालकादयः ॥ ६६ ।
शालग्रामशिला यत्र तत्तीर्थं तत्तपोवनम् ।
यतः** सन्निहितस्तत्र भगवान्मधुसूदनः ॥ ६७ ।
यद्गृहे नास्ति तुलसी शालग्रामशिलार्च्चना ।
श्मशानसदृशं विद्यात्तद्गृहं शुभवर्ज्जितम् ॥ ६८ ।
पुराणन्यायमीमांसाधर्म्मशास्त्राणि च द्विजाः ।
साङ्गवेदाश्च सर्व्वस्य†† विष्णोरूपं प्रकीर्त्तितम् ॥ ६९ ।
भक्त्या कुर्व्वन्ति ये विष्णोः प्रदक्षिणचतुष्टयम् ।
ते प्रयान्ति‡‡ परं स्थानं सर्व्वलोकोत्तमोत्तमम् ॥ ७० ।
अत्रैव नारदेनोक्तमितिहासं पुरातनम् ।

---

* तत्र भुवनं सर्व्वं फलन्तीति (ङ)। † परो यस्येति (ग), यस्तु इति (ङ)। ‡ पूज्यमानेति (क), (घ)। § शिरसीति (क), (ख), (ङ)। ¶ श्रेयांसि तस्य सर्व्वाणि बध्नयन्तीति (ग)। ‖ भयन्तत्रेति (ख), (ग), (ङ)। ** मत इति (क)। †† साङ्ग-वेदस्य सर्व्वस्येति (क), (घ), (ङ)। ‡‡ तेऽपि यान्तीति बहुषु पाठः।

वदतां शृखताञ्चैव सर्व्वपापहरं द्विजाः ॥ ७१ ।
वैवस्वतेऽन्तरे पूर्व्वं शक्रस्य च बृहस्पतेः ।
संवादस्तु महानासीत्तं वक्ष्ये* शृणुत द्विजाः ॥ ७२ ।
एकदा सर्व्वभोगाढ्यो विबुधैः परिवारितः ।
अप्सरोगणसंकीर्णो बृहस्पतिमभाषत† ॥ ७३ ।

इन्द्र उवाच ।

बृहस्पते महाभाग सर्व्वतत्त्वार्थकोविद ।
अतीतब्रह्मणः कल्पे स्वर्गः कीदृग्विधः स्मृतः‡ ॥ ७४ ।
इन्द्रस्तु कीदृशः प्रोक्तोविबुधाः कीदृशाः स्मृताः ।
तेषाञ्च कीदृशं कर्म्म यथावद्वक्तुमर्हसि§ ॥ ७५ ।

बृहस्पतिरुवाच ।

अहमद्यतनः शक्र नाहं जानामि¶ किञ्चन ।
पूर्व्वेद्युः कृतकर्म्माणि‖ अपि वक्तुं न शक्यते ॥ ७६ ।
वर्त्तमानदिने वाऽपि विधातुः परमेष्ठिनः ।
मनवः समतीताश्च तद्वक्तुमपि न क्षमः ॥ ७७ ।
सुधर्म्म इति विख्यातः कश्चिदास्ते पुरन्दर** ।
स एवैतद्विजानाति तं पृच्छामो यथातथम्†† ॥ ७८ ।

---

* तं सच्चमिति (ख) । † (ग) पुस्तके एष श्लोकः परश्लोकश्च न स्तः । ‡ स्थित-इति (ग) । § (ख) पुस्तके स इन्द्रस्तु कीदृशः कर्म्म यथावद्वक्तुमर्हसीत्येतावन्मात्रः पाठः । ¶ अहमाद्यस्ततः शक्र नहि जानामि कञ्चनेति (क) ; अहमाद्यस्तु इति (ख) ; अहमाद्यं ततः शक्र नहि जानामीति (ङ) । ‖ पूर्व्वे कृतानि कर्म्माणीति (ग) । ** पुरे तवेवि (ख) । †† यथायथमिति (घ) ।

इति निश्चित्य शक्रोऽपि बृहस्पतिपुरोगमः।
देवतागणसंकीर्णः* सुधर्म्मं प्राप्तवांस्तदा ॥ ७९ ।
समागतं देवपतिं बृहस्पतिसमन्वितम्।
यथार्हमर्च्चयामास साधनैर्बहुविस्तरैः ॥ ८० ।
सुधर्म्मेणार्च्चितः शक्रो दृष्ट्वा तत्क्रियमुत्तमाम्।
मनसा विस्मयाविष्टः प्रोवाच विनयान्वितः ॥ ८१ ।

इन्द्र उवाच।

सुधर्म्म सर्व्वधर्म्मज्ञ सर्व्वसम्पत्समन्वितः†।
यशसा तेजसा कीर्त्त्या मत्तो ह्यधिकतां‡ गतः ॥ ८२ ।
दानेन वा तपोभिर्वा यज्ञैर्वा तीर्थसेवनैः।
शंस§ केन प्रभावेण ईदृशं प्राप्तवान् श्रियम् ॥ ८३ ।
अतीतब्रह्मकल्पस्य वृत्तान्तं वेत्सि त्वं किल।
गतानिन्द्रांश्च देवांश्च केन जानामि¶ तद्वद ॥ ८४ ।
इत्युक्तो देवराजेन सुधर्म्मः प्रहसंस्तदा‖।
प्रोवाच विनयाविष्टः** पूर्व्ववृत्तं यथाविधि ॥ ८५ ।

सुधर्म्म उवाच।††

चतुर्युगसहस्राणि ब्रह्मणोदिनमुच्यते।
तस्मिन्नेव दिने शक्र मनवस्तु‡‡ चतुर्द्दश ॥ ८६ ।

---

* देवतागणसङ्कीर्णमिति (ङ)। † समर्च्चित इति (ङ)। ‡ त्वधिकतामिति (ख)। § सम्यामिति (ङ)। ¶ जानासीति (ख), (ग); अस्माच्छ्लोकात्परं (ख) पुस्तके सूत उवाच इत्यधिकः पाठो वर्त्तते। ‖ सहर्षं तदेति (ङ)। ** विस्मयाविष्ट इति (ग)। †† एषः पाठः (ख), (ग), (ड) पुस्तकेषु नास्ति। ‡‡ मनवश्चेति (ड)।

इन्द्राश्चतुर्द्दश प्रोक्ताः देवास्तु* विविधाः† पृथक् ।
इन्द्राणां चैव सर्व्वेषां सम्प्रदायास्तु‡ पूर्व्ववत् ॥ ८७ ।
तेषां नामानि वक्ष्यामि मन्वादीनां शृणुष्व मे ।
तत्तन्मन्वन्तरे§ शक्र तत्तन्मनुसुताः¶ नृपाः ॥ ८८ ।
स्वायम्भुवोमनुः पूर्व्व‖स्ततः स्वारोचिषस्तथा** ।
उत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा†† ॥ ८९ ।
वैवस्वतोमनुश्चैव सूर्य्यसावर्णि‡‡रष्टमः§§ ।
नवमो दक्षसावर्णिः सर्व्ववर्णहिते रतः¶¶ ॥ ९० ।
दशमो ब्रह्मसावर्णिर्धर्म्मसावर्णिकस्ततः ।
ततस्तु रुद्रसावर्णीरोचमानस्ततः स्मृतः ।
भौत्य‖‖श्चतुर्द्दश प्रोक्ता एते च मनवः स्मृताः ॥ ९१ ।
देवानिन्द्रांश्च वक्ष्यामि शृणुष्व विबुधर्षभ ॥ ९२ ।
यामा इति*** समाख्याता देवाः स्वायम्भुवेऽन्तरे ।
शचीपतिः समाख्यातस्तेषामिन्द्रोमहामतिः††† ॥ ९३ ।
पारावताः सन्तुषिता देवाः स्वारोचिषेऽन्तरे ।

---

* देवाश्चेति (ङ) । † विबुधा इति (ग) । ‡ सम्प्रदायाश्चेति (ख), (ग), (ङ) । § तत्तत्सम्भवसे इति (क) । ¶ शतमन्युस्तत इति (क), (ङ) ; तत्तन्मन्वन्तरा इति (ख) । ‖ पूर्व्वमिति (ग), (ङ) । ** स्वारोचिषान्तर इति (क), (ङ) । †† चान्यसस्तथेति (घ) । ‡‡ सूर्य्यः सावर्णिरिति (क) । §§ सूर्य्यसावर्णिंवष्टय इति (घ) । ¶¶ सर्व्वधर्म्महिते रत इति (ख) , सर्व्ववर्णस्थितौ रत इति (घ) । ‖‖ भौत्य इति (क) ; तोष इति (ख) , भौद्य- इति (ङ) । *** यमा इतीति (ङ) । ††† महीपतिरिति (ग) ।

विपश्चिन्नाम तत्रेन्द्रः सर्व्वसम्पत्समन्वितः* ॥ ९४ ।
सुधामानस्तथा† सत्याः शिवाश्चाऽथ प्रतर्द्दनाः‡ ।
तेषामिन्द्रः सुशान्तिश्च§ तृतीये परिकीर्त्तितः ॥ ९५ ।
स्वपवाह्वयश्चैव¶ सुमाश्च सुधियस्तथा‖ ।
तेषामिन्द्रः शिवः प्रोक्तश्चतुर्थे परिकीर्त्तितः ॥ ९६ ।
ऋभुनामा** देवपतिः पञ्चमः परिकीर्त्तितः ।
अमिताभादयो देवाः षष्ठमिन्द्रञ्च†† मे शृणु ॥ ९७ ।
आर्य्याद्या‡‡विबुधाः प्रोक्तास्तेषामिन्द्रो मनोजवः ।
आदित्यवसुरुद्राद्य§§देवा वैवस्वतेऽन्तरे ॥ ९८ ।
इन्द्रः पुरन्दरः प्रोक्तः सर्व्वकामसमन्वितः ।
अष्टमे चापि विबुधाः सुतपाद्याः¶¶ प्रकीर्त्तिताः ॥ ९९ ।
विष्णुपूजाप्रभावेण तेषामिन्द्रो बलिः स्मृतः ।
पारावताद्या नवमे इन्द्रश्चाद्भुत उच्यते‖‖ ॥ १०० ।

---

* विप्रेन्द्राः सर्व्वसम्पत्समन्विता इति (ख),(घ) ; देवेन्द्रः सर्व्वसम्पत्समन्वित इति (ग) ; विप्रेन्द्रः सर्व्वसम्पत्समन्वित इति (ङ) । † स्वधामानस्तथा सद्य इति (ख), स्वध्यमानास्तथाऽमर्त्या इति (घ) । ‡ शिवाश्चात्र प्रकीर्त्तिता इति (ख) । § तेषामिन्द्रश्च शान्तिश्चेति (क), (ग), (ङ) । ¶ स्वपावाह्वयश्चैवेति (ख) ; अपावाह्वयश्चैवेति (घ) । ‖ चारुधियस्तथेति (ख) ; स्वपावावह्वयश्चैते सत्याश्च सुधियस्तथेति (ग) । ** ऋतुर्नामेति (क) ; धातुर्नामेति (ख) ; ऋतुनामेति (घ) । †† षष्ठमानपि मे शृण्विति (क), (ख), (ग), (ङ), अत्र षष्ठमानिति आर्षं षष्ठानिति साधु । ‡‡ मर्य्याद्या इति (ख), अर्य्याद्या इति (ग),(ङ)। §§ आदित्यवसुरिन्द्राद्या इति (क), (ख), (ङ) ; आदित्यवसुमित्राद्या इति (ग) । ¶¶ स्वतपाद्या इति (ख) । ‖‖ पारावताद्यास्ते देवा इन्द्रश्चाद्भुतो दृश्यते इति (ख), पराद्या नवमे देवा इन्द्रश्चाद्भुत उच्यते इति (ग), (ङ), एष श्लोकः (घ) पुस्तके नास्ति ।

सवामनाद्या दशमे विबुधाः* परिकीर्त्तिताः ।
शान्तिर्नाम† च तत्रेन्द्रः सर्व्वभोगसमन्वितः ।
विहङ्गमाद्या देवाश्च तेषामिन्द्रोवृषः स्मृतः ॥ १०१ ।
एकादशतमाः प्रोक्ताः शृणु द्वादशमास्तथा‡ ।
ऋतुनामा च तत्रेन्द्रो§ हविताद्यास्तथा सुराः ॥ १०२ ।
सुत्रामाणादयो देवास्त्रयोदशतमाः स्मृताः ।
दिवस्पति¶र्महावीर्य्यस्तेषामिन्द्रः प्रकीर्त्तितः ॥ १०३ ।
चतुर्द्दशे चाक्षुषाद्या देवा इन्द्रः शुचिः स्मृतः ॥ १०४ ।
एवन्ते मनवः प्रोक्ता देवा इन्द्राश्च‖ तत्त्वतः ।
एकस्मिन्** ब्रह्मदिवसे स्वाधिकारान् प्रभुञ्जते ॥ १०५ ।
लोकेशसर्व्वसर्गेषु†† सृष्टिरेवंविधा स्मृता ।
कर्त्तारो बहवः सन्ति तत्संख्यां वेत्ति कोद्विवित्‡‡ ॥ १०६ ।
मयि स्थिते विष्णुलोके ब्रह्माणो बहवोगताः ।
तेषां संख्यां न संख्यातुं शक्तोऽस्मद्दितिजोत्तम ॥ १०७ ।

* स वामनाद्याविबुधा दशमा इति (क), (ख), (ग) । एतदर्द्धमपि (घ) पुस्तके नास्ति । † शान्तिनामेति (ग) । ‡ द्वादश सप्तमा इति (क) ; एकादशतमः प्रोक्तः शृणु द्वादशमस्तथेति (घ) ; द्वादशम इति आर्षं, द्वादशं द्वादशान् वा साधु । § ऋतुर्नामा च विप्रेन्द्रा इति (क) ; धातुर्नामा च विप्रेन्द्र इति (ख) ; ऋतुनामा च देवेन्द्र इति (ग) ; रिभुर्नाम च देवेन्द्र इति (ङ) । ¶ दिवापतिरिति (घ) । ‖ इन्द्रा देवाश्च तत्त्वत इति क्वचित्पाठ. । ** एतस्मिन्निति (ग) । †† सर्व्वसङ्घेषु इति (ख) , सर्व्वसङ्घेषु इति (ङ) । ‡‡ कोविद इति बहुषु पाठ. ।

स्वर्गलोकं मयि प्राप्ते यावत्कालं शृणुष्व मे* ।
चत्वारो मनवोऽतीता मम शीघ्रातिविस्तरा ॥ १०८ ।
स्थातव्यञ्च मयाऽत्रैव युगकोटिसमं† प्रभो ।
ततः परं गमिष्यामि‡ कर्म्मभूमिं शृणुष्व मे ॥ १०९ ।
मया कृतञ्च सुकृतं वदामि तव पण्डित ।
वदतां शृण्वताञ्चैव सर्व्वपापप्रणाशनम् ॥ ११० ।
अहमासं पुरा शक्र गृध्रः पापाऽवशेषतः§ ।
स्थितश्च भूमिभागे वै अमेध्यामिषभोजनः ॥ १११ ।
एकदाऽहं विष्णुगृहप्राकारे संस्थितः प्रभो ।
पतितो व्याधशस्त्रेण गच्छन् विष्णोर्गृहाग्रतः¶ ॥ ११२ ।
मयि कण्ठगतप्राणे भषको|| मांसलोलुपः ।
जग्राह मां स्ववक्त्रेण श्वभिरन्यैरभिद्रुतः** ॥ ११३ ।
नयन्मां†† स्वमुखेनैव भीतोऽन्यैर्भषकैस्तथा‡‡ ।
गतः प्रदक्षिणाकारं विष्णोस्तन्मन्दिरं प्रभो ॥ ११४ ।
तेनैव तुष्टिमापन्न अन्तरात्मा जगन्मयः ।
मम चापि शुनश्चापि दत्तवान् परमं पदम् ॥ ११५ ।

---

* श्लोकोऽयं (क), (ख), (ग), (ङ) पुस्तकेष्वेवं पठितः—तेषां संख्या न संख्यातुं शक्तोऽस्मि हि द्विजोत्तमाः । स्वर्गलोकमपि प्राप्य यावत्कालं शृणुष्व मे ॥ † मयाऽत्रैव युगकोटिशतमिति (ग) । ‡ परिगमिष्यामीति (ख) । § अवशेषित इति (क), (ग) । ¶ सायं विष्णोर्गृहागत इति (ग) । || लुब्धक इति (क), (ख), (ङ) । ** शुनोवेगाद्-तन्द्रित इति (क), (ख), (ङ) । †† वहन्मामिति (ग) । ‡‡ भीतोऽपि भषकस्त्वेति (ङ) ।

प्रदक्षिणाकारतया गतस्यापीदृशं फलम् ।
संप्राप्तं विबुधश्रेष्ठ किं पुनः सम्यगर्च्चनात्* ॥ ११६ ।
इत्युक्तो देवराजस्तु सुधर्म्मेण† महात्मना ।
मनसा प्रीतिमापन्नो हरिपूजारतोऽभवत्‡ ॥ ११७ ।
अद्यापि निर्ज्जराः सर्व्वे भारते जन्मलिप्सवः ।
समर्च्चयन्ति विबुधा नारायणमनामयम् ॥ ११८ ।
ये यजन्ति§ सदा भक्त्या नारायणमनामयम् ।
तानर्च्चयन्ति¶ सततं ब्रह्माद्या देवतागणाः ॥ ११९ ।

नारायणानुस्मरणाद्यतीनां‖
महात्मनां त्यक्तपरिग्रहाणाम् ।
कथं भवत्युग्रभवस्य** बन्ध-
स्तत्सङ्गलुब्धा अपि मुक्तिभाजः†† ॥ १२० ।
ये मानवाः प्रदिदिनं परिमुक्तसङ्गा
नारायणं गरुड़वाहनमर्च्चयन्ति ।
ते सर्व्वपापनिचयैः‡‡ परिमोचिताश्च

---

* अतः (ख) पुस्तके सूत उवाच इति पाठो वर्त्तते । † स्वधर्म्मेणेति (ख) । ‡ हरिपूजा परोऽभवदिति (ख), (ग), (ङ) । § अर्च्चन्ति चेति (ग) । ¶ तमर्च्चयन्तीति (क), (ख), (ग), (ङ), बहुवचनान्तयच्छब्देनोपात्तस्य निराकाङ्क्षत्वप्रतिपत्तये बहुवचनान्तस्य तच्छब्दस्य प्रयोग एव युक्तस्ततस्तमित्येकवचनमार्षम् । (ख) पुस्तके श्लोकस्यास्य पूर्व्वार्द्धं नास्ति । ‖ स्मरणे रतानामिति (ख) ; स्मरणोद्यतानामिति (ग), (ङ) । ** तेषां गतिः काममभावनीयेति (ख) । †† भक्तिभाज इति (ङ) । ‡‡ सर्व्वपापनियमैरिति (क), (ख) ।

विष्णोः पदं शुभतरं* प्रतियान्ति हृष्टाः॥ १२१।
ये मानवा विगतरागपरापरज्ञा
नारायणं सुरगुरुं सततं स्मरन्ति।
ध्यानेन तेन हतकिल्बिषवेदनास्ते†
मातुः पयोधररसं न पुनः पिबन्ति॥ १२२।
ये मानवा हरिकथाश्रवणास्तदोषा-
स्तत्पाद‡पद्मविनिवेशितमानसाश्च।
ते वै पुनन्ति जगतां स्मरणाच्च सङ्गात्
सम्भाषणादपि ततो§ हरिरेव पूज्यः॥ १२३।
हरिपूजापरा यत्र महान्तः शुद्धबुद्धयः।
तत्रैव सकलं भद्रं यथा निम्ने जलं द्विजाः॥ १२४।
हरिरेव परोबन्धुर्हरिरेव परा गतिः।
हरिरेव परः पूज्यो यतश्चैतन्यकारणम्॥ १२५।
स्वर्गापवर्गफलदं सदानन्दं निरामयम्।
पूजयध्वं द्विजश्रेष्ठाः परं श्रेयोभविष्यति॥ १२६।
पूजयन्ति हरिं ये तु निष्कामाः शुद्धमानसाः।
तेषां विष्णुः प्रसन्नात्मा सर्व्वान् कामान् प्रयच्छति॥ १२७।
यश्चैतच्छृणुयाद्वापि¶ पठेद्वा सुसमाहितः‖।
संप्राप्नोत्य**श्वमेधस्य फलं विबुधसत्तमाः॥ १२८।

---

* प्रियतरमिति (ग)। † ध्यानेन कल्मषहतकिल्बिषचेतनास्ते इति (क), (ग), (ङ)। ‡ यत्पादेति (ग)। § ज्ञातं समस्तचरितमिति (ख)। ¶ यत्नेन शृणुयाद्वापीति (क), (ख), (ङ)। ‖ पठेद्वापि समाहित इति (ख)। ** स प्राप्नोतीति (ख)।

इत्येतद्वः समाख्यातं हरिपूजाफलं द्विजाः ।
सङ्कोचविस्तराभ्याञ्च* किमन्यत्कथयामि वः ॥ १२८ ।

इति श्रीबृहन्नारदीयपुराणे हरिभक्तिमाहात्म्यवर्णने
सप्तत्रिंशोऽध्यायः ।

---

## अथ अष्टात्रिंशोऽध्यायः ।

ऋषय ऊचुः ।
आख्यातं भवता सर्व्वं* सूत तत्त्वार्थकोविद ।
इदानीं श्रोतुमिच्छामो युगानां स्थितिलक्षणम् ॥ १ ।
सूत उवाच ।
साधु साधु महाप्राज्ञा यूयं लोकोपकारिणः ।
युगधर्म्मान् प्रवक्ष्यामि युगधर्म्मोपकारकान्† ॥ २ ।
धर्म्मा विवृद्धिमायान्ति‡ काले§ कस्मिंश्चिदुत्तमाः ।
तथा विनाशमायान्ति धर्म्मा एव¶ महीतले ॥ ३ ।
कृतन्त्रेता द्वापरश्च|| कलिश्चेति चतुर्युगम् ।

---

* विस्तराभ्यान्त्विति (ग) ।

---

* पूर्व्वमिति (ख) । † सर्व्वलोकोपकारकानिति (ख) । ‡ धर्म्मोऽपि वृद्धिमायातीति (क) ; धर्म्मा विवृत्तिमायान्तीति) ख) ; धर्म्माः प्रवृद्धिमायान्तीति (ग) । § लोके इति (ङ) । ¶ विनाशमायाति धर्म्म एवेति (क) । || द्वापरश्चेति (ग), (ङ) ।

दिव्यैर्द्वादशभिर्ज्ञेयं सहस्रैस्तच्च सत्तमाः ॥ ४ ।
सन्ध्यासंन्ध्यांशयुक्तानि युगानि सदृशानि वै ।
कालतोवेदितव्यानि इत्याहुस्तत्त्वदर्शिनः ॥ ५ ।
आद्यङ्कृतयुगम्प्राहुस्ततस्त्रेताभिधायिनम् ।
ततश्च द्वापरम्प्राहुः कलिमन्त्यं विदुर्बुधाः* ॥ ६ ।
देवदानवगन्धर्व्वै†यक्षराक्षसपन्नगाः ।
इमे कृतयुगे विप्राः सर्व्वे देवसमाः‡ स्मृताः ॥ ७ ।
सर्व्वे हृष्टांश्च§ धर्म्मिष्ठा न तत्र क्रयविक्रयौ ।
वेदानाञ्च विभागश्च न युगे कृतसंज्ञके ॥ ८ ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राः स्वाचारतत्पराः¶ ।
सदा नारायणपरास्तपोध्यानपरायणाः ॥ ९ ।
कामादिदोषनिर्म्मुक्ताः शमादिगुणतत्पराः ।
आश्रमाचारनिरता गतासूया अदाम्भिकाः ॥ १० ।
सत्यवाक्यरताः सर्व्वे चातुराश्रमधर्म्मिणः ।
वेदाध्ययनसम्पन्नाः सर्व्वशास्त्रविचक्षणाः‖ ॥ ११ ।
चातुराश्रमयुक्तेन कर्म्मणा कालयोनिना** ।
अकामफलसंयोगा††यान्ति निरयां गतिम्‡‡ ॥ १२ ।

---

* विदुः क्रमादिति (ग)। † गन्धर्व्वा इति (घ)। ‡ देवमया इति (घ)। § अक्रूराश्चेति (घ)। ¶ आचारतत्परा इति (ख), (ङ)। (ख) पुस्तकेऽतः परं चरण-चतुष्टयं नास्ति। तच्च चातुराश्रमधर्म्मिण इत्यतः परं दृश्यते। ‖ विशारदा इति (क)। ** कालयोगिनेति (ख), (ङ), कालयोगिन इति (ग)। †† सकामफलसंयोगा इति (क), (ग), (ङ); अकामफलसंयोगा इति (ख)। ‡‡ परमां गतिमिति (ख), (ग), (ङ)।

नारायणः कृतयुगे शुक्लवर्णः सुनिर्म्मलः* ।
त्रेताधर्म्मान् प्रवक्ष्यामि शृणुध्वं सुसमाहिताः ॥ १३ ।
धर्म्मः पादोनतां याति त्रेतायां विबुधर्षभाः ।
हरिस्तु रक्ततां याति किञ्चित् क्लेशान्विता नराः ॥ १४ ।
क्रियायोगरताः सर्व्वे यज्ञकर्म्मसु निष्ठिताः । †
सत्यव्रता ध्यानपरा दानादानपरायणाः‡ ।
द्विपादोनगते धर्म्मे§ द्वापरे च मुनीश्वराः ॥ १५ ।
पीतत्वञ्च हरिर्याति¶ वेदश्चापि विभज्यते ।
असत्यनिरतश्चापि यः कश्चिदपि वर्त्तते‖ ॥ १६ ।
ब्राह्मणाद्याश्च वर्णाश्च किञ्चिद्रागादिदुर्गुणाः** ।
केचित्स्वर्गोपभोगार्थं†† विप्रा यज्ञान् प्रकुर्व्वते ॥ १७ ।
केचिद्धनादिकामाश्च‡‡ केचित्कल्मषचेतसः ।
धर्म्माधर्म्मौ प्रवर्त्तेतां§§ द्वापरे विप्रसत्तमाः ॥ १८ ।
अधर्म्मस्य प्रभावेण क्षीयन्तेऽत्र प्रजास्तथा ।
अल्पायुषोभविष्यन्ति केचिच्चापि मुनीश्वराः ॥ १९ ।

---

* सुनिश्चल इति (ख) । † त्रयोदशश्लोकः, चतुर्द्दशस्य पूर्व्वार्द्धञ्च (घ) पुस्तके नास्ति । ‡ दानाशनपरायणा इति (ख) ; सदादानपरायणा इति (घ) । § द्वौ पादौ न गते धर्म्मे इति (ङ) । ¶ हरिः पीतत्वमायातीति (ग) । ‖ अतिवर्त्तते इति (ग) । ** किञ्चिद्रागादिवर्ज्जिता इति (क), (ख) ; कियद्रागादिवर्ज्जिता इति (ग) ; किञ्चित्त्रासादिवर्ज्जिता इति (घ) । †† यज्ञोपभोगार्थमिति (ग) । ‡‡ धनानि कामाश्चेति बहुषु पाठः । §§ धर्म्माधर्म्मपरौ स्यातामिति (क) ; धर्म्माधर्म्मौ समौ स्यातामिति (ख) ; धर्म्माधर्म्मपरौ स्यातामिति (ग) ; धर्म्माधर्म्मौ परौ स्यातामिति (ङ) ।

केचित्पुण्यपरान्दृष्ट्वा असूयां कुर्व्वते सदा।
कलेः स्थितिं* प्रवक्ष्यामि शृणुध्वं सुसमाहिताः॥ २०।
धर्म्मः कलियुगे प्राप्ते त्रिपादीनः प्रवर्त्तते।
तामसं युगमासाद्य हरिः कृष्णत्वमागतः† ॥ २१।
यः कश्चिदपि धर्म्मात्मा यज्ञं दानं‡ करोति च§।
यः कश्चिदपि धर्म्मात्मा क्रियायोगरतो¶ भवेत्॥ २२।
नरं धर्म्मरतं दृष्ट्वा सर्व्वेऽसूयां प्रकुर्व्वते।
व्रताचाराः प्रणश्यन्ति ध्यानयज्ञादयस्तथा॥ २३।
उपद्रवा भविष्यन्ति चाधर्म्मस्य प्रवर्त्तनात्‖।
असूयानिरताः सर्व्वे दम्भाचारपरायणाः
प्रजाश्चाल्पायुषः सर्व्वा भविष्यन्ति कलौ युगे॥ २४।

ऋषय ऊचुः**।

युगधर्म्माः समाख्यातास्त्वया संक्षेपतो मुने।
कलिं विस्तरतो ब्रूहि त्वं हि वेदविदां†† वरः॥ २५।
ब्राह्मणाः क्षत्त्रिया वैश्याः शूद्राश्च मुनिसत्तम‡‡।
किमाहाराः किमाचारा भविष्यन्ति वदस्व नः§§॥ २६।

---

* कालस्थितिमिति (घ)। † कृष्णत्वमेव चेति (क), (ख), (ग), (घ)। ‡ यज्ञ-दानमिति (घ)। § एतदर्द्धं (ख) पुस्तके नास्ति। ¶ क्रियाचाररत इति (ङ)। ‖ अधर्म्मोऽर्द्धं प्रवर्त्तते इति (ख); स्वधर्म्मस्य प्रवर्त्तनादिति (ग)। ** ऋषिरुवाचेति (ङ)। †† सर्व्वविदां वरेति बहुषु पाठः। ‡‡ मुनिसत्तमा इति बहुषु पाठः। §§ वदस्व मे इति (ङ)।

सूत उवाच ।

शृणुध्वं मुनयः सर्व्वे नारदेन महात्मना ।
सनत्कुमारमुनये कथितं यद्वदामि तत् ॥ २७ ।
सर्व्वे धर्म्मा विनश्यन्ति कृष्णे कृष्णत्वमागते ।
तस्मात्कलिर्महाघोरः सर्व्वपापस्य साधकः ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा धर्म्मपराङ्मुखाः* ॥ २८ ।
घोरे कलियुगे प्राप्ते द्विजा वेदपराङ्मुखाः† ।
व्याधधर्म्मरताः सर्व्वे दम्भाचारपरायणाः‡ ॥ २९ ।
लोलुपाश्च कृतघ्नाश्च तथा वै भण्डकाः नराः§ ।
अतः स्वल्पायुषः सर्व्वे भविष्यन्ति कलौ युगे ॥ ३० ।
अल्पायुष्टान्मनुष्याणां न वेदग्रहणं द्विजाः ।
विद्याग्रहणशून्यत्वादधर्म्मो वर्त्तते¶ पुनः ॥ ३१ ।
व्युत्क्रमेण प्रजाः सर्व्वा म्रियन्ते पापतत्पराः‖ ।
ब्राह्मणाद्यास्तथा वर्णाः सङ्कीर्य्यन्ते परस्परम् ॥ ३२ ।
कामक्रोधपरा मूढ़ा वृथाऽहङ्कारपीड़िताः** ।
बद्धवैरा भविष्यन्ति परस्य धनलिप्सवः†† ॥ ३३ ।

---

* वैतंसिका इति अन्यत्र पाठः । † अतः परं (क), (ख) पुस्तकयोरेषोऽधिकः पाठो वर्त्तते—यथा अनाचाररताः सर्व्वे दम्भाचारपरायणाः । असूयानिरताश्चैव वृथाहङ्कारभूषिताः । सर्व्वं संक्षिप्यते सर्व्वैर्नरैः पण्डितगर्व्वितैः । इति ‡ एतदर्द्धं (ख) पुस्तके नास्ति । § एतदर्द्धञ्च (घ) पुस्तकं विहाय नान्यत्र वर्त्तते । ¶ विद्यत इति (ङ) । ‖ एतदर्द्धं (क) पुस्तके नास्ति । अधर्म्मतत्परा इति (ग) । (ख) पुस्तकञ्चात्र पत्रद्वयेन खण्डितं वर्त्तते । ** तथाऽहङ्कारपीड़िता इति (ग) । †† परस्परवधेप्सव इति (ग) ।

ब्राह्मणाः क्षत्रिया वैश्याः सर्व्वे धर्म्मपराङ्मुखाः।
अल्पायुषश्च भविष्यन्ति* तपःसत्यविवर्ज्जिताः॥ ३४।
सर्व्वे जना दयाहीना दाक्षिण्यपरिवर्ज्जिताः।
उत्तमा नीचतां यान्ति नीचाश्चोत्तमतां तथा॥ ३५।
राजानश्चार्थनिरतास्तथा लोभपरायणाः।
धर्म्मकञ्चुकसंवीता धर्म्मविध्वंसकारिणः॥ ३६।
अस्मिन् कलियुगे घोरे† सर्व्वाधर्म्मसमन्विते‡।
यो यो रथाश्वनागाढ्यः स स राजा भविष्यति॥ ३७।
किङ्कराश्च भविष्यन्ति शूद्राणाञ्च द्विजातयः।
धर्म्मस्त्रियं न गच्छन्ति§ पतयो जारलक्षणाः॥ ३८।
द्विषन्ति पितरं पुत्रा गुरुं शिष्या द्विषन्ति च।
पतिञ्च वनिता द्वेष्टि क्षणे क्षणत्वमागते॥ ३९।
लोभाभिभूतमनसः सर्व्वे दुष्कर्म्मशीलिनः।
परान्नलोलुपा नित्यं भविष्यन्ति द्विजातयः॥ ४०।
परस्त्रीनिरताः सर्व्वे परद्रव्यपरायणाः।
मत्स्यामिषेण जीवन्ति दुहन्ति चाप्यजाविकाः¶॥ ४१।
घोरे कलियुगे प्राप्ते नरं धर्म्मपरायणम्।
असूयानिरताः सर्व्वे उपहासं प्रकुर्व्वते॥ ४२।

---

* शूद्रतुल्या भविष्यन्तीति (क)।　† घोरे कलियुगे प्राप्ते इति (ख), (ग), (ङ)।
‡ सर्व्वधर्म्मविवर्ज्जिते इति (क)।　§ धर्म्मस्त्रियोऽधिगच्छन्तीति (ख), धर्म्मस्त्रीर्नाभिगच्छन्तीति (ङ)।　¶ अजाविकानिति बहुषु पाठः।

सरित्तीरे बद्दालैः*र्वापयिष्यन्ति चौषधीः ।
अल्पमल्पं फलन्तासां भविष्यति कलौ युगे ॥ ४३ ।
वेश्यालावण्यशीलेषु स्पृहां कुर्व्वन्ति योषितः ।
धर्म्मविघ्ना भविष्यन्ति स्त्रियः स्वपुरुषेषु च† ॥ ४४ ।
प्रायशः क्षपणानाञ्च वधूनाञ्च‡ तथा द्विजाः ।
साधूनां विधवानाञ्च वित्तान्यपहरन्ति च ॥ ४५ ।
न व्रतानि चरिष्यन्ति ब्राह्मणा वेदनिन्दकाः ।
न यक्ष्यन्ति न होष्यन्ति हेतुवादैर्विनाशिताः ॥ ४६ ।
द्विजाः कुर्व्वन्ति दम्भार्थं पितृयज्ञादिकाः क्रियाः§ ।
अपात्रेषु च दानानि कुर्व्वन्ति च तथा नराः ॥ ४७ ।
क्षीरोपायनिमित्तेन¶ गोषु प्रीतिञ्च कुर्व्वते ।
न कुर्व्वन्ति तथा विप्राः स्नानशौचादिकाः क्रियाः ॥ ४८ ।
अकालधर्म्मनिरताः कूटयुक्तिविशारदाः ।
देवनिन्दापराश्चैव विप्रनिन्दारतास्तथा ।
न कस्यचिदभिमतो विष्णुभक्तिपरस्तथा‖ ॥ ४९ ।
देवपूजापराग्दृष्ट्वा उपहासं प्रकुर्व्वते ।
बध्नन्ति च द्विजानेव धनार्थं राजकिङ्कराः ।
ताड़यन्ति च विप्रेन्द्राः क्षणे क्षणत्वमागते ॥ ५० ।

---

* सदा धरासु कुद्दालैरिति (क) ; सरित्तीरेषु कुद्दालैरिति (ग) ; सरित्तीरे च कुद्दालैरिति (ङ) । † स्त्रियस्तु पुरुषेषु चेति (क), (ङ) ; स्त्रियः सुपुरुषेषु चेति (ग) । ‡ वध्वूनामिति (ग) । § अतः परं (घ) पुस्तके षट् चरणा न सन्ति । ¶ क्षीरोपाधिनिमित्तेनेति (ङ) । ‖ विष्णुभक्तानरस्तथेति (ग) ।

दानैयज्ञजपादीनां विक्रीणन्ते फलं द्विजाः ।
प्रतिग्रहं प्रकुर्व्वन्ति चाण्डालाद्यैरपि द्विजाः ॥ ५१ ।
कलेः प्रथमपादेऽपि विनिन्दन्ति* हरिन्नराः† ।
युगान्तेऽपि हरेर्नाम नैव कश्चित्स्मरिष्यति ॥ ५२ ।
शूद्रस्त्रीसङ्गनिरता विधवासङ्गलोलुपाः ।
शूद्रान्नभोगनिरता भविष्यन्ति कलौ द्विजाः ॥ ५३ ।
कुहकैश्चरैस्तत्र‡ हेतुवादविशारदैः ।
पाषण्डिनो भविष्यन्ति चातुराश्रम्यनिन्दकाः ॥ ५४ ।
न च द्विजातिशुश्रूषां न स्वधर्म्मप्रवर्त्तनम् ।
करिष्यन्ति तदा शूद्रा प्रव्रज्यालिङ्गिनोऽधमाः ॥ ५५ ।
शूद्रा धर्म्मान् प्रवक्ष्यन्ति§ कूटयुक्तिविशारदाः ॥ ५६ ।
अशौचयुक्तमतयः¶ परपक्वान्नभोजिनः ।
भविष्यन्ति दुरात्मानः शूद्राः‖ प्रव्रजितास्तथा** ॥ ५७ ।
उत्कोचजीविनस्तत्र महापापरतास्तथा ।
भविष्यन्त्यथ पाषण्डाः कापाला भिक्षवस्तथा†† ॥ ५८ ।
धर्म्मविध्वंसशीलानां द्विजानां विप्रसत्तमाः ।
शूद्रा धर्म्मान् प्रवक्ष्यन्ति प्रव्रज्यालिङ्गधारिणः ॥ ५९ । ‡‡

---

* विनिघ्नन्तीति (क) । † हरिं द्विजा इति (ङ) । ‡ कुहकैश्च जनैरिति (क), (ग), (ङ) । § शूद्रा धर्म्मान् करिष्यन्तीति (ख) । ¶ अशौचवक्त्रमतय इति (क), (ङ) ; अशौचरक्तमतय इति (ख), (ग) । ‖ पुत्रा इति (क), (ख), (ङ) । ** विप्रजितास्तथेति (ग) । †† कापालाभिभवास्तथेति (ख) । ‡‡ कूटयुक्तिविशारदा इति (ङ) ; एतदर्द्धं (घ) पुस्तके नास्ति ।

एते चान्ये च बहवः पाषण्डा विप्रसत्तमाः ।
ब्राह्मणाः क्षत्रिया वैश्या भविष्यन्ति कलौ युगे ॥ ६०
गीतवाद्यपरा विप्रा वेददेवपराङ्मुखाः* ।
भविष्यन्ति कलौ प्राप्ते शूद्रमार्गप्रवर्त्तिनः ॥ ६१ ।
अल्पद्रव्या वृथालिङ्गा वृथाऽहङ्कारदूषिताः† ।
हर्त्तारो न च दातारो भविष्यन्ति कलौ युगे ॥ ६२ ।
प्रतिग्रहपरा नित्यं जगदुन्मार्गशीलिनः ।
आत्मस्तुतिपराः सर्व्वे परनिन्दापरास्तथा ॥ ६३ ।
विश्वासहीनाः पिशुना वेददेवद्विजातिषु‡ ।
असंस्कृतोक्तिवक्तारो§ बहुद्वेषरतास्तथा ॥ ६४ ।
परमायुश्च भविता तदा वर्षाणि¶ षोड़श ।
ततः प्राणान् प्रहास्यन्ति कृष्णे कृष्णत्वमागते ॥ ६५ ।
पञ्चमे वाऽथ षष्ठे वा वर्षे कन्या प्रसूयते ।
सप्तवर्षाश्चाष्टवर्षाः|| प्रयास्यन्ति** नरास्तथा ॥ ६६ ।
स्वकर्म्मत्यागिनः सर्व्वे कृतघ्ना भिन्नवृत्तयः ।
याचकाः†† पिशुनाश्चैव भविष्यन्ति कलौ युगे ॥ ६७ ।
परापमाननिरता आत्मस्तुतिपरायणाः ।

---

* वेदवादपराङ्मुखा इति (क), (ग), (ङ) ; वेदशास्त्रपराङ्मुखा इति (ख) । † भूषिता इति (ग) । ‡ वेदभेदद्विजातिषु इति (क) ; देवदेवद्विजातिषु इति (ख) । § असंस्कृतोक्तिनिरता इति (क) । ¶ तथा वर्षाणीति (ग) । || सप्तवर्षाष्टवर्षाश्चेति बहुषु पाठ । ** प्रहास्यन्तीति (क) ; प्रजाः सन्ति नरास्तथेति (ख), (ग) । †† जारका-इति (ख) , याजका इति (घ) ।

परैस्वहरणोपायचिन्तकाः सर्व्वदा जनाः ॥ ६८ ।
अत्याह्लादपरास्तत्र* भुञ्जते परवेश्मनि ।
तथैव निन्दानिरता वृथाभिशस्तिनो जनाः† ॥ ६९ ।
निन्दां कुर्व्वन्ति सततं पितृमातृसुतेषु च‡ ।
वदन्ति वाचा§ धर्म्मांश्च चेतसा पापलोलुपाः ॥ ७० ।
धनविद्यावयोमत्ता.¶ सर्व्वदुःखपरायणाः‖ ।
व्याधितस्करदुर्भिक्षैः पीड़िता अतिमायिनः ॥ ७१ ।
प्रद्विषन्ति तथैवाऽन्य**मविचार्य्य सुदुष्कृतम् ।
छादयन्ति प्रयत्नेन स्वदोष†† पापकर्म्मणः‡‡ ॥ ७२ ।
स्वमायां दुष्कृताः§§ सम्यक् विवृखन्ति नराधमाः ।
धर्म्ममार्गप्रणेतारं तिरस्कुर्व्वन्ति पापिनः¶¶ ॥ ७३ ।
धर्म्मकार्य्यरतश्चैव वृथा विस्रम्भिणो जनाः ।
भविष्यन्ति कलौ प्राप्ते राजानो म्लेच्छजातयः ॥ ७४ ।
शूद्रा भैक्ष्यरताश्चैव‖‖ तेषां शुश्रूषवो*** द्विजाः ।

* अत्याह्लादकरास्तत्रेति (ख)। † वृथाभिचान्तिनीजना इति (ख) ; वृथाभिशान्तिनीजना इति (ङ) ; एष श्लोकः (घ) पुस्तके नास्ति। ‡ मातृपितृस्वस्रष्वपीति (ङ)। § वाञ्चानिति (ङ)। ¶ मदोन्मत्ता इति (ख) ; अनयोन्मत्ता इति (ङ)। ‖ सर्व्वें दुःखपरायणा इति बहुषु पाठ। ** तथैवान्यानिति (क), (ग) ; प्रविशन्ति तथाऽरण्यानिति (ख), (ङ)। †† स्वदोषानिति (क), (ग)। ‡‡ पापकर्म्मिण इति बहुषु पाठः। §§ स्वमाया दुष्टतामिति (ख)। ¶¶ (ख) पुस्तकेऽतः परं सार्द्धं श्लोकद्वयं नास्ति। ‖‖ शूद्राभक्ष्यरता इति (क) ; शूद्रभक्ष्यरता इति (ग) ; शूद्रतस्कररता इति (ङ)। *** शुश्रूषिण इति (क)।

द्विजाश्च क्षत्रिया वैश्याः शूद्राश्चान्याश्च जातयः ।
अत्यन्तकामिनः सर्व्वे सङ्कीर्य्यन्ते परस्परम् ॥ ७५ ।
न शिष्यो न गुरुः कश्चिन्न पुत्रो न पिता तथा ।
न भार्य्या न पतिश्चैव भविता तत्र सङ्करे* ॥ ७६ ।
कलौ युगे† भविष्यन्ति धनाढ्या अपि याचकाः ।
रसविक्रयिणश्चैव‡ भविष्यन्ति द्विजातयः ॥ ७७ ।
धर्म्मकञ्चुकसंवीता मुनिवेशधरा द्विजाः ।
अपण्यविक्रयरता भविष्यन्ति द्विजातयः ॥ ७८ ।
वेदनिन्दापराश्चैव धर्म्मशास्त्रविनिन्दकाः§ ।
शूद्रवृत्त्या च¶ जीवन्ति द्विजा नरकभागिनः‖ ॥ ७९ ।
अनावृष्टिभयप्राप्ता** गगनासक्तदृष्टयः ।
भविष्यन्ति तदा सर्व्वे जनाः†† क्षुद्भयकातराः ॥ ८० ।
कन्दपर्णफलाहारास्तापसा इव मानवाः ।
आत्मानं घातयिष्यन्ति‡‡ अनावृष्ट्यातिदुःखिताः§§ ॥८१।
कामार्त्ता ह्रस्वदेहाश्च बह्वनाशनतत्पराः¶¶ ।
कलौ सर्व्वे भविष्यन्ति अल्पभाग्या बहुप्रजाः‖‖ ॥ ८२ ।

---

* भविता च कलौ युगे इति (क)। † कलियुगे इति (ङ)। ‡ (ख) पुस्तकेऽतः परं चरणषट्कं नास्ति। § धर्म्मशास्त्रविनिन्दिता इति (ग)। ¶ शूद्रवृत्त्यैवेति (ग)। ‖ नरकभोगिन इति (ख), (ग), (ङ)। ** अनावृष्टिभयभासेति (ग)। †† भविष्यन्ति नराः सर्व्वे तदेति (ख)। ‡‡ आत्मानं रक्षयिष्यन्तीति (ग)। §§ अनावृष्ट्यादिदुःखिता- इति (ख); अनावृष्ट्या तु दूषिता इति (ग)। ¶¶ एतदर्द्धं (ख) पुस्तके नास्ति। ‖‖ पुरुषा- हीनवीर्य्यका इति (क); तत्रातः परं श्लोकद्वयं नास्ति।

शूद्रस्त्रीपोषणपरा* वेश्यालावण्यशीलिनः ।
श्रुतिवाक्यमनादृत्य सदा स्वगृहतत्परा:† ॥ ८३ ।
दुःशीला दुष्टशीलेषु करिष्यन्ति सदा स्पृहाः ।
असद्वृत्ता भविष्यन्ति पुरुषेषु कुलाङ्गनाः ॥ ८४ ।
परुषानृतभाषिण्यो‡ देहसंस्कारवर्ज्जिताः ।
वाचालाश्च भविष्यन्ति कलौ प्राप्ते च§ योषितः ॥ ८५ ।
नगरेषु च ग्रामेषु प्राकारेष्वधिका जनाः¶ ।
चौरादिभयभीताश्च काष्ठयन्त्राणि कुर्व्वते‖ ॥ ८६ ।
दुर्भिक्षकरपीड़ाभिरतीवोपद्रुता जनाः ।
गोधूमाढ्यं** यवान्नाढ्यं देशं यास्यन्ति दुःखिताः ॥ ८७ ।
निधाय हृदि कर्म्माणि ईरयन्ति†† वचः शुभम् ।
स्वकार्य्यसिद्धिपर्य्यन्तं बन्धुत्वं कुर्व्वते जनाः ॥ ८८ ।
भिक्षवश्चापि मित्रादि स्नेहसम्बन्धयन्त्रिताः‡‡ ।
अन्नोपाधिनिमित्तेन§§ शिष्यान्¶¶ गृह्णन्ति भिक्षवः॥८९।
उभाभ्यामपि हस्ताभ्यां‖‖ शिरःकण्डूयनं स्त्रियः ।

---

* स्त्रीशूद्रपाषण्डपरा इति (ख) ; स्त्रीशूद्रपोषणपरा इति (ग), (ङ) । † स्वगृह-तत्परा इति (ग) । ‡ पुरुषानृतभाषिण्य इति बहुषु पाठः । § कलौ प्राप्तेऽपीति (क); कलौ प्राप्ते त्विति (ग) । ¶ प्रकारादिषु ये नरा इति (क), (ख) ; प्राकाराढ्यादिका नरा-इति (ग) ; प्राकारादिषु ये नरा इति (ङ) । ‖ काष्ठयन्त्रादि कुर्व्वते इति (ङ) । ** गोधूमान्नेति (ख) । †† प्रेरयन्तीति (घ) । ‡‡ विभवश्चापि मित्राणि अर्ह सम्बन्धयन्त्रित-इति (क), (घ), (ङ) । विधवाश्चापि मित्रादीति (ख) । §§ अर्थोपाधिनिमित्तेनेति (ख) । ¶¶ शिष्यमिति (घ) । ‖‖ उभाभ्यामपि पाणिभ्यामिति (क) · उभाभ्यां पाणिभ्यामिति (ख), (ग), (ङ) ।

कुर्व्वन्त्यो गुरुभर्त्तॄणामाज्ञां भर्त्सन्त्यनादृता:* ॥ ९० ॥
पापजालेन निरता: पाषण्डजनसङ्गिन:† ।
यदा द्विजा भविष्यन्ति तदा वृद्धिं गत: कलि: ॥ ९१ ॥
यदा यदा न यक्ष्यन्ति‡ न होष्यन्ति द्विजातय: ।
तदा तदा कलेर्वृद्धिरनुमेया विचक्षणै: ॥ ९२ ॥
अधर्म्मवृद्धिर्भविता बालमृत्युरपि द्विजा: ।
सर्व्वधर्म्मेषु नष्टेषु याति नि:श्रीकतां जगत्§ ॥ ९३ ॥
एवं कले: स्वरूपञ्च कथितं द्विजसत्तमा:¶ ।
हरिभक्तिपराणाञ्च|| न कलिर्बाधते क्वचित् ॥ ९४ ॥
तप: परङ्कृतयुगे त्रेतायां ध्यानमेव हि** ।
द्वापरे ज्ञानमेवाहुर्दानमेकं कलौ युगे ॥ ९५ ॥
यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेऽपि तत्††।
द्वापरे तच्च मासेन चाहोरात्रेण तत्कलौ ॥ ९६ ॥
ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन्‡‡ ।
यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्त्य केशवम् ॥ ९७ ॥
अहोरात्रं हरेर्नाम कीर्त्तयन्ति च ये नरा: ।

---

* भर्त्सयन्त्यनादृता इति (क), (ङ) ; मानं भर्त्सयन्त्यनादृता इति (ख) ; आज्ञां नेच्छन्ति तादृशा इति (ग) । † पाषण्डालापनिरता: पाषण्डजनसङ्गिन इति (ग) ; पापजालेन निरता: पाषण्डजनसङ्गिन इति (ङ) । ‡ न यजन्तीति (क), (ग), (ङ) ; न जगन्तीति (ख) । § नि:स्वकतामिति (च) । ¶ विप्रसत्तमा इति (क), (ख), (ग), (घ) । || हरिभक्तिरतानाञ्चेति (क) ; हरिभक्तिपरानेष इति (ग) । ** (ख) पुस्तकेऽत: परं चरणचतुष्टयं नास्ति । †† त्रेतायामयनेऽपि तदिति (क) । ‡‡ द्वापरेऽर्चनादिति (ख) ।

कुर्व्वन्ति हरिपूजाञ्च न कलिर्बाधते हि तान्* ॥ ९८ ।
नमोनारायणायेति कीर्त्तयन्ति च ये नराः ।
निष्कामा वा सकामा वा न कलिर्बाधते हि तान् ॥ ९९ ।
हरिनामपरा ये तु घोरे कलियुगे द्विजाः ।
त एव कृतकृत्याश्च न कलिर्बाधते हि तान् ॥ १०० ।
शिवपूजापरा ये तु शिवनामपरायणाः ।
त एव शिवतुल्याश्च घोरे कलियुगे द्विजाः ॥ १०१ ।
समस्तजगदाधारं परमात्मस्वरूपिणम् ।
घोरे कलियुगे प्राप्ते विष्णुं ध्यायन्न† सीदति ॥ १०३ ।
परमार्थमशेषस्य‡ जगतामादिकारणम् ।
शरण्यं शरणं यातो गोविन्दं नाऽवसीदति ॥ १०४ ।
हरत्यघमशेषञ्च हरिः श्रद्धावतां द्विजाः ।
तमादिदेवमजरं नरो ध्यायन्न सीदति ॥ १०५ ।
अहोऽतीव सभाग्यास्ते सकृद्वा केशवार्च्चकाः ।
घोरे कलियुगे प्राप्ते सर्व्वधर्म्मविवर्ज्जिते ॥ १०६ ।
न्यूनातिरिक्तता सिद्धा कलौ वेदोक्तकर्म्मणाम् ।
हरिस्मरणमेवाऽत्र सम्पूर्णफलदायकम् ॥ १०७ ।
हरे केशव गोविन्द वासुदेव जगन्मय ।
इतीरयन्ति ये नित्यं न हि तान् बाधते कलिः§ ॥ १०८ ।

---

* बाधते च तानिति (ङ) । † विष्णुध्यानान्न सीदतीति (ख) । ‡ परमाचयशेषस्येति (ख) । § ते कृतार्था न संशय इति (ङ) ।

शिव शङ्कर रुद्रेश* नीलकण्ठ त्रिलोचन ।
इतीरयन्ति ये नित्यं न हि तान् बाधते कलिः† ॥ १०९ ।
महादेव विरूपाक्ष गङ्गाधर मृड़ाऽव्यय ।
इतीरयन्ति ये नित्यं ते कृतार्था न संशयः‡ ॥ ११० ।
जनार्द्दन जगन्नाथ पीताम्बरधराच्युत§ ।
इतीरयन्ति ये नित्यं ते कृतार्था न संशयः¶ ॥ १११ ।
संसारे भ्रमतां लभ्या पुत्त्रदारधनादयः ।
घोरे कलियुगे प्राप्ते|| हरिभक्तिः सुदुर्लभा ॥ ११२ ।

सनत्कुमार उवाच** ।

सत्यमुक्तं महाभाग त्वया कारुण्यवारिधे†† ।
पुनः शृणोमि विप्रेन्द्र‡‡ तथापि वदतां वर ॥ ११३ ।
त एव मुनिशार्दूल§§ पाषण्डा वेदनिन्दकाः ।
सम्यक् श्रद्धाविहीनाश्च¶¶ इति पूर्व्वं त्वयोदितम्|||| ॥११४।
अधर्म्मनिरतानाञ्च यातनाः परिकीर्त्तिताः*** ।
घोरे कलियुगे प्राप्ते वेदमार्गबहिष्कृते ॥ ११५ ।

---

* हरेति (ख), अत्र च छन्दोदोषः । † (ङ) पुस्तके एष श्लोकः परश्लोकस्य च पूर्व्वार्द्धं न स्तः । ‡ कृतार्था नात्र संशयः इति (ख) । § पीताम्बरधराव्यय इति (क) । ¶ कृतार्था-नाऽत्र संशय इति (ख) ; एष श्लोकः (घ) पुस्तके नास्ति । || पापे इति (ङ) । ** श्रीसन-त्कुमार उवाचेति (ख) । †† मुने कारुण्यवारिधे इति (क), (ख), (ङ) । ‡‡ भूयः शृणुत-विप्रेन्द्रा इति (क), (ग) । §§ त्वमेव मुनिशार्दूल इति (क), (ख) , त्वयैव मुनिशार्दूल इति (ग), (ङ) । ¶¶ कर्म्मब्रह्मविहीनाश्चेति (ग) । |||| पूर्व्वं त्वयोदितमिति (ख) । *** यातनाश्च प्रकीर्त्तिता इति (क), (ख), (ङ) ।

पौषण्डत्वं प्रसिद्धं वै सर्व्वेषां परिकीर्त्तितम्*।
घोरे कलियुगे ब्रह्मञ्जनानां पापकर्म्मणाम्†।
मनःशुद्धिविहीनानां निष्कृतिश्च कथम्भवेत्॥ ११६।
मनःशुद्धिविहीनत्वाच्छुद्धिप्राद्दीनाञ्च सत्तम§।
स्वकर्म्माणि न सिध्यन्ति तेषां का गतिरुत्तमा॥ ११७।

नारद उवाच।

साधु साधु महाप्राज्ञ लोकानुग्रहतत्पर।
उपायं तव वक्ष्यामि शृणुष्व¶ सुसमाहितः॥ ११८।
प्रवक्ष्यामि समासेन सर्व्वशास्त्रसुनिश्चितम्‖।
गुह्याद्गुह्यतरञ्चैव सर्व्वलोकोपकारकम्॥ ११९।
दैवाधीनमिदं सर्व्वं जगत्स्थावरजङ्गमम्।
यथैव प्रेरितं तेन** तथैव घटते जगत्॥ १२०।
शक्तितः सर्व्वकर्म्माणि वेदोक्तानि समाचरेत्।
तान्यर्पयेन्महाविष्णौ†† नारायणपरायणः॥ १२१।
समर्पितानि कर्म्माणि महाविष्णोः परात्मनः।
सम्पूर्णतां प्रयान्त्येव हरिस्मरणमात्रतः॥ १२२।
घोरे कलियुगे प्राप्ते हरिरेव परा गतिः।

---

* सर्व्वेषाञ्च प्रकीर्त्तितमिति (ख)। † पापकर्म्मिणामिति (क), (ख), (ङ)। ‡ मनःशुद्धिविहीनानामिति (घ)। § उत्तम इति (ख)। ¶ शृणुध्वमिति (घ), शृणु त्वं सुसमाहित इति साधु। ‖ सर्व्वशास्त्रेषु निश्चितमिति (ङ), एतदर्द्धं (ग) पुस्तके नास्ति। ** यथैव प्रेरितं येनेति (ख)। †† महाविष्णोरिति (ख), (ग)।

महारिष्टोपशान्ताय* हरिभक्तिः कलौ युगे ॥ १२३ ।
हरिभक्तिरतानाञ्च पापबन्धो न जायते† ।
हरिस्मरणनिष्ठानां‡ शिवनामरतात्मनाम्§ ।
सत्यं समस्तकर्म्माणि¶ यान्ति सम्पूर्णतां द्विजाः ॥ १२४ ।
अहो भाग्यमहो भाग्यं हरिभक्तिरतात्मनाम्‖ ।
त्रिदशैरपि पूज्यन्ते किमन्यैर्बहुभाषितैः** ॥ १२५ ।
तस्मात्समस्तलोकानां†† हितमेव मयोच्यते ।
हरिनामपरान्मर्त्त्यान्‡‡ न कलिर्बाधते क्वचित् ॥ १२६ ।
हरेर्नामैव नामैव नामैव मम जीवनम्§§ ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा¶¶ ॥ १२७ ।
एवं सनत्कुमारस्तु नारदेन महात्मना ।
सम्यक्प्रबोधितः सत्यं‖‖ परां निर्वृतिमाप ह*** ॥ १२८ ।
तस्माच्छृणुत††† विप्रेन्द्रा हरिनिष्ठितमानसाः‡‡‡ ।
प्रयान्ति परमं स्थानं पुनरावृत्तिदुर्लभम् ॥ १२९ ।

---

* महारिष्टोपशान्त्यर्थमिति (ङ) । † हरिभक्तिपराणाञ्च देहे पापी न जायते इति (ग) । ‡ हरिस्मरणनित्यानामिति (क) । § शिवनामपरात्मनामिति (ख) । ¶ सिध्यन्ति सर्व्वकर्म्माणीति (ख) ; कृतानि सर्व्वकर्म्माणीति (ग) । ‖ हरिपूजारतात्मनामिति (क), (ख) । ** (ङ) पुस्तके (१२४,१२५) श्लोकौ न स्तः । †† हरिभक्तिरतानाञ्चेति (ङ) । ‡‡ नारायणपरानिति (ङ) । §§ हरेर्नामैव केवलमिति (क) । ¶¶ अतः परं (ख) पुस्तके श्रीसूत उवाचेत्यधिकः पाठो वर्त्तते । ‖‖ सम्यक् प्रबोधितः सद्य इति (ख) ; सम्यक् प्रबोधितः सम्यक् इति (ङ) । *** परां निर्वृतिमाययौ इति (ख) । ††† शृणुध्वमिति (ख), (ग), (घ), (ङ) । ‡‡‡ हरिनिश्चितमानसा इति (ख), (ङ) ।

घोरे कलियुगे प्राप्ते हरिनामपरायणाः।
समस्तपापनिर्मुक्ता* यास्यन्ति परमां गतिम्॥ १३०।
हरिपूजापराणाञ्च† शिवपूजारतात्मनाम्‡।
न्यूनातिरिक्तता न स्यात् सर्व्वकर्म्मसु§ पण्डिताः॥ १३१।
सकृदुच्चारयन्त्येव हरेर्नाम कलौ युगे¶।
ते कृतार्था‖ महात्मानस्तेषां नित्यं नमो नमः॥ १३२।
इत्येतद्वः समाख्यातं नारदेन प्रभाषितम्।
सनत्कुमारमुनये बृहन्नारदसंज्ञितम्॥ १३३।
सर्व्वपापहरं पुण्यं सर्व्वदुःखनिवारणम्**।
समस्तपुण्यफलदं†† सर्व्वयज्ञफलप्रदम्‡‡॥ १३४।
ये पठन्त्यत्र विबुधाः श्लोकं श्लोकार्द्धमेव वा।
न तेषां पापबन्धस्तु कदाचिदपि जायते॥ १३५।
ये चात्राध्यायपठनं कुर्व्वन्ति सकृदप्युत§§।
ते यान्ति विबुधश्रेष्ठा ज्योतिष्टोमफलं द्विजाः॥ १३६।
विष्ण्वर्पितमिदं पुण्यं पुराणं सर्व्वकामदम्।

---

* समस्तबन्धनिर्मुक्ता इति (ङ)। † हरिपूजारतानाञ्चेति (ग)। ‡ शिवपूजापरात्मनामिति (ख)। § भवकर्म्मसु इति (ख), (ग), (ङ)। ¶ हरेर्नामैव केवलमिति (क)। ‖ कृतात्मा इति (क), कृतात्मान इति साधु, तथा कृते तु छन्दोदोषः स्यात्। ** सर्व्वारिष्टनिवारणमिति (ख)। सर्व्वानिष्टनिवारणमिति क्वचित् पाठः। †† समस्तकर्म्मफलदमिति (ग)। ‡‡ एतदर्द्धं (क) पुस्तके नास्ति। §§ विबुधर्षभा इति (क)। तत्र द्वितीयार्द्धमसङ्गतमस्ति। यथा—ते यान्ति विबुधश्रेष्ठा ज्योतिष्टोमफलं द्विजा इति।

भक्त्या* वदन्ति शृण्वन्ति तेषां पुण्यफलं शृणु ॥ १३७ ।
शतजन्मार्ज्जितैः पापैः सद्य† एव विमोचिताः ।
सहस्रकुलसंयुक्ताः प्रयान्ति परमम्पदम् ॥ १३८ ।
किं तीर्थैर्व्वा प्रदानैर्व्वा‡ किं तपोभिः किमध्वरैः§ ।
अहन्यहनि गोविन्दं तन्मयत्वेन शृण्वताम् ॥ १३९ ।
किं पुत्रदारैः किं भृत्यैः¶ किं मित्रक्षेत्रबान्धवैः‖ ।
अहन्यहनि गोविन्दं कीर्त्तयन्तश्च** शृण्वताम् ॥ १४० ।
एतत्पवित्रमारोग्यं धन्यं दुःखप्रणाशनम् ।
येषां गृहेषु लिखितं वर्त्तते†† तत्फलं शृणु‡‡ ॥ १४१ ।
न बाधन्ते§§ ग्रहास्तत्र भूतवेतालकादयः ।
तत्रैव सर्व्वश्रेयांसि वर्द्धन्ते च दिने दिने ।
न चाग्निर्बाधते तत्र न चौरादिभयन्तथा¶¶ ॥ १४२ ।
गवां कोटिसहस्रन्तु यो ददाति कुटुम्बिने ।
तत्फलं समवाप्नोति यश्चाध्यायपरायणः‖‖ ॥ १४३ ।

---

* तस्माद्वदन्तीति (ख)। † सर्व्वएवेति (क)। ‡ कि तीर्थैर्गोप्रदानैर्व्वेति (ङ)। § किं यज्ञैर्बहुदक्षिणैरिति (क)। ¶ श्लोकोऽयं (ख) पुस्तके नास्ति। किं पुत्रदारैः किं कृत्यैरिति (ङ)। ‖ किमन्न सुतबान्धवैरिति (क)। ** तन्मयत्वेनेति (ग)। †† पूज्यते इति (ख), (ग)। ‡‡ ये पठन्ति शृण्वन्ति च ते तरन्ति महद्भयादिति (ङ)। §§ न बाध्यन्ते इति बहुषु पाठः। ¶¶ चौरादेश्च भयं तथेति (ङ)। ‖‖ यश्चाध्यायस्य पाठनादिति (ख); यश्चाध्यायपरायणादिति (ग), (ङ); एतदर्द्धं (क) पुस्तके नास्ति।

गङ्गास्नानशतङ्कृत्वा ज्योतिष्टोमशतं तथा* ।
यत्फलं समवाप्नोति दशाध्यायस्य पाठनात्† ॥ १४४ ।
यत्र तत्पठते‡ शास्त्रं शृणुयाद्विष्णुतत्परः ।
तस्य पुण्यफलं वक्ष्ये शृणुध्वं सुसमाहिताः§ ॥ १४५ ।
शतजन्मार्ज्जितैः¶ पापैः सद्य एव विमुच्यते ।
शतवंशसमेतस्तु देहान्ते मोक्षमाप्नुयात् ॥ १४६ ।
यः पठेत्प्रातरुत्थाय यद्वत्र श्लोकविंशतिम् ।
ज्योतिष्टोमफलं सत्यं‖ गङ्गास्नानं दिने दिने** ॥ १४७ ।
एतत्पवित्रमारोग्यमवाच्यं दुष्कृतात्मनाम्†† । ‡‡
नीचासनगतः सर्व्वैः§§ शृणुयादिदमुत्तमम् ॥ १४८ ।
एतत्पुराणश्रवणमिहामुत्र सुखप्रदम् ।
वदतां शृण्वतां सद्यः¶¶ सर्व्वपापप्रणाशनम् ॥ १४९ ।

---

* ज्योतिष्टोमफलं लभेदिति (क) । † दशाध्यायपरायणा इति (क), (ख), (ङ) । दशाध्यायपरायणादिति (ग) । ‡ पठते इत्यार्षं पठतीति साधु । § तत्समाहिता इति (ङ) । एतदर्द्धं (क) पुस्तके नास्ति । ¶ शतजन्मकृतैरिति (ग) । ‖ ज्योतिष्टोमफलं तेषामिति (ग) । ** ज्योतिष्टोमफलं प्राप्य चान्ते मोक्षमवाप्नुयादिति (क) । †† दुष्कृतात्मने इति (क) । न वाच्यं दुष्कृतात्मनामिति (ख) । ‡‡ (ख) पुस्तके अतःपरं पुस्तकं न लिखितम् । §§ नीचासनगतैः सर्व्वैरिति (ङ) । ¶¶ शृण्वताञ्चैवेति (ङ) ।

दम्भाद्वा यदि वा मोहात् ये* शृण्वन्तीदमुत्तमम् ।
ते सर्व्वे पापनिर्म्मुक्ता यास्यन्ति च परां गतिम्† ॥ १५० ।

इति श्रीबृहन्नारदीयपुराणे हरिभक्तिमाहात्म्ये
अष्टात्रिंशोऽध्यायः ।

समाप्तश्चायङ्ग्रन्थः ।

---

* द्रोहाद्वा यदि वा मोहादिति (ङ) । † एष श्लोकः (क) पुस्तके एवमस्ति—यः शृणोति नरो भक्तः पुराणं देवनिर्म्मितम् । ते सर्व्वे पापनिर्म्मुक्ता यास्यन्ति परमां गतिमिति ॥

मुद्रक . स्काईलार्क प्रिंटर्ज, ११३५५ ईदगाह रोड, नई दिल्ली-११००५५